काशिका and महाभारतलक्षालङ्कार are widely known. His विवरणव्रणम् (in 2500 granthas) is a refutation of Pañcapādikāvivaraṇa of Prakāśātman and his commentary Tattvadīpana; and his Kalpalatā is an adverse criticism of Pramāṇamañjarī of Vādirājasūri, a Jaina Scholar.

रुग्मिणीशविजय (a mahākāvya of 19 cantos and 1240 verses), सरसभारतीविलास (in 12 vilāsas and 700 verses) and तीर्थप्रबन्ध (in 235 verses) are his principle काव्य works.

More than half of his works are in the nature of स्तोत्र[80]. In fact, no other Dvaita-writer has got such a variety of stotra works to his credit. They include दशावतारस्तोत्रम् (2), कृष्णस्तोत्रम् (7), हयग्रीवस्तोत्रम् (12), व्यासस्तोत्रम् (2), नरसिंहस्तोत्रम् (2), लक्ष्मीस्तोत्रम् (3), मध्वस्तोत्रम् (4), and others.

His commentary on Virāṭa Parvan is given as appendix - 2

*****

## Present Edition

Present edtion of Virāṭa Parvan with the commentary of Śrī Satyadharmatīrtha is prepared under the scheme of Vācaspati instituted by HRD, Govt of India.

It is a critical edition based on three Manuscripts made available to me. Of these two are available in my collection (Śrī Jayatīrtha Sanskṛt Mss Library, Vyasanakere); of these two, one is deonated by Late Prof K. T. Pandurangi of Bangalore and another one by Śrī C. J. Śrīnivasa Dās of Bellary. Third one was supplied to me by Late Pandit Chikkerūr Govindācarya of Harapanahaḷḷi. It was a xerox copy of the original available in his collection. First two manuscripts contain the text of Virāṭa Parvan also. whereas the last one contains only the

---

80 सुश्राव्यकाव्यस्तुतियुक्तिसारं गाथाश्च नानाविधशब्दहृद्याः ।
ज्ञानादिदाश्चाप्रतिमाः कवीन्द्रश्रीवादिराजो व्यतनोदसङ्ख्यान् ।।
- इति वृत्तरत्नसङ्ग्रहे iii. 31

commentary portion. All these manuscripts are in good condition. But errors of ommission and commiossion are plenty in all the Mss.

For the benefit of readers, the Virāṭa Parva Nirṇaya portion of Mahābhārata Tātparya Nirṇaya of Śrī Madhvacārya and Lakṣālankāra portion of Mahābhārata Lakṣālankāra of Śrī Vādirājatīrtha are given in appndices (1 & 2). An exaustive Śloka index of the Virāṭa Parva portion is given in appendix-3. I am greatful to all the pesrons who have provided Mss for my use.

I offer My sincere Praṇámás to the holy feet of Śrī Viśveśatīrtha Swāmiji of Pejáwar Maṭh, Uḍupi, the founder, Patron of the Pūrṇaprajña Samśodhana Mandiram of Bangalore; he is the pontiff for excellence in the present times, performing fifth Paryāya Pūjā of Lord Śrī Kṛṣṇa at Uḍupi.

I am highly thankful to Dr. A. V. Nāgasampige, Director, Pūrṇaprajña Samśodhana Mandiram for his full co-operation in preparing this volume. I record my greatfulness to HRD Department, Govt of India for giving me an opportunity to undertake this critical edition of Virāṭa Parvan of Mahābhārata with the commentary of Śrī Satyadharmatīrtha.

My student Śrī Ānanda Padmanābha (Sudarśan), Śrī Pravīṇ Kaṭṭi, and my son Dr. Jayant P. Vyāsanakere have gone throgh the proofs of this work.

Śrī Vyāsamadhwa Samśodhana Pratiṣṭhāna, assisted by Śrī Prahlāda Deśapāṇḍe of Bangalore, has done the DTP work of this edtion. I also record my thanks to it.

Bangalore
19-08-2017

**Dr. Vyāsanakere Prabhañjanācārya**

# विषयानुक्रमणिका

## महाभारतम् - विरापर्व १ - ५०३

*****

# महाभारतम् - विराटपर्व

## श्रीसत्यधर्मतीर्थश्रीचरणविरचितव्याख्यासंवलितम् ।

रामव्यासहयग्रीवनरसिंहान् गुरूनपि ।
प्रणम्यार्यान् व्यातनोमि विराटोद्योगपर्वणी ॥ १ ॥

भारतद्रुमतः पर्वण्यादौ सङ्ग्रहपूर्वतः ।
स्वयं भगवता प्रोक्तो 'विराटोद्योगसारवान्' ॥ २ ॥

इति प्रववृते चेतो विवृतावेतयोर्मम ।
सारांशग्राहिजनता नन्दत्वन्या विनिन्दतु ॥ ३ ॥

हर्षामर्षौ ततः कार्यं पारमेतद्गुरोरिदम् ।
कालतः फलपुष्पादेर्लोके दृष्टोऽन्यथाभवः ॥ ४ ॥

सारस्तेनेति श्रीमन्तो गीताभाष्ये तथाऽवदन् ।
अतोऽपि व्याकरिष्येते एतन्मात्रप्रतिश्रुतिः ॥ ५ ॥

*****

# १. पाण्डवप्रवेशपर्व

## १. प्रथमोऽध्यायः

( विराटनगरेऽज्ञातवासाय पाण्डवानां गुप्तमन्त्रणा )

**नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।**
**देवीं सरस्वतीं व्यासं ततो जयमुदीरयेत् ॥ १ ॥**

गीताभाष्ये–

'देहोऽयं मे सदानन्दो नायं प्रकृतिनिर्मितः ।
परिपूर्णश्च सर्वत्र तेन नारायणोऽस्म्यहम् ।'[१]

---

१. - गीताभाष्योद्धृतब्रह्मवैवर्तपुराणवचनम् (२/७२)

'आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।
अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः' ।

तस्मात् सर्वदा सर्वरूपेषु अगणितानन्तगुणगणं नित्यं निरस्ताशेषदोषं च नारायणाख्यं परं ब्रह्म नमस्कृत्य । 'नारायणं नमस्कृत्य' इति श्लोकस्तु -

जयो नामेतिहासोऽयं कृष्णद्वैपायनेरितः ।
वायुर्नरोत्तमो नाम देवीति श्रीरुदीरिता ।।
नारायणो व्यास इति वाच्यवक्तृस्वरूपकः ।
एकः स भगवानुक्तः साधकेशो नरोत्तमः ।
उपसाधको नरश्चोक्तो देवी भाग्यात्मिका नृणाम् ।
सरस्वती वाक्यरूपा तस्मान्नम्या हि तेऽखिलाः ।

इत्याचार्यैरेव श्रीमन्महाभारततात्पर्यनिर्णये तृतीयेऽध्याये[1] व्याख्यातः । साधकेशः व्यासमुखाच्छ्रुतभारतार्थसाधकानां शुकादीनामीशः । उपसाधकः मुख्यसाधका-च्छास्त्रार्थज्ञप्तिसाधकः ।। १ ।।

**जनमेजय उवाच –**

**कथं विराटनगरे मम [2]पूर्वपितामहाः ।**
**अज्ञातवासमुषिता दुर्योधनभयार्दिताः ।। २ ।।**

---

१. म.भा.ता.नि (३/४-८)

२. तत्र पूर्वस्मिन् पर्वणि - 'दिष्ट्या पञ्चसु रक्तोऽसि दिष्ट्या ते षट्पदीजिता । द्वे पूर्वे मध्यमे द्वे च द्वे चान्त्ये साम्परायिके' इति, 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्यति' इति श्रुतिप्रसिद्धेष्वात्मदर्शनसाधनेषु शमदिषु रक्तः षडूर्मिलक्षणां षट्पदीं जातमात्रस्याशनापिपासे प्ररूढस्य शोकमोहौ वृद्धस्य जरामृत्यू इति लोके 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' इति वेदप्रसिद्धां जयतीत्युक्तम् । तां जितवता त्वव्यक्तलिङ्गेन स्थेयम् । आत्यन्तिक्यां कृत्यतायाम् तु व्यक्तलिङ्गेनापि भाव्यमित्येतत् पाण्डवाचरणप्रदर्शनेन दर्शयितुं विराटपर्वारभ्यते । तत्र वर्षत्रयोदशमिदं मत्प्रसादात् कुरूद्वहाः । विराटनगरे गूढा अविज्ञाताश्चरिष्यथ' इतिप्राक्कथितधर्मवाक्यार्थमनुवदन् जनमेजय उवाच कथमिति ।

- इति नीलकण्टीय भावदीपे

श्रुतदृढनिरूढवनवासचर्य आर्याणामतिदुःशकामज्ञातवासचर्यां विराटपुटभेदनाटनं श्रुत्वा कथय कथं तत्रावात्सुरिति तद्दौर्घट्योद्धाटनमुखेन जनमेजयः पृच्छति – **कथमिति** । मम पूर्वः पिता परीक्षित् । तत्पितुरभिमन्योरर्जुनादयः साक्षादसाक्षाद्वा पितर इति पितामहाः । [१]वेदद्रष्टॄणामुक्तगुणवत्त्वात् । चैत्रस्य गुरुकुलमित्यादि-वन्नित्यसापेक्षत्वात् पूर्वपितामहा इति समासः । पूर्वे चत्वारश्च पितामहोऽर्जुनश्चेति वा । किं दास्यसि वद मह्यम्, वदामीत्यतो वाऽऽह– **अममे**ति ।। न ममः ममता यस्य सः तस्य सम्बुद्धिः । निर्ममलोकोद्धरणमेव तत्प्रयोजनं नान्यदिति भावः । त्वयि नमद्दयेति वद स्वामिन्नित्यप्याह– **मम पूर्वे**ति ।। ममतापूर्वमेव यस्य तस्य सम्बुद्धिः । अज्ञातवासं स्वसङ्कल्पितमुद्दिश्य विराटनगरे कथ**मुषिताः** केन प्रकारेणावात्सुः । वसतेः क्तप्रत्यये यजादिसम्प्रसारणे 'वसतिक्षुधोः'[२] इति 'टि चासि वसि' इति षत्वे उषिता इति रूपम् । किमान्ध्यं तत्रेत्यत आह– दुर्योधनाद्यद्भयं तेनार्दिता उपद्रुता इति ।। केचित् अज्ञातवासं यथा भवति तथा कथमुषिता इति व्यातन्वते । किं वसति सति वासुदेवे वासः कथमिति कथय व्यथयेत्यतो वाऽऽह । विः विष्णुः । 'अकयप्रविसम्भूमसखहा विष्णुवाचकाः' । इत्येकाक्षरनिघण्टोः । कविरिति ।। कृष्णः न आट । नागत इति । स्वयं समादधे– **गर** इति ।। **गरे** विषे सत्यपि **पिता** पितामहो भीमः महः उत्सवश्च यथा उषितास्तद्वत् तद्द्वययोषिताः । 'यथा पितामहाद्याश्च पितरो नाम कीर्तिताः' इत्यैतरेयभाष्योक्तेः । प्रकारमात्रेऽवशिष्यते शङ्केति तात्पर्यम् । अत्र **चाटुः**–

[३]'विराटनगरे रम्ये कीचकादुपकीचकम् ।
अत्र क्रियापदं वक्तुमवधिर्ब्रह्मणो वयः[४] ।।' इति ।। २ ।।

---

१. विंशलक्षणतोऽनूनस्तपस्वी बहुवेदवित् ।
वेद इत्येव यं पश्येत् स वेदो ज्ञानदर्शनात् ।।-इतिविष्णुतत्त्वनिर्णयोदाहृतब्रह्माण्डपुराणवचनम्।

२. वसतिक्षुधोरिट् । पा.सू. (७/२/५२)

३. विराटनगरे राजन् कीचकादुपकीचकम् । अत्र क्रियापदं गुप्तमवधिर्ब्रह्मणो वयः ।। - इति पा. ।

४. विः, पक्षी, कीचकात् वेणोः कीचकान्तरं 'आट' बभ्राम । - इति अस्य उत्तरम् ।

**पतिव्रता महाभागा सततं ब्रह्मवादिनी ।**
**द्रौपदी च कथं ब्रह्मन्नज्ञाता दुःखिताऽवसत् ।। ३ ।।**

महान् भागो भागधेयं दैवमिति यावत् यस्याः सा । 'भागो भागधेयैकदेशयोः'[१] इति विश्वः । **ब्रह्मवादिनी** कृष्ण कृष्णेति वदन्ती ।। ३ ।।

**वैशम्पायन उवाच -**

**यथा विराटनगरे तव पूर्वपितामहाः ।**
**अज्ञातवासमुषितास्तच्छ्रुणुष्व नराधिप ।। ४ ।।**

**तवे**त्यादि व्याख्यातम् । **यथा** - येन प्रकारेण । **तत्** तं प्रकारम् ।। ४ ।।

**तथा स तु वरान् लब्ध्वा धर्माद्धर्मभृतांवरः ।**
**गत्वाऽश्रमं ब्राह्मणेभ्य आचख्यौ सर्वमेव तत् ।। ५ ।।**

**धर्मात्** यक्षीभूय पुनः स्वेन रूपेण प्रसन्नाद् यमात् । **वरान्** अरणीप्राप्तिप्रमुखान् । **अश्रमं** श्रमाभावो यथा भवति तथा **गत्वे**त्यन्वयः । **तत्** सर्वं तत्प्रसादनमासादनं वराणां च ।। ५ ।।

**कथयित्वा तु तत्सर्वं ब्राह्मणेभ्यो युधिष्ठिरः ।**
**अरणीसहितं तस्मै ब्राह्मणाय न्यवेदयत् ।। ६ ।।**

**तस्मै** यस्य यमेन हृतं तस्मै । कस्मैचिद् **ब्राह्मणाय अरणीसहितं** मन्थं । अरणीसहितं मन्थमिति अरणीहरणसमीरणात् ।। ६ ।।

**ततो युधिष्ठिरो राजा धर्मपुत्रो महामनाः ।**
**[२]सन्निवर्त्यानुजान् सर्वानिति होवाच भारत ।। ७ ।।**

**सन्निवर्त्य** समीपमाकारयित्वा । **इति** इति बुद्धिसन्निहितम् ।। ७ ।।

---

१. भागो रूप्यार्धके भाग्यैकदेशयोः । इति हैमः ।

२. सन्निकृष्येति पाठे अपि स एवार्थः । - इति नीलकण्टीय भावदीपे

**द्वादशेमानि वर्षाणि राष्ट्राद्विप्रोषिता वयम् ।**
**त्रयोदशोऽयं सम्प्राप्तः कृच्छ्रात् परमदुर्वसः ॥ ८ ॥**

**विप्रोषिताः** न सुखेन प्रोषणमिति **वि**गमयति । विप्रैर्ऋषिभिः सह उषिता इति वा । **राष्ट्रात् कृच्छ्रात्** कष्टादस्माभिः प्राप्तः राष्ट्रं विहायापीत्यस्मिन् पक्षे व्याख्येयम् । **दुर्वसः** दुःखेन वस्तुं योग्यः । सलन्तोऽयं शब्दः । **अयं** संवत्सरः ॥ ८ ॥

**[१]स साधु कौन्तेय इतो वासमर्जुन रोचय ।**
**संवत्सरमिमं यत्र [२]वसेमाविदिताः परैः ॥ ९ ॥**

**कौन्तेय** इत्यत्र सन्धिरविवक्षितः । यद्वा स त्वमपि **कौन्तेयो** यतोऽस्माभिः समदुःखसुख इति यावत् । **साधु** यथा भवति तथा । **वासं** निवासस्थानम् । **रोचय** रुचितं कुरु । आलोचयेति यावत् । **परैः** शत्रुभिरितरैश्च । तज्ज्येष्ठकनिष्ठानां सत्त्वेऽपि अर्जुनप्रतिप्रश्नस्तु बहुदेशसञ्चारित्वादित्यवधेयम् ॥ ९ ॥

**अर्जुन उवाच -**

**तस्यैव वरदानेन धर्मस्य मनुजाधिप ।**
**अज्ञाता विचरिष्यामो नराणां भरतर्षभ ॥ १० ॥**

**तस्यैव धर्मस्य वरदानेन**

यद्यपि स्वेन रूपेण चरिष्यथ महीमिमाम् ।
न वै विज्ञास्यते कश्चित् त्रिषु लोकेषु भारत ।
वर्षं त्रयोदशमिमं मत्प्रसादात् कुरूद्वहाः ।
विराटनगरे गूढा अविज्ञाताश्चरिष्यथ ।

---

१. वत्स्यामयितिपाठे अविदिता इति च्छेदः । - इति नीलकण्टीय भावदीपे

२. वत्स्येमाविदिताः परैः (इति गी. पाठः)

यद्वः सङ्कल्पितं रूपं मनसा यस्य यादृशम् ।
तादृशं तादृशं सर्वे च्छन्दतो धारयिष्यथ ।।'[१]

इत्यादिरूपेण । **नराणां** कर्तरि षष्ठी । 'न लोक...'[२] इति नञा निर्दिष्टमिति न षष्ठीनिषेधः । शेषत्वेन कर्तृबोध इति शेषिकी वा । नरैरविदिताः ।। १० ।।

**किन्तु वासाय राष्ट्राणि कीर्तयिष्यामि कानिचित् ।**
**रमणीयानि गुप्तानि तेषां किञ्चित् स्म रोचय ।। ११ ।।**

अत्र धर्मस्य द्वौ वरौ । 'चरिष्यथ महीमिमाम्' इत्यनेन यावन्महीसञ्चाराभ्यनुज्ञानस्य एकः । द्वितीयस्तु 'विराटनगरे गूढा अविज्ञाताश्चरिष्यथ' इति विशिष्य विराटनगर एव स्थित्यनुज्ञानरूपः । तत्र वैशम्पायनोक्तिगत- 'अर्जुन रोचय संवत्सरमिमं यत्र वत्स्यामः' इति धर्मप्रश्नः । किन्तु 'वासाय राष्ट्राणि' इत्यारभ्य

तेषां तु कतमो राजन् निवासस्तव रोचते ।
वत्स्यामो यत्र राजेन्द्र संवत्सरमिमं वयम् ।।

इत्यन्तं प्रश्नगर्भमर्जुनस्य प्रतिवचनम्. तथा, 'कुतो भयम्' इत्यन्तं धर्मवचनं च प्रथमवराभिप्रायेण । 'तस्यैव वरदानेन' इति अर्जुनोक्तश्लोकः 'मत्स्यो विराट्' इत्यारभ्य 'विराटनगरे तात' इत्यादिः धर्मस्य निष्कृष्योक्तिश्च द्वितीयवराभिप्रायेणेति । **किन्तुना** ध्वन्यत इति सर्वं समञ्जसम् । **गुप्तानि** तत्तद्राजैः ।। ११ ।।

**सन्ति रम्या जनपदा बह्वन्नाः परितः कुरून् ।**
**पाञ्चालाश्चेदिमत्स्याश्च शूरसेनाः पटच्चराः ।। १२ ।।**
**दशार्णा नवराष्ट्राश्च मल्लाः शाल्वा युगन्धराः ।**
**[३]कुन्तीराष्ट्रं च विपुलं सुराष्ट्रावन्तयस्तथा ।। १३ ।।**

---

१. वनपर्वणि । (३१४/१७-१९)

२. न लोकव्ययनिष्ठाखलर्थतृनाम् । पा.सू.(२/३/६९)

३. अकुन्तिराष्ट्रं च (इति गी. पाठः)

चेदयश्च मत्स्याश्च । एवं **सुराष्ट्रावन्तय** इत्यत्रापि । **बह्वन्नाः** नायं बहुच् ।।१२-१३।।

**तेषां तु कतमो राजन् निवासस्तव रोचते ।**
**वत्स्यामो यत्र राजेन्द्र संवत्सरमिमं वयम् ।। १४ ।।**

**निवासः** स्थानं **तव** तुभ्यम् ।। १४ ।।

**युधिष्ठिर उवाच-**

**[1]एवमेतन्महाबाहो यथा स भगवान् प्रभुः ।**
**अब्रवीत् सर्वभूतेशस्तत् तथा न तदन्यथा ।। १५ ।।**

तस्यैव वरदानेनेत्यर्जुनोक्तस्यानुमतिमाह– **एवमिति** ।। **प्रभुः** धर्मः । **तत्** तथा अन्याविदिततया । **तथा** संवत्सरं निवसनं भविष्यतीति वचनं सत्यमेव **न तदन्यथा** मिथ्या नेत्यर्थः ।। १५ ।।

**अवश्यमेव वासार्थं रमणीयं शिवं सुखम् ।**
**सम्मन्त्र्य सहितैः सर्वैर्वस्तव्यमकुतोभयैः ।। १६ ।।**

**शिवं** भद्रं सुखयतीति **सुखम्** । स्थानं **सम्मन्त्र्य** आलोच्य । **अकुतोभयैः** कुतोऽपि भयं नास्ति येषां ते तथा तैः ।। १६ ।।

**मत्स्यो विराटो बलवानभिरक्तोऽथ पाण्डवान् ।**
**धर्मशीलो वदान्यश्च वृद्धश्च [2]सुमहायशाः ।। १७ ।।**

**विराटनगरे तात संवत्सरमिमं वयम् ।**
**कुर्वन्तस्तस्य कर्माणि विहरिष्याम भारत ।। १८ ।।**

---

१. श्रुतमेतन्महाबाहो (इति गी.पाठ)

२. सततं प्रियः । (इति गी. पाठः)

यमोक्तं कटाक्षयति– **मत्स्य इति** ।। आकारगूहनस्य सदा बुद्धिसन्निहितत्वात् **पाण्डवान्** इति परोक्षोक्तिः । **वृद्ध** इत्युक्त्या तत्सेवा **दुष्कृतानापादिकेति** द्योतयति ।। १७-१८ ।।

**[१]यानि यानि च कर्माणि तानि वक्ष्यामहे वयम् ।**
**कर्तुं योग्याः स्म यत्कर्म ब्रवीध्वं कुरुनन्दनाः ।। १९ ।।**

**वक्ष्यामहे** वक्ष्यामः । केचित्तु - 'वहते रूपम्' इति व्याख्याय निर्वोढुं शक्ष्यामह इत्यर्थ इत्याहुः । वयं **यानि यानि कर्माणि** कर्तुं योग्यास्**तानि** वक्ष्यामः । यच्छब्दद्वये तच्छब्दद्वयनियमपक्षे तानीति शेषः । विस्तरस्तु- 'ते ते पिबन्तु जिह्वया' इति ऋग्भाष्यटीकादितोऽवसेयः । यूयं **यत्कर्म कर्तुं योग्यास्तद्ब्रवीध्वम्** । सर्वान् प्रतीयमुक्तिरिति सन्निकृष्यानुजान् सर्वानित्युक्त्या ज्ञायत इति बहुवचनम् । **योग्या** इत्यस्यविधेयविशेषणत्वान्न दोषः ।। १९ ।।

**अर्जुन उवाच -**

**नरदेव कथं कर्म राज्ये तस्य करिष्यसि ।**
**विराटनृपतेः साधो [२]वत्स्यसे केन कर्मणा ।। २० ।।**

**कथं कर्म करिष्यसि** । मूर्धाभिषिक्तत्वात् तवेत्यभिप्रायः । अपायतरणे उपायान्तराभावात् कार्यमेव कर्मेति वदसि चेत्, तत्किं रूपमिति पृच्छति– **केनेति** ।। **वत्स्यसे** लट् वत्स्यसि ।। २० ।।

**मृदुर्वदान्यो ह्रीमांश्च धार्मिकः [३]सत्यसङ्गरः ।**
**[४]राजंस्त्वमापदा(ऽ)क्लिष्टः किं करिष्यसि पाण्डव ।।२१।।**

---

१. यानि यानि च कर्माणि तस्य वक्ष्यामहे वयम् ।
आसाद्य मत्स्यं यत्कर्म प्रब्रूत कुरुनन्दनाः ।। (इति गी.पाठः)

२. रंस्यसे । (इति गी.पाठः)

३. सत्यविक्रमः । (इति गी. पाठः)

४. राजन् त्वमापदाऽऽकृष्टः । (इति गी.पाठः)

तद्दौर्घट्यमाह श्लोकद्वयेन– **मृदुरिति** ।। कर्मकरणमापद्वयाप्तं त्वं तु त्वया **अक्लिष्टः किं** कर्म **करिष्यसि** ।। २१ ।।

**न दुःखमुचितं किञ्चिद् राजा वेद यथा जनः ।**
**स इमामापदं प्राप्य कथं घोरां तरिष्यसि ।। २२ ।।**

**जनः** पामरः **उचितं** स्वयोग्यम् । **दुःखं वेद** तथा भवान्न वेद, यतस्त्वं **राजा** । 'जनो लोके महर्लोकात्परे लोके च पामरे' इति विश्वः ।। २२ ।।

**युधिष्ठिर उवाच -**

**शृणुध्वं यत् करिष्यामि कर्म वै कुरुनन्दनाः ।**
**विराटमनुसम्प्राप्य राजानं मनुजर्षभाः ।। २३ ।।**

**[1]सभास्तारो भविष्यामि तस्य राज्ञो महात्मनः ।**
**[2]कङ्को नाम द्विजो भूत्वा मताक्षः प्रियदेवनः ।। २४ ।।**

**कङ्को** नाम प्रसिद्धः । अन्यनाम विहायैतद्ग्रहणमस्य स्वपितृनामत्वात् स्वस्य तदवतारत्वात् छद्मद्विजत्वाच्च न मम मिथ्याभाषितेति सूचनाय । 'कङ्कः च्छद्मद्विजे ख्याते लोहपृष्टकृतान्तयोः' इति विश्वः । **सभास्तारः** सभां स्वोपवेशनेन स्तृणात्याच्छादयतीति स तथा । 'स्तृञ् आच्छादने' इति धातुव्याख्यानात् । **नाम** नाम्ना । **मताक्षः** ज्ञाताक्षहृदयः । अरण्यपर्वणि नलोपाख्यानान्त्यभागे धर्मस्य बृहदश्वेन तद्विद्योपदेशकथनात् । तथाहि तद्वाक्यम्- 'भयं पश्यसि' इत्यारभ्य-

१. सभास्तारो भविष्यामीत्यत्र 'सभासदः सभास्ताराः सभ्याः सामाजकाश्च ते' इत्यभिधानात् सभास्तारः सभ्यः सभायां पूज्य इति यावत् । - इति लक्षालङ्कारे ।

२. कङ्कश्छद्मद्विजे ख्यातो लोहपृष्टकृतान्तयोः । - इति विश्वकोशात्

वेदाक्षहृदयं सर्वमहं सत्यपराक्रम ।
उपपद्यस्व कौन्तेय प्रसन्नोऽहं ब्रवीमि ते ॥[१] इति ॥ २४ ॥

**[२]वैदूर्यान् काञ्चनान् दान्तान् फलैर्ज्योतीरसैः सह ।**
**[३]कृष्णाक्षान् लोहिताक्षांश्च निर्वत्स्यामि मनोरमान् ॥२५॥**

**वैदूर्यान्** वालवाय भवं वैदूर्यम् । 'विदूराञ्'[४] इति स्मरणात् । तदात्मकान् । **दान्तान्** दन्तविकृतान् । **ज्योतीरसैः** ज्योतिर्भिः प्रकाशमानैः रसैः पारदैः । तद्बिन्दुसहितैः **फलैः** फलकैः 'ज्योतिः प्रकाशे दृशि तारकासु ।' 'फलं हेतुसमुत्थे स्यात् फलके । 'रसो देहधात्वम्बुपारदे' इति विश्वस्मिन् विश्वः । **कृष्णाक्षान् लोहिताक्षांश्च** स्थापयित्वा फलानि तत्तद्गृहेषु **निर्वत्स्यामि** निवासयिष्यामि । यद्वा फलैरितरफलानि निर्वत्स्यामि वधिष्यामि । वधधातोर्लृटि रूपम् ॥ २५ ॥

**विराटराजं रमयन् सामात्यं सहबान्धवम् ।**
**नच मां वेत्स्यते कश्चित् तोषयिष्ये च तं नृपम् ॥ २६ ॥**

**वेत्स्यते** वेत्स्यति ज्ञास्यति ॥ २६ ॥

**आसं युधिष्ठिरस्याहं पुरा प्राणसमः सखा ।**
**इति वक्ष्यामि [५]नृपतिं यदि मां सोऽनुयोक्ष्यते ॥ २७ ॥**

---

१. वनपर्वणि । (७९/१९)

२. वैडूर्यकाञ्चनानित्यत्रवैडूर्यकाञ्चनान्वैडूर्यकाञ्चनखचितान् अक्षानक्षक्रीडासाधनान्, कृष्णाक्षान् कृष्णवर्णानक्षक्रीडासाधनान्, लोहिताक्षान् लोहितवर्णनक्षक्रीडासाधनान् सुवेष्टितान् चीलान्तःस्थापितान् धारयिष्ये विराटं धारयिष्ये तस्मै दास्यामीत्यर्थः ।- इति लक्षालङ्कारे ।

३. कृष्णान् लोहितवर्णांश्च । (इति गी.पाठः)

४. 'विदूराञ् ञ्यः' पा.सू. (४/३/८४) । अस्यार्थविशेषः कौमुद्याऽवगन्तव्यः ।

५. राजानम् । (इति गी.पाठः)

**स** नृपः **अनुयोक्ष्यते** पृच्छति ।। २७ ।।

> [१]इत्येतत् ते मयाऽऽख्यातं विहरिष्याम्यहं यथा ।
> वृकोदर विराटे त्वं वत्स्यसे केन कर्मणा ।। २८ ।।

**।। इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेश पर्वणि प्रथमोऽध्यायः ।।**

यद्यपि **कुरुनन्दना** इति [२]पूर्वमुक्तेरिदानीमेतद्वो **मयाऽऽख्यातं** इति वक्तव्यम्, तथापि साक्षात् स्वानन्तरजव्यापारश्रवणकौतुक्येन **ते** इत्युक्तिः ।। २८ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां प्रथमोऽध्यायः ।।**

*****

# २. द्वितीयोऽध्यायः

**( युधिष्ठिरेण स्वस्य यतिवेषपरिग्रहेण विराटसभास्तारीभवनकथनम् )**

**श्रीभीमसेन उवाच -**

> **पौरोगवो ब्रुवाणोऽहं वल्लवो नाम [३]नामतः ।**
> **उपस्थास्यामि राजानं विराटमिति मे मतिः ।। १ ।।**

**पौरोगवः** महानसाध्यक्षः 'पाकस्थानं महानसे । पौरोगवस्तदध्यक्षे' इत्यमरः । **वल्लवः नाम** प्रसिद्धः । **नामतः** नाम्ना सूपकारत्वोपाधिना वा । तस्मिन् कर्मणि **अमतः** असम्मतो **न** इति वा । आमस्य अपक्वस्य भावो न येन स इति वा ।

---

१. इत्येतद् वो । (इति. गी.पाठः)

२. १/१९, १/२३

३. भारत । (इति गी.पाठः)

अपक्वपदार्थकर्ता नेति यावत् । 'वल्लवः सूपकारस्तु' 'वल्लवः सूपकारे स्याद्भीमसेने च वल्लवः' इत्यमरविश्वौ ।। १ ।।

**सूपानस्य करिष्यामि कुशलोऽस्मि महानसे ।**
**कृतपूर्वाणि [१]चैवास्य व्यञ्जनानि सुशिक्षितैः ।। २ ।।**

**सूपान्** द्विदलपदार्थान् **महानसे** तद्व्यापारे तत्करणे कारणे च । **अस्य** विराटस्य **सुशिक्षितैः** ।। २ ।।

**तानप्यभिभविष्यामि प्रीतिं सञ्जनयन्नहम् ।**
**आहरिष्यामि दारूणां निचयान् महतोऽपि च ।। ३ ।।**

तदीयैः तत् महादारुभाराहरणरूपं कर्मेत्यन्वयः ।। ३ ।।

**[२]तत्प्रेक्ष्य विपुलं कर्म राजा [३]प्रीतो भविष्यति ।**
**[४]अमानुषाणि कुर्वाणस्तानि कर्माणि भारत ।। ४ ।।**

**अमानुषाणि कुर्वाणः** ।। ४ ।।

**राज्ञस्तस्य [५]परिप्रेष्या मंस्यन्ते मां यथा नृपम् ।**
**भक्ष्यान्नरसपानानां भविष्यामि तथेश्वरः ।। ५ ।।**

योऽहं तं **मां** नृपं यथा मंस्यते तथा **मंस्यन्ते** सत्करिष्यन्तीति यावत् । **ईश्वरः** यथेष्टविनियोक्ता ।। ५ ।।

---

१. यान्यस्य । (इति गी.पाठः)

२. यत्प्रेक्ष्य । (इति गी.पाठः)

३. संयोक्ष्यते स माम् । (इति गी.पाठः)

४. 'अश्विनौ वै देवानां भिषजावश्विनावध्वर्यू' इति श्रुतेः । - इति नीलकण्टीय भावदीपे

५. परे प्रेष्याः । (इति गी.पाठः)

**द्विपा वा बलिनो राजन् वृषभा वा महाबलाः ।**
**विनिग्राह्या यदि मया निग्रहीष्यामि तानपि ॥ ६ ॥**

**विनिग्राह्या** इति **यदि** राजा सूचयेत् ॥ ६ ॥

**ये च केचिन्नियोत्स्यन्ति समाजेषु नियोधकाः ।**
**तानहं निहनिष्यामि [१]प्रीतिं तस्य विवर्धयन् ॥ ७ ॥**

**समाजेषु** परिषत्सु **नियोत्स्यन्ति** द्वन्द्वयुद्धं कुर्वन्ति । **निहनिष्यामि** मर्मसु ताडयामि । **तस्य** राज्ञः ॥ ७ ॥

**नत्वैतान् युद्ध्यमानान् वै हनिष्यामि कथञ्चन ।**
**[२]तथैव तान् यातयिष्ये यथा यास्यन्ति न क्षयम् ॥ ८ ॥**

**युद्ध्यमानान्** लीलया । तस्यैव विवरणम्– **तथैवेति** ॥ ८ ॥

**[३]आरालिको गोविकर्ता सूपकर्ता नियोधकः ।**
**आसं युधिष्ठिरस्याहमिति वक्ष्यामि पृच्छतः ॥ ९ ॥**

---

१. रतिम् । (इति गी.पाठः)

२. तथैतान् पातयिष्यामि । (इति. गी.पाठः)

३. 'आरालिको गोविकर्त्ता सूपकर्त्ता नियोधकः' इति । अरालाः मत्तगजास्तैः सह क्रीडति तान् जयति वा आरालिकः । अरालः कुटिले सर्जरसेवै मत्तदन्तिनि' इति विश्वः । गोविकर्त्ता गवां महतां बलीवर्दानामपि विकर्त्ता । दमनेन विकृतिजनकः । वृषभान् महाबलान् निग्रहीष्यामीत्युपक्रमात् । सूपकर्त्ता मुद्गादिविकारकर्ता । पक्षे सुतरामुपकर्त्ता । नियोधकः । मारणवर्जं मल्लयुद्धकर्ता । पक्षे नितरां योधकः । विषमश्लोकीकृतस्तु आरालिकः प्रकृतिनां गुणदोषसूचको हस्तिदमनको वा । 'तथा च विक्रमादित्यः 'आरालिकाः सूचनको हस्तनिां दमस्तथा' इति । गोविकर्त्ता गवां वाचां विकर्तागद्यपद्यादिभेदानां प्रयोक्तेति । केचित् 'आरालिकोऽत्र पाकी स्यात् सूपकर्त्ता तु शाककृत् । 'तैलान्नं पचते यस्तु गोविकर्ता स उच्यते' इत्यप्युदाहरंति तत्र मूलं द्रष्टव्यम् । - इति नीलकण्टीय भावदीपे

'आरालिका आन्धसिकाः' इत्यमरः । 'आरालिकः सूचनको हस्तिनां दमकस्तथा' इति विक्रमादित्यः । **गोविकर्ता** । वृषभदमको वा । गोक्षीर-दध्यादिविकृतपदार्थविशेषकर्ता वा । तदा तं च न विशेषकर्ता वा । 'गौर्नाके वृषभे', 'गौः स्वर्गे वृषभे', 'स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले' इति नानार्थध्वनिमञ्जरी-विश्वामराः । 'गोभिः श्रीणीत मत्सरम्' इति [1]श्रुतेः । कार्ये कारणशब्दव्यवहृतिः । **सूपकर्ता** द्विदलरसविशेषकर्ता । **नियोधकः** निर्मारणं रणकर्ता । **पृच्छतो** राज्ञः पुरतः प्रष्टॄन् प्रति वा ॥ ९ ॥

**आत्मानमात्मना रक्षंश्चरिष्यामि विशाम्पते ।**
**इत्येतत् प्रतिजानामि विहरिष्याम्यहं यथा ॥ १० ॥**

**आत्मानमात्मना** इत्यनेन न मद्रूपगूहने धर्मवरेण कृत्यमिति सूचयति । **यथा** सम्यक् ॥ १० ॥

**युधिष्ठिर उवाच -**

**यमग्निर्ब्राह्मणो भूत्वा समागच्छन्नृणां वरम् ।**
**दिधक्षुः खाण्डवं दावं दाशार्हसहितं पुरा ॥ ११ ॥**

**यम्** इत्यस्य सोऽयं धनञ्जयं इत्युत्तरेणान्वयः । **दिधक्षुः** दग्धुमिच्छुः । **दावं** वनम् । 'दवदावौ वनारण्यवह्नी', 'दवो दाव इति ख्यातो वनाग्निवनयोरपि' इत्यमरविश्वौ । **पुरा** इन्द्रप्रस्थवासकाले ॥ ११ ॥

**महाबलं महाबाहुमजितं कुरुनन्दनम् ।**
**सोऽयं किं कर्म कौन्तेय करिष्यति धनञ्जयः ॥ १२ ॥**

**योऽयमासाद्य तं दावं तर्पयामास पावकम् ।**
**विजित्यैकरथेनेन्द्रं हत्वा पन्नगराक्षसान् ॥ १३ ॥**

---

१. ऋग्वेदे (९/४६/४)

**आसाद्य** प्राप्य शरबन्धादिना विदारणं प्राप्येति वा ।। १३ ।।

**वासुकेः सर्पराजस्य स्वसारं [१]हतवांश्च यः ।**
**श्रेष्ठो यः प्रतियोधानां सोऽर्जुनः किं करिष्यति ।। १४ ।।**

**स्वसारं** तक्षकभार्यां अश्वसेनमातरम् । **हतवान्** । खाण्डवदाहे उलूपिकेति व्याख्यानं तु तत्प्रार्थनयैवार्जुनगमनोक्तेस्तत्कथाविरुद्धम् । तथा हृतवानित्यपपाठः । 'अश्वसेनोऽभवत् तत्र तक्षकस्य सुतो बली' इत्यारभ्य 'तस्याः शरेण तीक्ष्णेन पृथुधारेण पाण्डवः । शिरश्छिच्छेद गच्छन्त्याः' इत्यादिपर्वण्युक्तत्वात् हतवानित्येव पाठः । सा च कथा - 'तथा पर्याकुले तस्मिन्' इत्यारभ्य आध्यायसमाप्ति आदिपर्वणि ज्ञेया ।। १४ ।।

**सूर्यः प्रतपतां श्रेष्ठो द्विपदां ब्राह्मणो वरः ।**
**आशीविषश्च सर्पाणामग्निस्तेजस्विनां वरः ।। १५ ।।**

**सर्पाणां** साधारणानां **आशीविषः** आशिषोः आखोर्वा विषं यस्य सः । प्रथमपक्षे पृष्टोदरादित्वेनान्त्यलोपः । 'आशीस्तालुगता दंष्ट्रा तया विद्धो न जीवति' इति भानुः । द्वितीये 'आशीमिव कलामिन्दोः' इति राजशेखरः इति भानुः ।। १५ ।।

**आयुधानां यथा वज्रं ककुद्मी च गवां वरः ।**
**ह्रदानामुदधिः श्रेष्ठः पर्जन्यो वर्षतां वरः ।। १६ ।।**

**गवां** धेनूनाम् । **पर्जन्यः** मेघचक्राभिमानी ।। १६ ।।

**धृतराष्ट्रश्च नागानां हस्तिष्वैरावणो वरः ।**
**पुत्रः प्रियाणामधिको भार्या च सुहृदां वरा[२] ।। १७ ।।**

---

१. हृतवांश्च । (इति गी.पाठः)

२. गिरीणां प्रवरो मेरुर्देवानां मधुसूदनः ।

**धृतराष्ट्रः** तन्नामकनागराजः । **नागानां** सर्पविशेषाणाम् । ऐरावणैरावतावेकार्थौ पाठौ ।। १७ ।।

[१]यथैतानि विशिष्टानि जात्यां जात्यां वृकोदर ।
एवं युवा गुडाकेशः श्रेष्ठः सर्वधनुष्मताम् ।। १८ ।।

**जात्यां जात्यां** तत्तज्जातौ ।। १८ ।।

सोऽयमिन्द्रादनवरो वासुदेवान्महाद्युतिः ।
गाण्डीवधन्वा बीभत्सुः श्वेताश्वः किं करिष्यति ।। १९ ।।

**वासुदेवात्** निमित्तात् ।। १९ ।।

उषित्वा पञ्चवर्षाणि सहस्राक्षस्य वेश्मनि ।
अस्त्रयोगं समासाद्य स्ववीर्यान्मानुषाद्भुतम् ।।
दिव्यान्यस्त्राणि प्राप्तानि[२] देवरूपेण भास्वता ।। २० ।।

**पञ्च वर्षाणि** भिन्नैः पदैः । ऐकपद्ये विशेषणसमासः । **मानुषाद्भुतम्** । **अस्त्रयोगम्** अस्त्रग्रहणोपायम् । **देवरूपेण** देवोत्तमेन । 'रूप उपरिभावे' इति धातुः । रुद्रादिना वक्त्रा निमित्तेन **भास्वता** अर्जुनेन **प्राप्तानि** । स **किं करिष्यति** इत्यन्वयः ।। २० ।।

यं मन्ये द्वादशं रुद्रमादित्यानां त्रयोदशम् ।
वसूनां नवमं मन्ये ग्रहाणां दशमं तथा ।। २१ ।।

---

ग्रहाणां प्रवरश्चन्द्रः सरसां मानसं वरम् ।। (इत्येकः अधिकः श्लोकः गी.पाठे) ।

१. 'सैरन्ध्री परवेश्मस्था शिल्पकृत् स्ववशा स्त्रियाम् ।
वर्णसङ्करसम्भूतस्त्रीमहिल्लिकयोरपि' इति विश्वः ।। - इति नीलकण्टीय भावदीपे

२. 'चाप्तानि' इति गी.पाठः ।

**द्वादशं रुद्रम्** । अभूतरूपकम् । एवमुत्तरत्र ।। २१ ।।

**यस्य बाहू समौ दीर्घौ ज्याघातकठिणत्वचौ ।**
**दक्षिणे चैव सव्ये च गवामिव वहः कृतः ।। २२ ।।**

**दक्षिणे सव्ये च** भागे । **गवां** वृषभाणाम् **वहः** स्कन्धः स इव स्कन्धः कृतः । सकिण इति यावत् । 'वहः स्याद् वृषभस्कन्धे देशे' इति विश्वः ।। २२ ।।

**हिमवानिव शैलानां समुद्रः सरितामिव ।**
**त्रिदशानां यथा शक्रो वसूनामिव हव्यवाट् ।। २३ ।।**

**मृगाणामिव शार्दूलो गरुडः पततामिव ।**
**वरः सन्नह्यमानानामर्जुनः किं करिष्यति ।। २४ ।।**

**अर्जुन उवाच -**

**प्रतिज्ञां षण्डकोऽस्मीति करिष्यामि महीपते ।**
**ज्याघातौ हि महान्तौ मे संवर्तुं मम दुष्करौ ।। २५ ।।**

**संवर्तुम्** आच्छादयितुम् ।। २५ ।।

**वलयैश्छादयिष्यामि बाहू किणकृताविमौ ।**
**कर्णयोः प्रतिमुच्याहं कुण्डले [१]ज्वलनोपमे ।। २६ ।।**

**वलयैः** कङ्कणैः 'वलयं कङ्कणेऽपि च' इति विश्वः । **प्रतिमुच्य** आबद्ध्य ।।२६।।

**पिनद्धकम्बुः पाणिभ्यां तृतीयां प्रकृतिं गतः ।**
**वेणीकृतशिरा राजन्नाम्ना चैव बृहन्नला ।। २७ ।।**

---

१. ज्वलनप्रभे । (इति गी.पाठः)

**पाणिभ्यां** मदीयाभ्यामेव **पिनद्धकम्बुः** पाण्योः धृतवलयः । केचित् तु – '**ज्वलनोपमे** प्राक् स्थिते कुण्डले प्रतिमुच्य त्यक्त्वा कर्णयोः स्वपाणिभ्यां पिनद्धौ कम्बू येन स तथा भूत्वा । **तृतीयां प्रकृतिं** क्लीबतां गता भविष्यामि' इति व्याचक्षते । 'कम्बुर्ना वलये शङ्खे' इत्यमरः । अवेणीत्वेन सम्पद्यमानं वेणीकृतम् । वेण्या कृतं पर्याप्तं वा पूर्णमिति यावत् । शिरो यस्य स तथा । 'कृतं युगे च पर्याये' इति विश्वः ॥ २७ ॥

**पठन्नाख्यातिकाश्चैव स्त्रीभावेन पुनःपुनः ।**
**रमयिष्ये महीपालमन्यांश्चान्तःपुरे जनान् ॥ २८ ॥**

**आख्यायिकाः** पूर्वराजचरितानि ॥ २८ ॥

**गीतं नृत्यं विचित्रं च वादित्रं विविधं तथा ।**
**शिक्षयिष्याम्यहं राजन् विराटस्य [१]पुरे स्त्रियः ॥ २९ ॥**
**प्रजानां समुदाचारं बहु कर्म कृतं वदन् ।**
**छादयिष्यामि कौन्तेय माययाऽऽत्मानमात्मना ॥ ३० ॥**

**समुदाचारं** सदाचारं । **कृतं** ताभिः कृतम्, मया कृतं वा । **आत्मना** यत्नेन । **आत्मानं** शरीरम् ॥ ३० ॥

**युधिष्ठिरस्य गेहे वै द्रौपद्याः परिचारिका ।**
**उषितास्मीति वक्ष्यामि पृष्टो राज्ञा च पाण्डव ॥ ३१ ॥**

**परिचारिका** सती ॥ ३१ ॥

**एतेन विधिना च्छन्नः कृतकेन यथा(ऽ)नलः ।**
**विहरिष्यामि राजेन्द्र विराटभवने सुखम् ॥ ३२ ॥**

**॥ इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि द्वितीयोऽध्यायः ॥**

१. पुरस्त्रियः । (इति गी.पाठः)

**कृतकेन** कर्कोटकदंशेन । **नलो** राजा यथा कृतकेन उपरिस्थापितेन भस्मा-दिना । **अनलो** अग्निर्यथा तथेति वा ।। ३२ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वण: व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां द्वितीयोऽध्याय: ।।**

*****

# ३. तृतीयोऽध्याय:

**( नकुलसहदेवयो: द्रौपद्याश्च विराटनगरे अश्वपालकादितया निवासकथनम् )**

**वैशम्पायन उवाच -**

**इत्येवमुक्त्वा पुरुषप्रवीरस्तथाऽर्जुनो धर्मभृतां वरिष्ठ: ।**
**वाक्यं तथाऽसौ विरराम भूयो नृपोऽपरं भ्रातरमाबभाषे ।।१।।**

**वाक्यं** धर्मवाक्यं प्रश्नरूपं प्रत्येवमुक्त्वा **विरराम** विपूर्वकत्वाद्रमे: परस्मैपदता । **धर्मभृतां** धनुर्धारिणां 'धर्मश्चापे चोपनिषद्यपि' इति विश्व: ।। १ ।।

**युधिष्ठिर उवाच -**

**किं त्वं नकुल कुर्वाणस्तत्र तात चरिष्यसि ।**
**कर्म तत्त्वं समाचक्ष्व राज्ये तस्य महीपते: ।**
**सुकुमारश्च शूरश्च दर्शनीय: सुखोचित: ।। २ ।।**

**किं कर्म तत्त्वं** यथार्थं यथा भवति तथा समाचक्ष्व । **दर्शनीय:** सुन्दर: । अनेनाकारस्य गूहनाशक्यतां सूचयति ।। २ ।।

**नकुल उवाच -**

**अश्वबन्धो भविष्यामि विराटनृपतेरहम् ।**
**सर्वथा ज्ञानसम्पन्न: कुशल: परिरक्षणे ।। ३ ।।**

**सर्वथा** सर्वैः प्रकारैः **ज्ञानसम्पन्नः** अश्वलक्षणज्ञः । **परिरक्षणे** । **अश्वबन्ध** इत्यतोऽश्वेति पदं षष्ठ्यन्तमनुवर्तते ।। ३ ।।

**ग्रन्थिको नाम नाम्नाऽहं कर्मैतत् सुप्रियं मम ।**
**कुशलोऽस्म्यश्वशिक्षायां तथैवाश्वचिकित्सने ।**
**प्रियाश्च सततं मेऽश्वाः कुरुराज यथा तव ।। ४ ।।**

**नाम्ना अहं ग्रन्थिक** इति **नाम** प्रसिद्धः । 'ग्रन्थिको गुग्गुलद्रुमे । माद्रेये च' इति विश्वः । **अश्वचिकित्सने** अश्ववैद्यके ।। ४ ।।

**न दुष्टाश्वा भविष्यन्ति किशोरो वडवा अपि ।। ५ ।।**

**किशोरः** अश्वबालः **वडवा** अश्वाः । 'बालः किशोरो वाम्यश्वा वडवा वाडवं गणे' इत्यमरः । मया शिक्षिताश्चेन्न दुष्टाः भविष्यन्ति ।। ५ ।।

**ये मामामन्त्रयिष्यन्ति विराटनगरे जनाः ।**
**तेभ्य एवं विवक्ष्यामि विहरिष्याम्यहं यथा ।। ६ ।।**

**आमन्त्रयिष्यन्ति** कस्त्वमित्यामन्त्रयिष्यन्ति **ये जनाः** तेभ्य एवं वक्ष्यमाणरीत्या विवक्ष्यामि यथा विहरिष्यामि तथा विवक्ष्यामि ।। ६ ।।

**पाण्डवेन पुरा तात अश्वेष्वधिकृतो हि वै ।**
**विराटनगरे च्छन्नश्चरिष्यामि महीपते ।। ७ ।।**

तद्वचनप्रकारमाह । हे **तात** अहं **पाण्डवेन** युधिष्ठिरेण **अश्वेष्वधिकृतः पुरा** इति विवक्षाभावात् सन्ध्यभावः ।। ७ ।।

**युधिष्ठिर उवाच -**

**सहदेव कथं तस्य समीपे विहरिष्यसि ।**
**किं वा तं कर्म कुर्वाणः प्रच्छन्नो विहरिष्यसि ।। ८ ।।**

**सहदेव उवाच -**

**गोसङ्ख्याता भविष्यामि विराटस्य महीपतेः ।**
**प्रतिषेद्धा च दोग्धा च सङ्ख्याने कुशलो गवाम् ॥ ९ ॥**

**गोसङ्ख्याता** गोपालः । 'गोपे गोपालगोसङ्ख्यगोधुगाभीरबल्लवाः' इत्यमरः । **प्रतिषेद्धा** वचनमात्रेणान्यत्रप्रसरद्गवनिवर्तकः । **दोग्धा** क्षीरक्षारणकर्ता **सङ्ख्याने** समूहदर्शनमात्रेण परिगणने **कुशलः** ॥ ९ ॥

**तन्तिपाल इति ख्यातो नाम्नाऽहं विदितस्तथा ।**
**निपुणं तु चरिष्यामि व्येतु ते मानसो ज्वरः ॥ १० ॥**

**विदितः** मया ज्ञातो यः **ते मानसो ज्वरः** स **व्येतु** । **निपुणं** यथा भवति तथा ॥१०॥

**अहं हि भवता गोषु सततं प्रहितः पुरा ।**
**तत्र मे कौशलं सर्वमवबुद्धं विशाम्पते ॥ ११ ॥**

सदा मत्समीपवासिनस्तव कथमिदमित्यतस्तदनुभवारूढं करोति– **अहमिति** ॥११॥

**लक्षणं चरितं चापि गवां यच्चापि मङ्गलम् ।**
**तत्सर्वं मे सुविदितमन्यच्चापि महीपते ॥ १२ ॥**

**गवां यन्मङ्गलं** एतद्गवग्रहणे समृद्धिर्भविष्यतीत्यादिरूपम् **मे** शैषिकी षष्ठी ॥१२॥

**वृषभानपि जानामि राजन् पूजितलक्षणान् ।**
**येषां मूत्रमुपाघ्राय अपि वन्ध्या प्रसूयते ॥ १३ ॥**

**उपाघ्राय अपि वन्ध्या** इत्यत्रासन्धिरविवक्षातः । **अपि वन्ध्या** तथा सम्भाविता ।। १३ ।।

**सोऽहमेवं चरिष्यामि प्रीतिरत्र हि मे सदा ।**
**न च मां वेत्स्यते कश्चित् तोषयिष्ये च पार्थिवम् ।।१४।।**

**वेत्स्यते** गतम् । सहदेवत्वेन ।। १४ ।।

**युधिष्ठिर उवाच -**

**इयं हि नः प्रिया भार्या प्राणेभ्योऽपि गरीयसी ।**
**मातेव परिपाल्या च पूज्या ज्येष्ठेव च स्वसा ।। १५ ।।**

**मातेव** इत्यादेः साम्प्रदायिकोऽर्थस्तु । **इयं नः प्रिया भार्या** द्रौपदी विराटगेहं गता चेत् तेन मातेव **परिपाल्या ज्येष्ठा स्वसेव पूज्या च** तत्पालनस्य पत्यायत्तत्वात् यदाकदाचिद्गमने वस्त्राभरणादिनाऽत्यन्तं तस्याः पूज्यत्वमेव । मातुः पुनः सर्वप्रकारेण परिपालनमिति विशेषः ।। १५ ।।

**केनस्विद्द्रौपदी कृष्णा कर्मणा विचरिष्यति ।**
**नहि किञ्चिद् विजानाति कर्म कर्तुं यथा स्त्रियः ।। १६ ।।**

तथा चैतादृशी **द्रौपदी** द्रुपदपुत्री **कृष्णा** नाम्ना **केनस्वित् कर्मणा विचरिष्यति** । अर्थान्तरे तु – 'माता गौर्यादिजननी गो ब्रह्मण्यादिभूमिषु' इति [१]मेदिनीकोशात् । 'माहेयी सौरभेयी गौरुस्रा माता च शृङ्गिणी' इत्यमरकोशाच्च । माता गौः ब्राह्मण्यादिवृत्तिर्वा । स्वसाऽम्बिका पार्वतीव पूज्येत्यर्थः । 'एष ते रुद्रभागः सहस्वस्राऽम्बिकया तं जुषस्व ।शरद्वा अस्याऽम्बिका स्वसा' इति मन्त्रब्राह्मणोक्तेः । 'माता सस्यवती भूमिर्धेनुर्ज्येष्ठेव च स्वसा' इत्यभिधानात् सस्यवती भूर्धेनुवतीति

१. विश्वकोशेऽपि तथा ।

वा । 'द्यौर्वः पिता पृथिवी माता सोमो भ्राता अदितिः स्वसा' इति श्रुतेः । स्वसेवादितिवद्वा पूज्येति । **स्त्रिय** इतराः । **यथा विजानाति** ।। १६ ।।

**सुकुमारी च बाला च राजपुत्री यशस्विनी ।**
**पतिव्रता महाभागा कथं नु विचरिष्यति ।। १७ ।।**

**राजपुत्री** राज्ञो दुहिता ।। १७ ।।

[1]**माल्यगन्धानलङ्कारान् वस्त्राणि विविधानि च ।**
**एतान्येवाभिजानाति यतोजाता हि भामिनी ।। १८ ।।**

**भामिनी** प्रकाशमाना । पुत्राङ् वादेशः 'शार्ङ्गरवाद्यञो ङीन्'[2] इति वा । द्रौपदी **यतोजाता** अयोनिजा । स्वतो यैर्गन्धादिभिः सह जाता च अतो **माल्य-गन्धान्** । 'माल्यं मालाप्रसूनयोः' इत्यमरकोशात् । माल्यानि च गन्धाश्च । एतांश्च तान् । एतान्येव भोगद्रव्याणि **अभिजानाति** । नान्यस्त्रीवन्नीचकर्मेत्यर्थः ।। १८ ।।

**द्रौपद्युवाच**

**सैरन्ध्र्यो रक्षिता लोके भुजिष्याः सन्ति भारत ।**
**नैवमन्याः स्त्रियो यान्ति इति लोकस्य निश्चयः ।। १९ ।।**

**सैरन्ध्र्यः** परगृहे स्ववशाः सत्यः परिचारिकाः **अरक्षिताः भुजिष्याः** निर्वेतनमन्नमात्रहेतोर्वसन्त्यो लोके सन्ति । अन्याः सैरन्ध्रीभ्य इतराः श्रीमत्य एवं सैरन्ध्रीवत्परगृहं **नैव यान्तीति लोकस्य निश्चयः** । **मान्या इति पाठे** भाग्यवत्य इत्यर्थः ।। १९ ।।

- इति नीलकण्ठीय भावदीपे

---

१. दिष्ट्येत्यपि पाठः ।

२. पा. सू. (४/१/७३)

**साऽहं ब्रुवाणा सैरन्ध्री कुशला केशकर्मणि ।**
**युधिष्ठिरस्य गेहे वै द्रौपद्याः परिचारिका ॥ २० ॥**

**सैरन्ध्री** इति तत्रतत्र **ब्रुवाणा** ॥ २० ॥

**उषिताऽस्मीति वक्ष्यामि पृष्टा राज्ञा च भारत ।**
**आत्मगुप्ता चरिष्यामि यन्मां त्वं परिपृच्छसि ॥ २१ ॥**

**राज्ञा च पृष्टा** इत्येवं **वक्ष्यामि** यन्मां त्वं **परिपृच्छसि** तत्रेदमुत्तरमिति शेषः । 'यतश्चोदेति सूर्यः'[१] इतिवत् । यदित्यस्य किमित्यर्थः । इतः परं किं पृच्छसीति वा ॥ २१ ॥

**सुदेष्णां प्रत्युपस्थास्ये राजभार्यां यशस्विनीम् ।**
**सा रक्षिष्यति मां प्राप्तां माभूत् ते दुःखमीदृशम् ॥ २२ ॥**

**ईदृशं** पूर्वोपन्यस्तम् ॥ २२ ॥

**युधिष्ठिर उवाच -**

**कल्याणं भाषसे कृष्णे कुले जाताऽसि भामिनी ।**
**न पापमभिजानासि साधु साध्वीव्रते स्थिता ॥ २३ ॥**

**साध्वीव्रते** पतिव्रताव्रते 'सती साध्वी पतिव्रता' इत्यमरः । व्रते साध्वीत्यमरः । **स्थिता** ॥ २३ ॥

**यथा न दुर्हृदः पापा भवन्ति सुखिनः पुनः ।**
**कुर्यास्तत् त्वं हि कल्याणि लक्षयेयुर्न ते तथा ॥ २४ ॥**

**॥ इति श्रीमहाभारते विराटपर्वणि पाण्डवप्रवेपर्वणि तृतीयोऽध्यायः ॥**

---

१. कठोपनिषत् । (४/९)

**दुर्हृदः** दुर्मनस्काः दुर्योधनाद्याः **सुखिनः** परिज्ञाता इति पुनर्द्वादशवर्षाणि वनं प्रविशन्तीति हृष्टाः । तस्यैव विवरणं **लक्षयेयुरिति** ।। २४ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां तृतीयोऽध्यायः ।।**

*****

# ४. चतुर्थोऽध्यायः

**( पाण्डवान् प्रति धौम्येन राजकुलवसतिप्रकारानुशासनम् )**

**युधिष्ठिर उवाच -**

**कर्माण्युक्तानि युष्माभिर्यानियानि करिष्यथ ।**
**मम चापि यथा बुद्धिरुचिता विधिनिश्चयात् ।। १ ।।**

**यानियानि** इति पदमेकम् । **विधिनिश्चयात्** दैवप्रेरकहरिबुद्धिमनुसृत्य । तां शृणुतेति शेषः ।। १ ।।

**पुरोहितोऽयमस्माकमग्निहोत्राणि रक्षतु ।**
**[१]सूदपौरोगवैः सार्धं द्रुपदस्य निवेशने ।। २ ।।**

**सूदपौरोगवैः सार्धं पुरोहितो** धौम्याचार्यः **अग्निहोत्राणि** तत्पात्रादीनि रक्षतु । **सूतेति पाठे** अग्निहोत्रपात्रादिकारकतक्षेत्यर्थः । 'सूतस्तु सारथौ तक्ष्णि' इति विश्वः । **पौरोगवो** महानसाध्यक्षः । [२]अभिधानमभिहितम् ।। २ ।।

**इन्द्रसेनमुखाश्चैव रथानादाय केवलान् ।**
**यान्तु द्वारवतीं शीघ्रमिति मे वर्तते मतिः ।। ३ ।।**

---

१. सूतपौरोगवैः । इति क्वचित् ।

२. 'पाकस्थानं महानसे । पौरोगवस्तदध्यक्षे - इत्यमरः' (२/१) इति प्रागभिहितवचनम् ।

**इन्द्रसेनादयो** धर्मादिसुताः । **केवलान्** अस्मदनधिष्ठितान् ।। ३ ।।

**इमाश्च नार्यो द्रौपद्याः सर्वाश्च परिचारिकाः ।**
**पाञ्चालानेव गच्छन्तु सूतपौरोगवैः सह ।। ४ ।।**

**सर्वैरपि च वक्तव्यं न प्राज्ञायन्त पाण्डवाः ।**
**गताश्चास्मानपाकीर्य सर्वे द्वैतवनादिति ।। ५ ।।**

**अपाकीर्य** अपसार्य । **द्वैतवनात्** तत्परित्यज्य ।। ५ ।।

**वैशम्पायन उवाच -**

**एवं तेऽन्योन्यमामन्त्र्य कर्माण्युक्त्वा पृथक् पृथक् ।**
**धौम्यमामन्त्रयामासुः स च तान् मन्त्रमब्रवीत् ।। ६ ।।**

**आमन्त्रयामासुः** आकारयामासुः । **मन्त्रं** रहस्यालोचनम् ।। ६ ।।

**धौम्य उवाच -**

**विहितं पाण्डवाः सर्वं ब्राह्मणेषु सुहृत्सु च ।**
**याने प्रहरणे चैव तथैवाग्निषु भारत ।। ७ ।।**

हे **पाण्डवाः** ब्राह्मणादिषु विषये यत्कर्तव्यं तत् **सर्वं विहितं** कृतमेव । यद्यपि किञ्चिन्न विदितमस्ति, तथाऽपीतो वक्ष्यामीत्याह – **विदितमिति** ।। ७ ।।

**त्वया रक्षा विधातव्या कृष्णायाः फाल्गुनेन च ।**
**विदितं वो यथा सर्वं लोकवृत्तमिदं तव ।। ८ ।।**

**विदिते चापि वक्तव्यं सुहृद्भिरनुरागतः ।**
**एवं धर्मश्च कामश्च अर्थश्चैव सनातनः ।। ९ ।।**

**अतोऽहमपि वक्ष्यामि हेतुमत्र निबोधत ।**
**हन्तेमां राजवसतिं राजपुत्रा ब्रवीम्यहम् ॥ १० ॥**

एवं विदितस्थले स्नेहेन कथने धर्मकामादयो भवन्तीत्यर्थः । अतो धर्मराजवसतिं तत्र वासप्रकारम् ॥ १० ॥

**यथा राजकुलं प्राप्य सर्वान् दोषांस्तरिष्यथ ।**
**दुर्वसं चैव कर्तव्यं जानता राजवेश्मनि ॥ ११ ॥**

**राजकुलं** राजगृहम् । 'कुलं जनपदे गृहे' इति विश्वः । **यथा तरिष्यथ** तथा वसतिप्रकारं ब्रवीमि । **राजवेश्मनि जानता** राजनीतिज्ञेन तत्कुलं **दुर्वसं** दुःखेन वस्तुं योग्यं **कर्तव्यं** यतोऽतो युष्माभिरमानितैरपि परिवत्सरं तमभि॰ याप्य तत्कुलं दुर्वसं कर्तव्यमित्यन्वयः ॥ ११ ॥

**अमानितैस्तु मानार्हा अज्ञातैः परिवत्सरम् ।**
**ततश्चतुर्दशे वर्षे चरिष्यथ यथासुखम् ॥ १२ ॥**

**दिष्टद्वारो लभेद् द्रष्टुं रहस्येषु न विश्वसेत् ।**
**तदेवासनमन्विच्छेत् यत्र नाभिपतेत् परः ॥ १३ ॥**

**दिष्टद्वारः** राज्ञा आज्ञसद्वारप्रवेशः । **लभेत्** लभेत । **रहस्येषु द्रष्टुं न विश्वसेत्** । करणव्यत्ययः । 'न विश्वसेदविश्वस्तम्'[१] इत्यादिप्रयोगात् । **यत्र** यस्मिन्नासने **नाभिपतेत्** ममेदमिति नागच्छेत् ॥ १३ ॥

**यो न यानं न पर्यङ्कं न पीठं न गजं रथम् ।**
**आरोहेत् सम्मतोऽस्मीति स राजवसतिं वसेत् ॥ १४ ॥**

---

१. हरिवंशेषु (१/२०/१२३)

यानादिकं राज्ञः रथं नारोहेदिति नञोऽनुवृत्त्याऽन्वयः । यद्वा रथतीति रथः तं गच्छन्तं गजं नारोहेदिति यथा श्रुतैव योजना । अतो ना नञो न्यूनाधिकभावशङ्का । सम्मतः । राजप्रीतिपात्रमहमस्मीति नारोहेत् । अहमित्यर्थे अस्मीत्यव्ययं वा । तथाहि भारवौ । 'आसंसृतेरस्मि जगत्सुजातस्त्वय्यागते यद्बहुमानपात्रम्'[1] इति । न च तत्रापि जातोऽस्मीति अन्वयसम्भवेन निर्धारणमिति तु 'दासे कृतागसि भवत्युचितः प्रभूणां पादप्रहारः' इति सुन्दरि नास्मि दूये । उद्यत कठोरपुलकाङ्कुरकण्टकाग्रैर्यत्स्विद्यते तव पदं ननु सा व्यथाम' इति गण० याख्याने दूय इत्याख्या । तस्य सत्त्वादस्मीत्यस्य निराबाधमहमित्यर्थकता स्वीकार्या । अन्यथा वैय्यर्थ्यादिति काव्यप्रकाशिकाभिधानादपास्तम् ।। १४ ।।

**यत्र यत्रैनमासीनं शङ्केरन् दुष्टचारिणः ।**
**न तत्रोपविशेद् यो वै स राजवसतिं वसेत् ।। १५ ।।**

**यत्र यत्र** मध्यस्त्र्यादि सन्निधिस्थले । **न तत्र** इत्यत्र तत्रेत्यस्यावृत्तिः । यद्यपि वीप्सास्थले – 'यद्यत्पापं प्रशमय जगन्नाथ नम्रस्य तन्म' इत्यादिप्रयोगादेकेनैव चारितार्थ्यमिति बहवः । तथाऽपि 'ते ते पिबन्तु जिह्वया' इति ऋग्भाष्ये 'आवृत्तः स तु भवत्यर्थः' इत्याचार्यैरावृत्तेरुक्तत्वात् 'यांयां प्रिया प्रैक्षत कातराक्षी सा सा ह्रिया नम्रमुखी बभूव' इत्यादिबहुप्रयोगस्य सत्त्वाच्चावृत्तिरावश्यकी । दृष्टाश्च ते चाराश्च ते सन्ति येषां ममेत्यादिनाम् ते तथा । न कर्मधारयादिति तु नञा निर्दिष्टमनित्यमिति न प्रवर्तते । **शङ्केरन्** संशयं कुर्युः ।। १५ ।।

**न चानुशिष्याद्राजानमपृच्छन्तं कदाचन ।**
**तूष्णीं त्वेनमुपासीत काले समभिपूजयेत् ।। १६ ।।**

---
१. किरातार्जुनीये ३/६

**अपृच्छन्तं राजानं** कदाचिदपि **नानुशिष्यात्** । एवं कुर्विति नाज्ञापयेत् । **काले** उत्सवसमये **समभिपूजयेत्** स्तुवीत ।। १६ ।।

**असूयन्ति हि राजानो जनाननृतवादिनः ।**
**तथैव चावमन्यन्ते मन्त्रिणं वादिनं मृषा ।। १७ ।।**

स्तुतिरपि यथार्थविषयिणी कर्तव्या, नो चेदित्थं भवतीत्याह– **असूयन्तीति** ।। **जनान्** जनेभ्यः 'षट्सु द्वितीया' [१]इति स्मरणात् । 'मित्रं द्रुह्यति । शिष्यमीर्ष्यति । पुत्रमसूयति' इत्यपि प्रयोगदर्शनात् । द्रुहादिकर्मणः सम्प्रदानत्वं वैकल्पिकमित्युन्नीयते । कोपपूर्वस्य द्रोहादेर्धातुवाच्यत्वे तत्कर्मणः सम्प्रदानत्वं द्रोहादिमात्रस्य तथात्वे तु कर्मत्वमेवेति पुनः कौमारा इति शब्दशक्तिप्रकाशिकोक्तजनान् प्रतीति वा । प्राचीनानामपि यदेदृशी दशा तदा का कथा नवीनानामित्याह – **तथैवेति** ।। १७ ।।

**नैषां दारेषु कुर्वीत मैत्रीं प्राज्ञः कदाचन ।**
**अन्तःपुरचरा ये च द्वेष्टि यानहिताश्च ये ।। १८ ।।**

**अन्तःपुरचराः** [२]सौविदल्लादयः । यान् राजा द्वेष्टि, ये च राज्ञोऽहिताः तेषु **मैत्रीं** न कुर्यात् ।। १८ ।।

**विदिते चास्य कर्माणि कुर्वीत सुलघून्यपि ।**
**एवं विचरतो राज्ञि न क्षतिर्जायते क्वचित् ।। १९ ।।**

**विदिते** राजमनोगते प्रमेये स्वकर्तव्यतया हिते सति **सुलघून्यपि** स्वानर्हाणि नीचान्यपि **कर्माणि कुर्वीत** । **राज्ञि** राजविषये **एवं विचरतः क्षतिः** मानहानिः ।। १९ ।।

---

१. छान्दोग्यभाष्योदाहृतसामसंहितावचनम् ।

२. सौविदल्लाः कञ्चुकिनः स्थापत्याः सौविदाश्च ते । - इत्यमरः ।
सुविदल्लाः स्त्रियः । तासामिमे रक्षकाः । 'तस्येदम्' (पा.सू. ४/३/१२०) इत्यञ् ।

**गच्छन्नपि परां भूमिमपृष्टो ह्यनियोजितः ।**
**जात्यन्ध इव मन्येत मर्यादामनुचिन्तयन् ।। २० ।।**

**परां भूमिं** अन्योपवेशनस्थानं रिक्ततया **गच्छन्नपि** राज्ञा **अनियोजितः** अनात्मज्ञः **अपृष्टः** न विद्यते पृष्टः अत्रोपवेष्टव्यं किमिति प्रश्नविषयो राजादिर्येन स तथा सन् **जात्यन्ध** इवात्मानं **मन्येत** । क्वापि चक्षुर्नाक्षिपेदित्यर्थः । **मर्यादां** राजनीतिम् ।। २० ।।

**नहि पुत्रं न नप्तारं न भ्रातरमरिन्दमाः ।**
**समतिक्रान्तमर्यादं पूजयन्ति नराधिपाः ।। २१ ।।**

**नप्तारं** पौत्रं दौहित्रं वा । 'नप्त्री पौत्री सुतात्मजा' इत्यमरव्याख्यायाम् । 'पुत्रस्य पुत्र्याश्चापत्यम्' इति भानुः ।। २१ ।।

**यत्नाच्चोपचरेदेनमग्निवद्देववत् त्विह ।**
**अनृतेनोपचीर्णो हि हन्यादेव न संशयः ।। २२ ।।**

यस्मात् अमायया **उपचरेत्** सेवेत । **अनृतेन** वञ्चनतया उपचीर्णः सेवितः । एनं सेवकम् ।। २२ ।।

**यद्यद्भर्ताऽनुयुञ्जीत तदेवास्यानुवर्तयेत् ।**
**प्रमादमवलेपं च कोपं च परिवर्जयेत् ।। २३ ।।**

**अनुयुञ्जीत** आज्ञापयेत् । **तदेव** कार्यम् **अनुवर्तयेत्** कुर्यात् । **प्रमादो**ऽनवधानम् । **अवलेपं** गर्वम् । 'प्रमादोऽनवधानता' इत्यमरः, 'गर्वोऽवलेपस्तु' इति विश्वः ।।२३।।

**समर्थनासु सर्वासु हितं च प्रियमेव च ।**
**संवर्णयेत् तदेवास्य प्रियादपि हितं भवेत् ।। २४ ।।**

**समर्थनासु** एतत्कार्यं कथं कार्यं यूयं समर्थयतेति तत्परीक्षासु । **हितं** परिणामसुखम् । **प्रियं** तत्काले श्रुतिसुखजनकं यद्भवति

**तदेवास्य संवर्णयेत्** । **तदेव** उभयसमुचितकथनमेव **अस्य** वक्तुः प्रियाप्रियकथनादपि **हितं** हितकरं भवेत् । प्रियं हितमभिवृद्धं भवेदिति वा । 'हि गतौ वृद्धौ च' इति स्मरणात् ।। २४ ।।

**अनुकूलो भवेच्चास्य सर्वार्थेषु कथासु च ।**
**अप्रियं वाहितं यत् स्यात् तदस्मै नानुवर्तयेत् ।। २५ ।।**

**अस्य** राज्ञः **अनुकूलः** पूर्वोक्तरीत्या । **नानुवर्तयेत्** नानुवर्णयेत् ।। २५ ।।

**नाहमस्य प्रियोऽस्मीति मत्वा सेवेत पण्डितः ।**
**अप्रमत्तश्च सततं हितं कुर्यात् प्रियं च यत् ।। २६ ।।**

**प्रियोऽस्मीति मत्वा** गर्वेणेति यावत् । **अप्रमत्तः** राजाऽहङ्कृतान् शिक्षयतीति सावधानः **पण्डितः** सञ्जातबुद्धिः ।। २६ ।।

**दक्षिणं वाऽथ वामं वा पार्श्वमासीत पण्डितः ।**
**रक्षिणां ह्यात्तशस्त्राणां स्थानं पश्चाद्विधीयते ।। २७ ।।**

अवशिष्टभागद्वयं त्याजयन्नाह– **दक्षिणमिति** ।। रक्षितुं शीलमेषामस्तीति वा । रक्षाकार्यत्वेनास्ति येषामिति **ङिणिः** । व्रिह्यादीनिर्वा **विधीयते** राजनीतौ ।।२७।।

**नास्यानिष्टानि सेवेत नाहितैः सह संवदेत् ।**
**स्वस्थानान्न विकम्पेत स राजवसतिं वसेत् ।। २८ ।।**

**अनिष्टानि** अप्रीतिपात्राणि । **अहितैः** द्वेषिभिः । **स्वस्थानात्** राजनिर्दिष्टात् **न** विकम्पयेत् । वाराङ्गनादिकौतुकदिदृक्षया न गच्छेत् ।। २८ ।।

**नित्यं हि प्रतिषिद्धं तु पुरस्तादासनं महत् ।**
**नच सन्दर्शने किञ्चित् प्रवृत्तमभिसञ्जपेत् ।। २९ ।।**

**हि** यस्मात् **महत्** महत्त्वकृतम् तस्मात् **प्रतिषिद्धम्** । **सन्दर्शने** समक्षं प्रवृत्तं जातम् । **किञ्चित्** कार्यं **न अभिसञ्जपेत्** । कर्णे कर्णे जपित्वा न बहिर्भावयेत् ।।२९।।

**अपि ह्येतद्दरिद्राणां व्यलीकं स्थानमुत्तमम् ।**
**न मृषाऽभिहितं राज्ञा मनुष्येषु प्रकाशयेत् ।। ३० ।।**

अन्यथा कैमुत्येन बाधकमाह– **अपीति** ।। एतज्जपनम् । **दरिद्राणामपि व्यलीकं स्थानम्** अप्रीतिनिमित्तम् । किमु महताम् । **मृषा** किञ्चिद् **अभिहितं मनुष्येषु न प्रकाशयेत्** । राजा एवमनृतमवादीदिति नोद्घोषयेत् ।। ३० ।।

**असूयन्ति हि राजानो नराननृतवादिनः ।**
**तथैव चावमन्यन्ते नराः पण्डितमानिनः ।। ३१ ।।**

**असूयन्ति** व्याख्यातम् । **पण्डितमानिनः** पण्डित इत्यहङ्कारवन्तः ।। ३१ ।।

**शूरोऽस्मीति न धृष्टः स्याद्बुद्धिमानिति वा पुनः ।**
**प्रियमेवाचरन् राज्ञः प्रियो भवति भोगवान् ।। ३२ ।।**

**धृष्टः** वैय्यात्यवान् । उभयान्वयी ।। ३२ ।।

**ऐश्वर्यं प्राप्य दुष्प्रापं प्रियं प्राप्य च राजतः ।**
**अप्रमत्तो भवेद्राज्ञः प्रियेषु च हितेषु च ।। ३३ ।।**

**ऐश्वर्यं** ग्रामादीश्वरत्वम् । प्रियं स्रक्चन्दनादि । **अप्रमत्तो भवेत्** । अहङ्कारहेतौ सत्यपि नाहङ्कुर्यात् । **प्रियेषु हितेषु** तत्कारणविषये ।। ३३ ।।

**यस्य कोपो महाबाधः प्रसादश्च महाफलः ।**
**कस्तस्य मनसाऽपीच्छेदनर्थं प्राज्ञसम्मतः ।। ३४ ।।**

**महाबाधः** अत्यन्तानर्थजनकः । 'महाबाधे' इति पाठे 'तद्रूपे' इत्यर्थः ।। ३४ ।।

**न चोष्ठौ न भुजौ जानू न च वाक्यं समाक्षिपेत् ।**
**सदा वातं च वाचं च ष्ठीवनं चाचरेच्छनैः ॥ ३५ ॥**

**जानु** अर्धर्चादिः । 'जङ्घा तु प्रसृता जानूरुपर्वाष्ठीवदस्त्रियाम्' इत्यमरः । श्मश्रुजानुवसुसाद्वित्यारभ्य, 'नपुंसके च' इति लिङ्गानुशासनोक्तेश्च । ओष्ठादि **न समाक्षिपेत्**, चालनादिना तद्विकारं न कुर्यात् । **वाक्यं च न समाक्षिपेत्** । न भृशं वदेदित्यर्थः । तर्हि कथं कार्यमत्र सदा वाचमुच्छ्वासादिरूपं वाचं च ष्ठीवनं च मुखश्लेष्मनिःसारणं थूकरणमिति यावत् । **शनैराचरेत्** । 'निष्ठ्यूतिर्निष्ठेवनं निष्ठीवनमित्यभिन्नानि' इत्यमरः । वस्त्राद्यन्तरितं कुर्यादित्यर्थः । 'अम्बूकृतं सनिष्ठीवम्' इत्यमरः ॥ ३५ ॥

**हास्यवस्तुषु चान्यस्य वर्तमानेषु केषुचित् ।**
**नातिगाढं प्रहृष्येत नचाप्युन्मत्तवद्धसेत् ॥ ३६ ॥**

**अन्यस्य** राज्ञः प्राहुणिकादेः केनचित्परेण हास्यवस्तुषु उष्णीषपातनादिरूपेषु वर्तमानेषु सत्सु । **नातिगाढं प्रहृष्येत्** हृष्येत न दन्तप्रकाशपुरःसरं हसेत् । **नचाप्युन्मत्तवद्धसेत्** । तूष्णीं न स्थेयमित्यर्थः ॥ ३६ ॥

**न चातिधैर्येण चरेद्गुरुतां हि व्रजेत् तथा ।**
**स्मितं तु मृदुपूर्वेण दर्शयेत प्रसादजम् ॥ ३७ ॥**

**चरेत्** सञ्चारादिकं कुर्यात् । **गुरुतां** गौरवं केवलगाम्भीर्यमिति यावत् । तर्हि किं कार्यमित्यत आह – **स्मितमिति** ॥ **प्रसादजं** मनोहर्षसूचकम् । **स्मितं** मृदुपूर्वेण दर्शयेत् ॥ ३७ ॥

**लाभे न हर्षयेद्यस्तु न व्यथेद्योऽवमानितः ।**
**असम्मूढश्च यो नित्यं स राजवसतिं वसेत् ॥ ३८ ॥**

**लाभे** धनादिप्राप्तौ न हर्षयेत् । स्वार्थे णिच्, न हृष्येत् ॥ ३८ ॥

**राजानं राजपुत्रं वा संवर्तयति यः सदा ।**
**अमात्यः पण्डितो भूत्वा स चिरं तिष्ठते प्रियः ।। ३९ ।।**

**संवर्तयति** अनुवर्तते । **योऽमात्यः पण्डितो भूत्वा स चिरं प्रियः** सन् **तिष्ठते** तिष्ठति । 'प्रकाशनस्थेयाख्ययोश्च'[1] इति आत्मनेपदता चिरं तिष्ठते राज्ञे तिष्ठते स्वाशयं प्रकाशयतीत्यर्थ इति वा ।। ३९ ।।

**प्रगृहीतश्च योऽमात्यो निगृहीतस्त्वकारणे ।**
**न निर्वदति राजानं लभते सम्पदं पुनः ।। ४० ।।**

**प्रगृहीतः** पूर्वसङ्गृहीतः । **अकारणे** निष्कारणं **निगृहीतः** सन् **न निर्वदति** चेन्न निन्दति चेत् ।। ४० ।।

**प्रत्यक्षं च परोक्षं च गुणवादी विचक्षणः ।**
**उपजीवी भवेद् राज्ञो विषये वाऽपि यो भवेत् ।। ४१ ।।**

**यो राज्ञः उपजीवी भवेत्, विषये** देशे । अपिः समुच्चये । ग्रामे वासः **प्रत्यक्षं** 'प्रतिपरसमलुभ्योऽक्ष्णः'[2] इति टचि प्रत्यक्षम् । 'परोक्षे लिट्' इति निपातनादोकारे प्राक्तष्टचि परोक्ष इति भवति । **गुणवादी भवेत्** इत्यन्वयः ।। ४१ ।।

**अमात्यो हि बलाद्भोक्तुं राजानं प्रार्थयेत यः ।**
**न स तिष्ठेच्चिरं स्थानं गच्छेच्च प्राणसंशयम् ।। ४२ ।।**

**योऽमात्यः राजानं बलाद्भोक्तुं** अस्य धनवनितादेर्भोगं बलात् कुर्विति प्रार्थयते, **सः** बहुलोकविरोधात् स्थानं स्थाने स्वपदे **चिरं न तिष्ठेत्** । **प्राणसंशयं च गच्छेत्** ।।४२।।

---

१. पा. सू. (१/३/२३)

२. वार्तिकम् ।

**श्रेयः सदाऽऽत्मनो दृष्ट्वा परं राज्ञा न संवदेत् ।**
**विशेषयेच्च राजानं योग्यभूमिषु सर्वदा ।। ४३ ।।**

**परं** राजप्रीतिपात्रमपरं **दृष्ट्वा श्रेयः** स्वलाभमुद्दिश्य **राज्ञा न संवदेत्** विवादं न कुर्यात् । **राजानं** स्वराजं **योग्यभूमिषु** परराष्ट्रसभादिस्थानेषु **विशेषयेत्** उत्कृष्टं कुर्यात् ।। ४३ ।।

**अम्लानो बलवान् शूरश्छायेवानुगतः सदा ।**
**सत्यवादी मृदुर्दान्तः स राजवसतिं वसेत् ।। ४४ ।।**

**अम्लानः** सदोच्छ्रायमुखः ।। ४४ ।।

**अन्यस्मिन् प्रेष्यमाणे तु पुरस्ताद्यः समुत्पतेत् ।**
**अहं किङ्करवाणीति स राजवसतिं वसेत् ।। ४५ ।।**

**अन्तरे चैव बाह्ये च राज्ञा यश्चाथ सर्वदा ।**
**आदिष्टो नैव कम्पेत स राजवसतिं वसेत् ।। ४६ ।।**

**यो वै गृहेभ्यः प्रवसन् प्रियाणां नानुसंस्मरेत् ।**
**दुःखेन सुखमन्विच्छेत् स राजवसतिं वसेत् ।। ४७ ।।**

**गृहेभ्यः प्रवसन्** राजाज्ञया प्रवासं कुर्वन् **प्रियाणां नानुसंस्मरेत्** । [१]'अधीगर्थ...' इति षष्ठी । **दुःखेन** कायक्लेशादिना ।। ४७ ।।

**समवेषं न कुर्वीत नोच्चैः सन्निहितो वसेत् ।**
**न मन्त्रं बहुधा कुर्यादेवं राज्ञः प्रियो भवेत् ।। ४८ ।।**

राज्ञा **समवेषम्** । तददत्तं तत्समालङ्कारं न कुर्वीत । **नोच्चैः सन्निहितः** । अत्यन्तसमीपस्थः । **बहुधा** चाश्चल्येन ।। ४८ ।।

---

१. अधीगर्थदयेशां कर्मणि - पा.सू. (२/३/५२) ।

**न कर्मणि नियुक्तः सन् धनं किञ्चिदपि स्पृशेत् ।**
**प्राप्नोति हि हरन् द्रव्यं बन्धनं यदि वा वधम् ।। ४९ ।।**

**न स्पृशेत्** न चोरयेत् ।। ४९ ।।

**यानं वस्त्रमलङ्कारं यच्चान्यत् सम्प्रयच्छति ।**
**तदेव धारयेन्नित्यमेवं प्रियतरो भवेत् ।। ५० ।।**

**सम्प्रयच्छति** राजा ।। ५० ।।

**एवं संयम्य चित्तानि यत्नतः पाण्डुनन्दनाः ।**
**संवत्सरमिमं तात तथाशीला बुभूषत ।। ५१ ।।**

**तथा** मदुक्तप्रकारेण **शीलं** येषां ते तथा । **इमं संवत्सरं बुभूषत** बुभूषध्वं प्राप्तुमिच्छत । सत्तां लब्धुमिच्छत इति वा ।। ५१ ।।

**अथ स्वविषयं प्राप्य यथाकामं करिष्यथ ।**

**युधिष्ठिर उवाच -**

**अनुशिष्टाः स्म भद्रं ते नैतद्वक्ताऽस्ति कश्चन ।**
**कुन्तीमृते मातरं नो विदुरं वा महामतिम् ।। ५२ ।।**

**कुन्तीमृते** ऋते योगेऽपि द्वितीया । 'ज्ञानसूर्यमृते'[१] इत्येतद्व्याख्या **सुधायाम्** 'विना वातं विना वर्षम्' इत्याद्युदाहृत्य विवरणात् साधुः ।। ५२ ।।

**यदेवानन्तरं कार्यं तद्भवान् कर्तुमर्हति ।**
**तारणायास्य दुःखस्य प्रस्थानाय जयाय च ।। ५३ ।।**

**तारणाय** पाराय । **अस्य दुःखस्य** अज्ञातवासनिमित्तकस्य **प्रस्थानाय** जयाय च विराटनगरगमनाय विजयाय । **अनन्तरम्** अन्तरायनिवृत्त्यै ।। ५३ ।।

---

१. अनुव्याख्याने । (३/३/३०)

**वैशम्पायन उवाच -**

**एवमुक्तस्ततो राज्ञा धौम्योऽथ द्विजसत्तमः ।**
**अकरोद्विधिवत् सर्वं प्रस्थाने यद्विधीयते ॥ ५४ ॥**

**तेषां समिद्ध्य तानग्नीन् मन्त्रवच्च जुहाव सः ।**
**समृद्धिवृद्धिलाभाय पृथिवीविजयाय च ॥ ५५ ॥**

**तेषां** पाण्डवानां **समिद्ध्य** सन्दीप्य समृद्धिः सम्पत् वृद्धिः देहपौष्ट्यम् । लाभः मित्रादेः समृद्धिबुद्धिभ्यां सहितश्चासौ लाभश्च तस्मै । समृद्धिवृद्ध्योर्लाभायेति वा ॥ ५५ ॥

**अग्निप्रदक्षिणं कृत्वा ब्राह्मणांश्च तपोधनान् ।**
**याज्ञसेनीं पुरस्कृत्य षडेवाथ प्रवव्रजुः ॥ ५६ ॥**

षट्पुरस्कृता याज्ञसेनी एका एते पञ्च आहत्य षडेव ॥ ५६ ॥

**गतेषु तेषु दूरेषु धौम्योऽथ जयतां वरः ।**
**अग्निहोत्राण्युपादाय पाञ्चालानभ्यगच्छत ॥ ५७ ॥**

**गतेषु तेषु दूरेषु** दूरदेशवर्तिषु **अभ्यगच्छत** अभ्यगच्छत् ॥ ५७ ॥

**इन्द्रसेनादयश्चैव यथोक्ताः प्राप्य यादवान् ।**
**रथानश्वांश्च रक्षन्तः सुखमूषुः सुसंवृताः ॥ ५८ ॥**

॥ इति श्रीमहाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि चतुर्थोऽध्यायः ॥

**सुसंवृताः** च्छन्नाः ॥ ५८ ॥

॥ इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां चतुर्थोऽध्यायः ॥

*****

# ५. पञ्चमोऽध्यायः

( पाण्डवैर्वनमध्ये श्मशाने शमीवृक्षे स्वकीयास्त्रशस्त्राणां निक्षेपः )

**ते वीरा बद्धनिस्त्रिंशास्तथा बद्धकलापिनः ।**
**बद्धगोधाङ्गुलित्राणाः कालिन्दीमभितो ययुः ।। १ ।।**

निस्त्रिंशः खड्गः । कलापस्तूणीरः । 'खड्गे तु निस्त्रिंशचन्द्रहासासिरिष्टयः' । 'कलापो भूषणे बर्हे तूणीरे संहतेऽपि च' इत्युभयतश्चामरः । गोधा च अङ्गुलयश्च गोधाङ्गुलि गोधाङ्गुलिनस्त्राणं गोधाङ्गुलित्राणम् । ततो बहुव्रीहिः । 'गोधा तलनिहाकयोः'[१] इति विश्वमेदिन्यौ । **कालिन्दीम् अभितः** । 'अभितःपरितः...'[२] इति द्वितीया ।। १ ।।

**ततस्ते दक्षिणं तीरमन्वगच्छन् पदातयः ।**
**निवृत्तवनवासा हि स्वराष्ट्रं प्रेप्सवस्तदा ।। २ ।।**

**स्वराष्ट्रं प्रेप्सवः** उनायोगे षष्ठीनिषेधात् द्वितीया ।। २ ।।

**वसन्तो गिरिदुर्गेषु वनदुर्गेषु धन्विनः ।**
**विद्ध्यन्तो मृगजातानि महेष्वासा महाबलाः ।। ३ ।।**

एतावानायासः कुतः? दुर्योधनं हत्वा सम्पत्सम्पाद्येत्यत आह । **गिरि** स्वप्रतिज्ञारूपवाक्ये **वसन्तः** सन्त इति वा । **धन्विनो** वैरिधनुष्कानपि । धन्विनः मरुप्रदेशवद्देशात् जलार्थं विद्ध्यन्तः व्रीह्यादीन् अन्नार्थं मृगजातानि विद्ध्यन्तः कुशला इति वा । 'धन्वी धनुर्धरे पार्थे विदग्धे ककुभे द्रुमे' इति विश्वः । अतो न महेष्वासातिरेकः । **मृगजातानि** मृगसमूहान् ।। ३ ।।

---

१. गोधे तले ज्याघातवारणे । - इत्यमरः ।

२. अभितः परितः समया .....। वार्तिकम् ।

**उत्तरेण दशार्णांस्ते पाञ्चालान् दक्षिणेन च ।**
**अन्तरेण यकृल्लोमान् शूरसेनांश्च पाण्डवाः ॥ ४ ॥**

**उत्तरेण दशार्णान्** दशार्णस्योत्तरभाग इत्यर्थः । 'एनपा'[१] इति द्वितीया । एवमुत्तरत्रापि । **यकृल्लोमान्** तन्नामकदेशविशेषस्य **अन्तरेण** मध्यतः ॥ ४ ॥

**लुब्धा ब्रुवाणा मत्स्यस्य विषयं प्राविशन् वनात् ।**
**धन्विनो बद्धनिस्त्रिंशा विवर्णाः श्मश्रुधारिणः ॥ ५ ॥**

**लुब्धा ब्रुवाणाः** व्याधा इति तत्र तत्र ब्रुवन्तः । 'लुब्ध आकाङ्क्षिणि व्याधे' इति मेदिनी । **विवर्णाः** आतपादिना । **श्मश्रुधारिणः** संवत्सरपर्यन्तं दीक्षितत्वात् ।।५।।

**ततो जनपदं प्राप्य कृष्णा राजानमब्रवीत् ।**
**पश्यैकपद्यो दृश्यन्ते क्षेत्राणि विविधानि च ॥ ६ ॥**

**एकपद्यो** मार्गाः । 'वर्तन्येकपदीति च[२]' इत्यमरः । **क्षेत्राणि** सिद्धस्थानानि । 'क्षेत्रं शरीरके दारे सिद्धस्थानकलत्रयोः'[३] इत्यमरः ॥ ६ ॥

**व्यक्तं दूरे विराटस्य राजधानी भविष्यति ।**
**वसामेहापरां रात्रिं बलवान् मे परिश्रमः ॥ ७ ॥**

**अपरां रात्रिं** अपररात्रिम् । अत्यन्तसंयोगे द्वितीया ॥ ७ ॥

**युधिष्ठिर उवाच -**

**धनञ्जय समुद्यम्य पाञ्चालीं वह भारत ।**
**राजधान्यां निवत्स्यामो विमुक्ताश्च वनादितः ॥ ८ ॥**

---

१. एनपा द्वितीया । पा.सू.(२/३/३१)

२. 'वर्तनी पथि । वर्तने तर्कुपिण्डे च' इति हैमः ।।

३. इत्यमरभानू । इति क्वचित् ।

**वनादितः** इतो वनात् ।। ८ ।।

**वैशम्पायन उवाच -**

**तामादायार्जुनस्तूर्णं द्रौपदीं गजराडिव ।**
**सम्प्राप्य नगराभ्याशमवतारयदर्जुनः　　।। ९ ।।**

**नगराभ्याशं** तत्समीपम् । 'समीपे निकटासन्नसन्निकृष्टसनीडवत् । सदेशाभ्याशसविधसमर्यादसवेशवत्' इत्यमरः । **अवतारयत्** अवातारयत् ।। ९ ।।

**स राजधानीं सम्प्राप्य कौन्तेयोऽर्जुनमब्रवीत् ।**
**क्वायुधानि समासज्य प्रवेक्ष्यामः पुरं वयम्　　।। १० ।।**

**समासज्य** संस्थाप्य ।। १० ।।

**सायुधाश्च प्रवेक्ष्यामो वयं तात पुरं यदि ।**
**समुद्वेगं जनस्यास्य करिष्यामो न संशयः　　।। ११ ।।**

**समुद्वेगं** भयं ।। ११।।

**गाण्डीवं च महद्गाढं लोके च विदितं नृणाम् ।**
**तच्चेदायुधमादाय गच्छामो नगरं वयम्　　।। १२ ।।**

**गाढं** दृढम् ।। १२ ।।

**क्षिप्रमस्मान् विजानीयुर्मनुष्या[१] नात्र संशयः ।**
**ततो द्वादशवर्षाणि प्रवेष्टव्यं वने पुनः　　।। १३ ।।**

**विजानीयुः** पाण्डवत्वेन । का नो हानिस्तत इत्यत आह– **तत इति** ।। १३ ।।

१. 'मनुष्याः' इत्यनेन पाण्डवानां अमानुषत्वं दैवत्वं द्योतितमिति ज्ञेयम् ।

**एकस्मिन्नपि विज्ञाते प्रतिज्ञातं हि नस्तथा ।**

**अर्जुन उवाच -**

**इयं कूटे मनुष्येन्द्र गहना महती शमी ।। १४ ।।**

'गाण्ड्यजगात्सञ्ज्ञायाम्'[१] इति मत्वर्थे वः । 'शरासनम् । कपिध्वजस्य गाण्डीवगाण्डिवौ पुंनपुंसकौ' इत्यमरः । गाण्डीवधारिणि मयि विज्ञाते भवतां किमित्यत आह– **एकस्मिन्निति** ।। अस्मासु एकस्मिन्नपि विज्ञाते द्वादशवर्षाणि अस्माभिः वनं प्रवेष्टव्यमित्यन्वयः । कुतस्तथा कर्तव्यमित्यत आह– **प्रतिज्ञात-मिति** ।। अस्माभिः **कूटे** निकुञ्जे 'कूटः निकुञ्जे कान्तारे' इति विश्वः ।।१४।।

**भीमशाखा दुरारोहा श्मशानस्य समीपतः ।**
**नचापि विद्यते कश्चिन्मनुष्य इति मे मतिः ।। १५ ।।**

**योऽस्मान्निदधतो द्रष्टा भवेच्छस्त्राणि पाण्डव ।**
**उत्पथे हि वने जाता मृगव्यालनिषेविते ।। १६ ।।**

**उत्पथे** उद्गतं पथ इति । उत्पथे वने **जाताः** । 'ऋक्पूरब्धूः पथा..'[२] इत्यकारप्रत्ययः । व्यालाः सर्पाः वनगजा वा ।। १६ ।।

**समीपे वा श्मशानस्य गहनस्य विशेषतः ।**
**समाधायायुधं शम्यां गच्छामो नगरं प्रति ।। १७ ।।**

**आयुधं** आयुधानि ।। १७ ।।

**एवमत्र यथायोगं विहरिष्याम भारत ।। १८ ।।**

**विहरिष्यामः** । पूर्वोक्तरीत्या ।। १८ ।।

---

१. गाण्ड्यजगात्सञ्ज्ञायाम् । पा.सू. (५/२/११०)

२. ऋक्पूरब्धूःपथामानक्षे । पा.सू. (५/४/७४)

**वैशम्पायन उवाच -**

**एवमुक्त्वा स राजानं धर्मात्मानं युधिष्ठिरम् ।**
**प्रचक्रमे निधानाय शस्त्राणां भरतर्षभ ।। १९ ।।**

**धर्मात्मानं** धर्मेषु धनुरादिषु आत्मा मनो यस्य तम् । 'धर्मोऽस्त्री पुण्यधनुषोः' इति वाचस्पतिरिति भानुः । **प्रचक्रमे** 'प्रोपाभ्याम् ..'[1] इत्यात्मनेपदता ।। १९ ।।

**येन देवान् मनुष्यांश्च सर्वांश्चैकरथोऽजयत् ।**
**स्फीतां जनपदांश्चान्यानजयत् कुरुपुङ्गवः ।। २० ।।**

**तदुदारं महाघोषं सपत्नबलसूदनम् ।**
**अपज्यमकरोत् पार्थो गाण्डीवं सुभयङ्करम् ।। २१ ।।**

**सपत्ना**नां शत्रूणां **बलं** सैन्यं **सूद**यतीति तत् तथा । अप अपगता ज्या यस्मात् तत् । 'रिपौ वैरिसपत्नानि' 'मौर्वी ज्या सिञ्जनी गुणे' इत्युभयतश्चामरः । 'भयङ्करं प्रतिभयम्' इत्यमरः । 'मेघर्तिभयेषु कृञः'[2] इति खच् ।। २१ ।।

**येन वीरः कुरुक्षेत्रमभ्यरक्षत् परन्तपः ।**
**अमुञ्चद्धनुषस्तस्य ज्यामक्षय्यां युधिष्ठिरः ।। २२ ।।**

**अक्षय्यां** क्षेतुमशक्यां दिग्जये तत्काले ।। २२ ।।

**पाञ्चालान् येन सङ्ग्रामे भीमसेनोऽजयत् प्रभुः ।**
**प्रत्यषेधद् बहूनेकः सपत्नानेव दिग्जये[3] ।। २३ ।।**

**निशम्य यस्य विस्फारं व्यद्रवन्त रणे परे ।**
**पर्वतस्येव दीर्णस्य विस्फोटमशनेरिव ।। २४ ।।**

---

१. प्रोपाभ्यां समर्थाभ्याम् । पा.सू. (१/३/४२)।

२. पा.सू (३/२/४४)

३. राजसूयाङ्गभूतभीमसेनकृतपूर्वदिग्विजये इति ज्ञेयम् ।

**परे** शात्रवः ।। २४ ।।

**सैन्धवं येन राजानं पर्यामृषितवानथ ।**
**ज्यांपाशां धनुषस्तस्य भीमसेनोऽवतारयत् ।। २५ ।।**

**येन** धनुषा **सैन्धवं** जयद्रथं द्रौपदीप्रमाथे । **पर्यामृषितवान्** सेहे । **अवतारयत्** अवातारयत् ।। २५ ।।

**अजयत् पश्चिमामाशां धनुषा येन पाण्डवः ।**
**माद्रीपुत्रो महाबाहुस्ताम्रास्यो मितभाषितः ।। २६ ।।**

**मितभाषितः** मितभाषणशीलः ।। २६ ।।

**तस्य मौर्वीमपाकर्षच्छूरः सङ्क्रन्दनो युधि ।**
**कुले नास्ति समो रूपे यस्येति नकुलः स्मृतः ।। २७ ।।**

**सङ्क्रन्दनः** वैर्याह्वानकर्ता । तद्रोदको वा । **कुले** कौरवे । 'नभ्राण्...'[1] इति नञः प्रकृतिभावः ।। २७ ।।

**दक्षिणां दक्षिणाचारो दिशं येनाजयत् प्रभुः ।**
**अपज्यमकरोद्वीरः सहदेवस्तदायुधम् ।। २८ ।।**

**दक्षिणां** दिशं । दक्षिणः उदारः । 'दक्षिणो सरलोदारौ' इति अमरः । **आयुधं** धनुः ।। २८ ।।

**खड्गांश्च दीप्तान् दीर्घांश्च कलापांश्च महाधनान् ।**
**विपाठान् क्षुरधारांश्च धनुर्भिर्निदधे सह ।। २९ ।।**

---

१. नभ्राण्नपान्नवेदानासत्यानमुचितकुलनखनपुंसकनक्षत्रनक्रनाकेषु प्रकृत्या ।
- पा.सू. ६/३/७५

**विपाठान्** बाणविशेषान् एवं क्षुरधाराः । **धनुर्भिः सह निदधे** स्थितस्थले स्थापयामास ।। २९ ।।

**वैशम्पायन उवाच -**

**अथान्वशासन्नकुलं कुन्तीपुत्रो युधिष्ठिरः ।**
**आरुह्येमां शमीं वीर धनूंष्येतानि निक्षिप ।। ३० ।।**

**आन्वशासत्** अशिक्षयत् । **अन्वशासदित्यपि पाठः** । तत्र 'गणकार्थमनित्यम्' इति सम्भवो ज्ञेयः । **धनूंषि एतानि** खड्गादीनि च **निक्षिप** स्थापय ।। ३० ।।

**तामुपारुह्य नकुलो धनूंषि निदधे स्वयम् ।**
**यानि [१]तस्या वकाशानि दृढरूपाण्यमन्यत ।। ३१ ।।**

**तां** शमीम् । **तस्याः** शम्याः । **वकाशानि** अवकाशानि विवराणीति यावत् । 'वष्टि नागुरिरल्लोपमवाप्योरुपसर्गयोः' इत्युक्तेः । तत्र 'व्यदधत्' इति' पाठः । 'निदधत्' इति पाठे 'पर्यबन्धत' इत्यनेनान्वयः ।। ३१ ।।

**यत्र चापश्यत स वै तिरो वर्षाणि वर्षति ।**
**तत्र तानि दृढैः पाशैः सुगाढं पर्यबन्धत ।। ३२ ।।**

**यत्र** स्थले मेघः **वर्षाणि तिरो वर्षति** । तिर्यक् करोतीत्ययम् । **अन्वपश्यत** अपश्यत् । व्यजानात् **तत्र पर्यबन्धत** अबध्नात् । वृष्टिभयं यथा न भवेत्, तथाऽकरोदिति भावः ।। ३२ ।।

**शरीरं च मृतस्यैकं समबध्नन्त पाण्डवाः ।**
**विवर्जयिष्यन्ति नरा दूरादेव शमीमिमाम् ।। ३३ ।।**

**शरीरं** दैवात् तत्र पतितं **मृतस्य** प्रेतस्य स्त्रीशरीरम् । अर्जुनेन विद्यया सृष्टमिति सम्प्रदाय-विदः । अत्र चौत्प्रेक्षिकाः । निरन्तरं परपरासुकरणेन तच्छरीरस्पृष्ट्येव तद्गन्धाघ्राणनेन

---

१. तस्यावकाशानि (नि. पा.)

च तोषस्तोषः तदभिमानिनां देवानामित्येतद्व्यपदेशेन बाणादिबहिर्निस्सरणं सहसा भवत्विति तच्छान्तिमकरोत्, पार्थश्चतुर इति उत्प्रेक्षयन्ति । **समबध्नन्त** समबध्नन् । 'श्नाभ्यस्तयोरातः'[१] इत्याकारलोपः । तत्र निमित्तमाह– **विवर्जेति** ।। ३३ ।।

**आबद्धं शवमत्रेति गन्धमाघ्राय पूतिकम् ।**
**अशीतिशतवर्षेयं माता न इति वादिनः ।। ३४ ।।**

**पूतिकं** पूतिगन्धं दुर्गन्धम् । चोरा द्वेषिणो वा । कश्चिदुद्बोधेन किमबध्नन्निति राजभटाः विचारयेयुरिति स्वयमेवेदमपदेशेनोपदिशन्तो यथा लोकानालोकयेयुः तथा चक्रुरित्याह– **अशीतीति** ।। अशीतिवर्षा वा शतवर्षा वेत्यनास्थयैवमुक्तिः । अशीत्युत्तरशतवर्षेति वा ।। ३४ ।।

**कुलधर्मोऽयमस्माकं पूर्वैराचरितोऽपि वा ।**
**समासज्याथ वृक्षेऽस्मिन्निति वै व्याहरन्ति ते ।। ३५ ।।**

एतादृशीयं नोऽस्माकं मातेति वदाम इति परस्परं वादिनस्ते पाण्डवाः । शवमायुधजातं च **समासज्य** कुलवृद्धायाः शमीबन्धनरूपोऽस्माकं कुलधर्मो वा पूर्वैरस्मत्कुलजैर्मध्ये **आचरित इति वा ते व्याहरन्ति** ।। ३५ ।।

**आगोपालाविपालेभ्य आचख्युस्ते परन्तपाः ।**
**आजग्मुर्नगराभ्याशं पार्थाः शत्रुनिबर्हणाः ।। ३६ ।।**

प्रतिपण्डितमात्रमेवं नेत्याह– **आगोपालाविपालेभ्य इति** ।। गोपालाश्च अविपालाश्च तानभिव्याप्य । **आगोपालाविपालेभ्यः** 'आङ्मर्यादाभिविध्योः'[२] इति समासः । गोपालादीनां बहुशो वृक्षमूले निवासात् तांस्ततो व्यावर्तयितुमवधितया तद्ग्रहणम् ।। ३६ ।।

---

१. श्नाभ्यस्तयोरातः । पा.सू. (६/४/११२)

२. पा.सू. (२/१/१३)

**जयो जयन्तो विजयो जयत्सेनो जयद्बलः ।**
**इति गुह्यानि नामानि चक्रे तेषां युधिष्ठिरः ।। ३७ ।।**

आत्मा च ते चत्वारश्च । **तेषां** इति गुह्यानि **नामानि** एकान्ते व्यवहारार्थम् **चक्रे** । 'त्यदादीनि सर्वैर्नित्यम्'[१] इत्येकशेषः । स्वयं नाम्ना जयः सन् जयन्त इत्यादिगुह्यनामानि तेषां भीमादीनां चक्रे इति वा ।। ३७ ।।

**ततो यथा प्रतिज्ञाभिः प्राविशन् नगरं महत् ।**
**अज्ञातवासं वत्स्यन्तो राष्ट्रे वर्षं त्रयोदशम् ।। ३८ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि पञ्चमोऽध्यायः ।।**

**यथा** सम्यक् । 'निवृत्तिमार्गः कथित आदौ भगवता यथा'[२] इति सुधोक्तेः । **प्रतिज्ञाभिः** प्रतिज्ञातॄणां षट्त्वाद्बहुवचनम् । **त्रयोदशं वर्षं** सम्पूर्णम् । **यथा** सम्यक् । **अज्ञातवासं वत्स्यन्तो नगरं प्राविशन्**नित्यन्वयः ।। ३८ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां पञ्चमोऽध्यायः ।।**

*****

# ६. षष्ठोऽध्यायः

**( युधिष्ठिरकर्तृकं दुर्गादेव्याः स्तवनम् )**

**वैशम्पायन उवाच -**

**विराटनगरं रम्यं गच्छमानो युधिष्ठिरः ।**
**अस्तुवन्मनसा देवीं दुर्गां त्रिभुवनेश्वरीम् ।। १ ।।**

---

१. पा.सू. (१/२/७२)

२. न्यायसुधा (३/३/९७) ।

**गच्छमानः** गच्छन् ॥ १ ॥

**यशोदागर्भसम्भूतां नारायणवरप्रियाम् ।**
**नन्दगोपकुले जातां मङ्गल्यां कुलवर्धिनीम् ॥ २ ॥**

**नारायणवरप्रियाम्** तस्यात्यन्तप्रीतिपात्रम् । नारायणवरैः 'लोकास्त्वां पूजयिष्यन्ति'[1] इत्यादिरूपैः । प्रियमिष्टं यस्याः सेति वा । **कुले** गृहे । **मङ्गल्यां** मङ्गलैः साधुभूतां **कुलवर्धिनीं** प्रसादमुखेन ॥ २ ॥

**कंसविद्रावणकरीमसुराणां क्षयङ्करीम् ।**
**शिलातलविनिक्षिप्तामाकाशं प्रति गामिनीम् ॥ ३ ॥**

**कंसविद्रावणकरीम्** स्वमारणोद्योगसमये । **क्षयङ्करीम्** । छान्दसो मुम् । 'अशनायाम्' इत्यत्र बृहद्भाष्योक्तदिशाऽऽधिक्ये बिन्दुर्वा । **शिलातलविनिक्षिप्तां** कंसेन ॥ ३ ॥

**वासुदेवस्य भगिनीं दिव्यमाल्यविभूषिताम् ।**
**दिव्याम्बरधरां देवीं खड्गखेटकधारिणीम् ॥ ४ ॥**

**खड्गखेटकधारिणीम्** खड्गचर्मधारिणीम् ॥ ४ ॥

**स्तोतुं प्रचक्रमे भूयो विविधैः स्तोत्रसम्भवैः ।**
**आमन्त्र्य दर्शनाकाङ्क्षी राजा देवीं सहानुजः ॥ ५ ॥**

---

१. **अर्चिष्यन्ति मनुष्यास्त्वां** सर्वकामवरेश्वरीम् ।
नानोपहारबलिभिः सर्वकामवरप्रदाम् ।
नामधेयानि कुर्वन्ति स्थानानि च नरा भुवि ।
दुर्गेति भद्रकाळीति विजया वैष्णवीति च ।
कुमुदा चण्डिका कृष्णा माधवी कन्यकेति च ।
माया नारायणीशाना शारदेत्यम्बिकेति च । - इति श्रीमद्भागवते (१०/३/११-१३)

**भूयः** पुनः वाचाऽपि **स्तोतुं प्रचक्रमे** । गतम् । मनसा अस्तुवदिति पूर्वमुक्तेः । सम्भवन्ति युक्तानि भवन्तीति तथा । सम्भवानि च तानि स्तोत्राणि च स्तोत्रसम्भवानि विशेषणस्य परनिपातः । योग्यस्तोत्रैरित्यर्थः । **आमन्त्र्य** सम्बोद्ध्य ॥ ५ ॥

**नमोऽस्तु वरदे कृष्णे कुमारि ब्रह्मचारिणि ।**
**बालार्कसदृशाकारे पूर्णचन्द्रनिभानने ॥ ६ ॥**

**कृष्णे** कृष्णवर्णे । 'वर्णः श्यामो विशेषोऽत्र'[१] इति तन्त्रसारोक्तेः । **कुमारि** सदा कौमारवयस्के । 'वयसि प्रथमे'[२] इति ङीप् । **ब्रह्मचारिणि** लोकदृष्ट्या । **बालार्कसदृशाकारे** स्वच्छतया ॥ ६ ॥

**चतुर्भुजे चतुर्वक्त्रे पीनश्रोणिपयोधरे ।**
**मयूरपिच्छवलये(ऽ)केयूराङ्गदधारिणि ॥ ७ ॥**

**चतुर्भुजे**एकैकस्मिन्भागे। 'अष्टभुजासमग्रा'[३]इत्यन्यत्रोक्तेः।**चतुर्वक्त्रे**रूपान्तरेण। **पीनश्रोणिपयोधरे** श्रोणिः कटिश्च पयोधरौ च ते तथा पीनाः श्रोणिपयोधराः यस्याः सा, तस्याः सम्बुद्धिः । मयूरपिच्छान्येव वलये यस्यास्तस्याः सम्बुद्धिः । अकेयूराङ्गदानि । आकाशगमनात् प्राक् अकेयूरा । अनन्तरमङ्गदधारिणीत्यर्थः । 'केयूरमङ्गदं तुल्ये' इत्यमरपर्यायत्वोक्तेरेवं छेदः । 'कटिः श्रोणिः' इत्यमरः । 'पिच्छबर्हे नपुंसके' इति च ॥ ७ ॥

**भासि देवि यथा पद्मा नारायणपरिग्रहा ।**
**स्वरूपं ब्रह्मचर्यं च विशदं तव खेचरि ॥ ८ ॥**

---

१. तन्त्रसारसङ्ग्रहे । (४/६१)

२. वयसि प्रथमे । पा.सू. (४/१/२०)

३. 'सायुधाष्टमहाभुजा' (१०/५/९) इति भागवतेऽपि ।

**पद्मा** कमला । 'परिग्रहः परिजने पत्न्याम्' इति विश्वः । **स्वरूपं** त्वद्रूपं **विशदं** बहुलव्यापि । **खेचरि** । 'तत्पुरुषे कृति..'[1] इत्यलुक् ।। ८ ।।

**कृष्णच्छविसमा कृष्णा सङ्कर्षणनिभानना ।**
**बिभ्रती विपुलौ बाहू शक्रध्वजसमुच्छ्रयौ ।। ९ ।।**

**कृष्णस्य** या **छविः** कीर्तिस्तया **समा** । **कृष्णा** नाम्ना । सङ्कर्षणस्य बलरामस्य निभमाननं यस्याः सा तद्भगिनीत्वात् । **बाहू** इति वराभयधारिणौ द्वौ । इन्द्रध्वजस्य समुच्छ्रयो ययोस्तौ ।। ९ ।।

**पात्री च पङ्कजी घण्टी विशुद्धा चैव या भुवि ।**
**पाशं धनुर्महाचक्रं विविधान्यायुधानि च ।। १० ।।**

अष्टभुजत्वादितरभुजषट्कस्यायुधान्याह– **पात्रीति** ।। **पात्री** एकः । **पङ्कजी** द्वितीयः । **घण्टी** तृतीयः । व्रीह्यादीनि उर्वरितभुजत्रये । पाशादीनि बिभ्रतीत्यन्वयः । एवं विविधानीति वा । पृथग्वा ।। १० ।।

**कुण्डलाभ्यां सुपूर्णाभ्यां कर्णाभ्यां च विभूषिता ।**
**चन्द्रविस्पर्धिना देवि मुखेन त्वं विराजसे ।। ११ ।।**

**कुण्डलाभ्यां** कुण्डलद्वयेन **सुपूर्णाभ्यां** पूरिताभ्यां ।। ११ ।।

**मुकुटेन विचित्रेण केशबन्धेन शोभिना ।**
**भुजङ्गाभोगवासेन श्रोणिसूत्रेण राजता ।। १२ ।।**

**केशबन्धेन शोभिना मुकुटेन** किरीटेन भ्राजसे । किं च भुजङ्गस्य भोगवद्वासो व्यवस्था स्थितिरिति यावत् । यस्य तेन **श्रोणिसूत्रेण** कटिसूत्रेण भ्राजसे । 'वासो गृहे व्यवस्थाने' इति विश्वः ।। १२ ।।

---

१. तत्पुरुषे कृति बहुलम् । पा.सू. (६/३/१४)

**विभ्राजसे चाबद्धेन भोगेनेवेह मन्दरः ।**
**ध्वजेन शिखिपिच्छानामुच्छ्रितेन विराजसे　　।। १३ ।।**

**भोगेन** वासुकिशरीरेण ।। १३ ।।

**कौमारव्रतमास्थाय त्रिदिवं पालितं त्वया ।**
**तेन त्वं स्तूयसे देवि त्रिदशैः पूज्यसेऽपि च　　।। १४ ।।**

**त्रिदिवं** स्वर्गः । 'त्रिदिवं तु खे । त्रिदिवा नद्यां सरिदन्तरे' इति मेदिन्युक्तेस्त्रिदिवशब्दः क्लीबोऽपि ।। १४ ।।

**त्रैलोक्यरक्षणार्थाय महिषासुरनाशिनि ।**
**प्रसन्ना मे सुरश्रेष्ठे दयां कुरु शिवा भव　　।। १५ ।।**

त्वं **मे प्रसन्ना** सती मयि **दयां कुरु** । **शिवा** मङ्गलरूपिणी भव । हे [1]**मे रमे सुरश्रेष्ठे** यथा प्रसन्ना सती दयां कृतवती, तथा कुरु । **शिवा** कुरूणामस्माकं शिवा भवेति वा ।। १५ ।।

**जया त्वं विजया चैव सङ्ग्रामे च जयप्रदा ।**
**ममापि विजयं देहि वरदा त्वं च साम्प्रतम्　　।। १६ ।।**

यस्मात् त्वं सङ्ग्रामे जयविजयप्रदा, तस्मान्नाम्ना **जया विजया** च । यस्माच्च त्वं वरप्रदा तस्मात्साम्प्रतमिदानीं **ममापि विजयं देहि** ।। १६ ।।

**विन्ध्ये चैव नगश्रेष्ठे तव स्थानं हि शाश्वतम् ।**
**कालि कालि महाकालि सीधुमांसपशुप्रिये　　।। १७ ।।**

सीधुर्मद्यं सीधु वा । पशवो मुद्राङ्किताः । ते प्रिया यस्याः सा तथा तस्याः सम्बुद्धिः । **कालि** । कालवर्णत्वात् । जानपदेति ङीप् । आदरात् त्रिरुक्तिः ।। १७ ।।

---

१. 'इन्दिरा **मा** रमा' इत्यमरः ।

**कृतानुयात्रा भूतैस्त्वं वरदा कामचारिणी ।**
**भारावतारे ये च त्वां संस्मरिष्यन्ति मानवाः ।। १८ ।।**

**भूतैः** प्राणिभिः त्वं **कृतानुयात्रा** वृता अनुयात्रा अनुसरणं यस्याः सा । हे **भारावतारे** भारस्यावतारो ययेति ।। १८ ।।

**प्रणमन्ति च ये त्वां हि प्रभाते तु नरा भुवि ।**
**[1]दुर्गात् तारयसे दुर्गे तत्त्वं दुर्गा स्मृता बुधैः ।। १९ ।।**

यस्माद् दुः दुःखरूपात् दुर्गात् गमयसि तारयसीति तथा । निर्वचनान्तरं तु मार्कण्डेयपुराणे देवीमाहात्म्ये दर्शितम् -

तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम् ।
दुर्गा देवीति विख्यातं तन्मे नाम भविष्यति ।। इति ।[2]

'दुर्दुःखमिति सम्प्रोक्तं खं सुखं चोच्यते बुधैः' [3]इति तात्पर्यात् । 'दुरशोभनदुःखयोः' इत्यमरः ।। १९ ।।

**कान्तारेष्ववसन्नानां मग्नानां च महार्णवे ।**
**दस्युभिर्वा निरुद्धानां त्वं गतिः परमा नृणाम् ।। २० ।।**

**कान्तारेषु** महावनेषु 'कान्तारोऽस्त्री महावनम्' इत्यमरः ।। २० ।।

---

१. प्रलये जलदुर्गाऽसि सर्गादौ गिरिविस्तृतिः ।
इदानीं स्थलदुर्गाऽसि दुर्गे त्वं सद्गुणार्णवे ।।
दुर्ज्ञेयत्वाद्दुःखदत्वाद्दुष्प्राप्यत्वाच्च दुर्जनैः ।
सतामभयभूमित्वाद् दुर्गा त्वं हृद्गुहाश्रयात् ।। - इति तीर्थप्रबन्धे (१/१९,२०)

२. मार्कण्डेयपुराणे (९१/४६) ।

३. भागवततात्पर्ये (३/२९/३५) ।

**जलप्रतरणे चैव कान्तारेष्वटवीषु च ।**
**ये स्मरन्ति महादेवि नच सीदन्ति ते नराः ॥ २१ ॥**

**कान्तारेषु** दुर्गममार्गेषु ॥ २१ ॥

**त्वं कीर्तिः श्रीर्धृतिः सिद्धिः विद्या त्वं सन्ततिर्मतिः ।**
**सन्ध्या रात्रिः प्रभा निद्रा ज्योत्स्ना कान्तिः क्षमा दया ॥२२॥**

**कीर्तिः श्रीः** इत्यादिका तदभिमानित्वात् ॥ २२ ॥

**नृणां च बन्धनं मोहं पुत्रनाशं धनक्षयम् ।**
**व्याधिं मृत्युभयं चैव पूजिता नाशयिष्यसि ॥ २३ ॥**

**पुत्रनाशं** 'नश अदर्शने' इति धातोः नाशं अदर्शनमित्यर्थः । **धनक्षयं** धननिर्गमनम् । 'क्षि निवासगत्योः' इति स्मरणात् ॥ २३ ॥

**सोऽहं राज्यात् परिभ्रष्टः शरणं त्वां प्रपन्नवान् ।**
**प्रणतश्च तथा मूर्ध्ना तव देवि सुरेश्वरि ॥ २४ ॥**

**त्वां शरणं** रक्षयित्रीं **प्रपन्नवान्** । **प्रणतः** आदिकर्मणि क्तः ॥ २४ ॥

**त्राहि मां पद्मपत्राक्षि सत्ये सत्या भवस्व नः ।**
**शरणं भव मे दुर्गे शरण्ये भक्तवत्सले ॥ २५ ॥**

**त्राहि** । धात्वन्तरस्य रूपम् । त्रायते इति त्राः । स इवाचरति । आचरसीति त्राहीति वा । **भवस्व** प्राप्नुहि ॥ २५ ॥

**एवं स्तुता हि सा देवी दर्शयामास पाण्डवम् ।**
**उपगम्य तु राजानमिदं वचनमब्रवीत् ॥ २६ ॥**

**पाण्डवं** आत्मानं **दर्शयामास** । **तुराजानमिति** पदच्छेदः । तुरेण आजः आगमनं यस्याः । भावे घञ् । **देवी** । तं नेतारं युधिष्ठिरम् ।। २६ ।।

देव्युवाच

**शृणु राजन् महाबाहो मदीयं वचनं प्रभो ।**
**भविष्यत्यचिरादेव सङ्ग्रामे विजयस्तव ।। २७ ।।**

**क्षोभयिष्यसि सम्प्राप्तां समेतां कुरुवाहिनीम् ।**
**राज्यं निष्कण्टकं कृत्वा भोक्ष्यसे मेदिनीं पुनः ।। २८ ।।**

**क्षोभयिष्यसि** सञ्चालयिष्यसि । **भोक्ष्यसे** अनुभविष्यसि ।। २८ ।।

**भ्रातृभिः सहितो वीर प्रीतिं प्राप्स्यसि पुष्कलाम् ।**
**मत्प्रसादाच्च ते सौख्यमारोग्यं च भविष्यति ।। २९ ।।**

**ये च मां कीर्तयिष्यन्ति लोके विगतमत्सराः ।**
**तेषां तुष्टा प्रदास्यामि राज्यमायुर्वपुः सुतम् ।। ३० ।।**

**वपुर्धनमिति वा** । पाठौ स्पष्टार्थौ ।। ३० ।।

**प्रवासे नगरे वाऽपि सङ्ग्रामे शत्रुसङ्कटे ।**
**अटव्यां दुर्गकान्तारे सागरे गहने गिरौ ।। ३१ ।।**

**ये स्मरिष्यन्ति मां राजन् यथाऽहं भवता स्मृता ।**
**न तेषां दुर्लभं किञ्चिदस्मिंल्लोके भविष्यति ।। ३२ ।।**

**अस्मिन्** भूलोके परत्र च ।। ३२ ।।

**इदं स्तोत्रवरं भक्त्या शृणुयाद्वा पठेत वा ।**
**तस्य सर्वाणि कार्याणि सिद्धिं यास्यन्ति पाण्डवाः ।।३३।।**

**पठेत** पठेत् । **पठेन्ममेति च क्वचित्पाठः** । हे **पाण्डवाः** । यद्यपि स्तोता धर्मराज एक एव, तस्यैव च स्वरूपं प्रदर्शितम्, तथाऽपि पैतृष्वस्रीयत्वानुबन्धस्य मुख्यतो अमुख्यतो वा सर्वान् प्रत्यप्यविशिष्टत्वादेवमुक्तिः ।। ३३ ।।

**मत्प्रसादाच्च वः सर्वान् विराटनगरे स्थितान् ।**
**न प्रज्ञास्यन्ति कुरवो नरा वा तन्निवासिनः ।। ३४ ।।**

**तन्निवासिनः** विराटनगरवासिनः ।। ३४ ।।

**इत्युक्त्वा वरदा देवी युधिष्ठिरमरिन्दमम् ।**
**रक्षां कृत्वा च पाण्डूनां तत्रैवान्तरधीयत ।। ३५ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि षष्ठोऽध्यायः ।।**

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां षष्ठोऽध्यायः ।।**

*****

# ७. सप्तमोऽध्यायः

**( युधिष्ठिरेण यतिवेषपरिग्रहेण विराटसभाप्रवेशः । विराटनगरे निवासश्च )**

**वैशम्पायन उवाच -**

**ततो विराटं प्रथमं युधिष्ठिरो राजा सभायामुपविष्टमाव्रजत् ।**
**वैदूर्यरूपान् प्रतिमुच्य काञ्चनानक्षान् स कक्षे परिगृह्य वाससा ।। १ ।।**

**वैदूर्यरूपान् काञ्चनानक्षान्** पाशान् । उपलक्षणमेतत् । पूर्वोक्तरीत्या दान्तादयः सर्वेऽपि ग्राह्याः । **वाससा प्रतिमुच्य** बद्ध्वा । **कक्षे** बाहुमूले । 'ग्लहः । अक्षास्तु देवनाः पाशकाश्च ते', 'बाहुमूले उभे कक्षौ' इत्युभयत्रामरः ।। १ ।।

**नराधिपो राष्ट्रपतिर्यशस्विनं महायशाः कौरववंशवर्धनः ।**
**महानुभावो नरराजसत्कृतो दुरासदस्तीक्ष्णविषो यथोरगः ॥२॥**

**नरराजसत्कृतः** सर्वराजैः पूजितः । पूर्वम् । इदानीं नरराजेन चकाश इति वा । वक्ष्य-माणनिदर्शनानुगुण्याद् **दुरासदः** दुःखेनासादितुं शक्यः ॥ २ ॥

**बलेन रूपेण नरर्षभो महानपूर्वरूपेण यथाऽमरस्तथा ।**
**महाभ्रजालैरिव संवृतो रविर्यथाऽनलो भस्मवृतश्च वीर्यवान् ॥३॥**

**अमरः** शक्रादिः । **अपूर्वरूपेण** स्वनिजरूपभिन्नावतारितरूपेण यथा भाति तथा बलेन रूपेणोपलक्षितोऽमरर्षभो विराटमाव्रजदिति पूर्वेणान्वयः । कलापकोऽयम् । 'चतुर्भिस्तु कलापकः' इत्युक्तेः । **वृतः** संवृतः । उपसर्गाणां धातुलीनार्थद्योतकत्वात् ॥ ३ ॥

**तमापतन्तं प्रसमीक्ष्य पाण्डवं विराटराडिन्दुमिवाभ्रसंवृतम् ।**
**समागतं पूर्णशशिप्रभाननं महानुभावं नचिरेण दृष्टवान् ॥ ४ ॥**

प्रसमीक्ष्यो दर्शनीयश्चासौ पाण्डवश्च तम् । तमायां रात्रौ आपतन्तं । तमिन्दुमिव । 'तमु ग्लानौ' इत्यस्मात् पचाद्यचि टापि रूपम् । 'तमा तम्यपि गीयते' इति द्विरूपकोशः । **नचिरेण** शीघ्रम् । **दृष्टवान्** ददर्श ॥ ४ ॥

**मन्त्रिद्विजान् सूतमुखान् विशस्तथा ये चापि केचित् परितः समासते ।**
**पप्रच्छ कोऽयं प्रथमं समेयिवान् नृपोपमोऽयं समवेक्षते सभाम् [illegible]**

**विशो** वैश्यान् । यः सभां प्रथममपूर्वतया **समेयिवान्** । यं च **अयं** जनः **समवेक्षते** सोऽयं क इति **पप्रच्छ** ॥ ५ ॥

**नतु द्विजोऽयं भविता नरोत्तमः पतिः पृथिव्या इति मे मनोगतम् ।**
**नचास्य दासो न रथो न कुञ्जरः समीपतो भ्राजति चायमिन्दुवत् [illegible]**

स्वयं लक्षणैस्तर्कयति– **नेति** ।। **नरोत्तमः** पुरुषश्रेष्ठः **पृथिव्याः पतिः** सम्राट् तथाप्ययम् **इन्दुवद् भ्राजति** यस्मात् तस्मादयं **पृथिव्याः पतिरिति मे मनोगतं** प्रमेयम् इत्येतस्मिन्नर्थे मे यतः गतं मन एवैतदर्थे साक्षीति वा ।। ६ ।।

**शरीरलिङ्गैरुपसूचितो ह्ययं [१]मूर्धाभिषिक्त इति मेऽत्र मानसम् ।**
**समीपमायाति च मे गतव्यथो यथा गजस्तामरसीं मदोत्कटः ।।७।।**

**शरीरलिङ्गैः** चिह्नैः **अत्र** राजत्वविषये **गतव्यथः** निष्कम्पः । **तामरसीं** पद्मिनीम् ।। ७ ।।

**वितर्कयन्तं तु नरर्षभस्तथा युधिष्ठिरोऽभ्येत्य विराटमब्रवीत् ।**
**सम्राड् विजानन्निह जीवितार्थिनं विनष्टसर्वस्वमुपागतं द्विजम् ।।८।।**

**वितर्कयन्तम्** ऊहयन्तं **विराटं** हि **सम्राट्** । [२]आरोपितविप्रत्वान्न नमनम् । सम्राडित्यनेन साम्राज्यमस्त्विति वैदिकधाटीमाटीकतेति ज्ञेयम् ।। ८ ।।

**इहाहमिच्छामि तवानघान्तिके वस्तुं यथाकामचरस्तथा विभो ।**
**तमब्रवीत् स्वागतमित्यनन्तरं राजा प्रहृष्टः प्रतिसङ्गृहाण च ।।९।।**

**यथा कामचरस्तथेह तवान्तिके वस्तुमिच्छामि** । **राजा** विराटः **प्रहृष्टः** सन् **स्वागतमित्यनन्तरं** त्वन्मनोगतं वरं **प्रतिसङ्गृहाण** स्वीकुर्वित्यब्रवीदिति केचित् । वस्तुतस्तु तं धर्मराजं प्रति स्वागतमित्यब्रवीत् । **अनन्तरं राजा प्रहृष्टः** सन् **सङ्गृहाण** सञ्जग्राह चेत्यन्वयः । लोट् तिङ्सामान्यार्थे । क्रियासमभिहारे लोट् । लोट् स्वौ वाचतध्वमोः' इति स्मरणात् । अत्र क्रियासमभिहारो निःसंशयत्वरूपो

---

१. मूर्धाभिषिक्त इति मे मनोगतम् । इति गी.पाठः ।

२. 'यतिः पूज्योऽखिलैर्यतः' । - म.भा.ता.नि (२३-३)

भृशार्थः । 'पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः । विगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्यमहर्दिवं दिवः'[1] इति माघः ।। ९ ।।

**तं राजसिंहं प्रतिगृह्य राजा प्रीत्याऽऽत्मना चैवमिदं बभाषे ।**
**कामेन ताताभिवदाम्यहं त्वां कस्यासि राज्ञो विषयादिहागतः ।।१०।।**

**प्रीत्याऽऽत्मना** मनसा च । मनःपूर्वकमिति यावत् । **कामेन** स्वेच्छानुसारेण । हे **तात** एतदीयं विप्रत्वमुक्तरीत्या स्वस्यासम्मतमिति तथोक्तिः । **कस्य राज्ञो विषयादिहागतोऽसि** ।। १० ।।

**गोत्रं च नामापि च शंस तत्त्वतः किञ्चापि शिल्पं तव विद्यते कृतम् ।**

**युधिठिर उवाच -**

**युधिष्ठिरस्यासमहं सखा पुरा वैयाघ्रपद्यः पुनरस्मि विप्रः ।। ११ ।।**

**शंस** कथय । **शिल्पं** कर्म । **कृतं** शिक्षितम् । पर्याप्तं वा । **आसम्** भूयासम् । अस्तेराशीर्लिङि छान्दस आर्धधातुकत्वाभावः । तेन भूभावाभावः, 'श्वसो....'[2] इत्यल्लोपाभावश्च न भवतः । 'यथा द्रौणेरुलूकेन कृतमप्यास बोधकम्'[3] इत्यत्र सुधोक्तदिशा विभक्तिप्रतिरूपकमव्ययम् । 'वास गतिदीप्त्यादानेषु' इति पठितधात्वन्तरस्यैवेदं रूपम् । 'गोत्रं नाम च' इत्येतदुत्तरान्वयि । **वैय्याघ्रपद्य इति** । तन्नामकगोत्रोत्पन्नः । 'वैय्याघ्रपद्यगोत्राय'[4] इति भीष्मार्घ्यप्रकारेणोक्तेः ।

---

१. - शिशुपालवधे १/५१

२. श्वसोवसीयः श्रेयसः । पा.सू. (५/४/८०)

३. अनुव्याख्याने (२/१/१४)

४. **वैयाघ्रपादगोत्राय** साङ्कृत्यप्रवराय च । गङ्गापुत्राय भीष्माय आजन्मब्रह्मचारिणे ।।
अपुत्राय जलं दद्मि नमो भीष्माय वर्मणे । भीष्मः शान्तनवो वीरः सत्यवादी जितेन्द्रियः ।।
आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियाम् । वसूनामवताराय शन्तनोरात्मजाय च ।।
अर्घ्यं ददामि भीष्माय आबालब्रह्मचारिणे । - इति भीष्मार्घ्यमन्त्रे ।

**पुनः**शब्दोऽवधारणे । वैय्याघ्रपद्य एव । 'पुनरप्रथमे प्रश्ने व्यावृत्तावधारणे' इति विश्वः ॥ ११ ॥

**अक्षान् प्रयोक्तुं कुशलोऽस्मि देव कङ्केति नाम्नाऽस्मि विराट विश्रुतः १२**

देविताऽहं **अक्षान् प्रयोक्तुं कुशलोऽस्मि** ॥ १२ ॥

**विराट उवाच -**

**ददामि ते हन्त वरं यमिच्छसि प्रशाधि मत्स्यान् वशगो ह्यहं तव ।**
**प्रिया हि धूर्ता मम देविनः सदा भवांश्च देवोपम राज्यमर्हति ॥ १३ ॥**

**प्रशाधि** शिक्षय । **देविनो मम** धूर्ता अक्षदेविनः **प्रियाः** । 'धूर्तोऽक्षदेवी कितवः' इत्यमरः ॥ १३ ॥

**युधिष्ठिर उवाच -**

**प्राप्तो विवादः प्रथमं विशाम्पते न विद्यते कश्चन मत्स्य हीनतः ।**
**न मे जितः कश्चन धारयेद्धनं वरो ममैषोऽस्तु तव प्रसादजः ॥ १४ ॥**

हे **विशाम्पते** द्यूते कश्चित् कश्चिद्विषयमुद्दिश्य **प्रथमं विवादः न विद्यत** इति नातो हीनतः पराजितान्नीचात् यदि विवादः **प्राप्तो** भवेत्, तर्हि **कश्चन मम यो जितः** मम धनं **न धारयेत्** । **एष तव प्रसादजः वरोऽस्तु** ॥ १४ ॥

**विराट उवाच -**

**हन्यामवश्यं यदि तेऽप्रियं चरेत् प्रव्राजयेयं विषयाद्विजांस्तथा ।**
**शृण्वन्तु मे जानपदाः समागताः कङ्को यथाऽहं विषये प्रभुस्तथा ॥ १५ ॥**

**चरेत्** विप्रातिरिक्तः । **प्रव्राजयेयं** बहिर्यापयेयम् । **विषये** देशे **यथाऽहं प्रभुः तथा कङ्को** अपि **प्रभुः** ॥ १५ ॥

**समानयानो भवितासि मे सखा प्रभूतवस्त्रो बहुपानभोजनः ।**
**पश्येस्त्वमन्तश्च बहिश्च सर्वदा कृतं च ते द्वारमपावृतं मया ।। १६ ।।**

**समानयानः** सैकरथादिः । प्रभूतं प्राज्यम् । **अपावृतं** अपगतावरणं कृतम् ।।१६।।

**ये त्वाऽनुवादेऽयुरवृत्तिकर्शिता ब्रूयाश्च तेषां वचनेन मां सदा ।**
**दास्यामि सर्वं तदहं न संशयो न ते भयं विद्यति सन्निधौ मम ।। १७ ।।**

**ये** जनाः **अनुवादैः** हीनविवादैः **पुरवृत्तिकर्शिताः** पुरविषये वृत्तिः विषये वा कर्शितास्तेषां वचनेन **मां सदा** ब्रूहि । **सदा** इत्यनेन नानावसरदुःस्थत्वं सूचयति ।। १७ ।।

**वैशम्पायन उवाच -**

**एवं स लब्ध्वा तु परं समागमं विराटराजेन नरर्षभस्तदा ।**
**उवास वीरः परमार्चितः सुखी न चापि कश्चिच्चरितं बुबोध तत् ।।१८।।**

**।। इति श्रीमहाभारते विराटपर्वणि पाण्डवप्रवेपर्वणि सप्तमोऽध्यायः ।।**

**परम्** उत्तमम् । **समागमं** मैत्रीं । **तदि**त्यव्ययं तस्य । **चरितं कश्चित् न बुबोध** ।। १८ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां सप्तमोऽध्यायः ।।**

*****

# ८. अष्टमोऽध्यायः

(भीमेन सूदवेषपरिग्रहेण विराटसभाप्रवेशः । विराटनगरे निवासश्च ।)

**वैशम्पायन उवाच -**

**अथापरो भीमबलः श्रिया ज्वलन्नुपाययौ सिंहविलासविक्रमः ।**
**खञ्जां च दर्वीं च करेण धारयन्नसिं च कालाङ्गमकोशमव्रणम् ॥१॥**

सिंहविलासवद् विक्रमः पादविक्षेपो यस्य सः । **खञ्जाम्** मन्थनदण्डम् । अन्ननिष्कासकहस्ताकारदारुविशेषमित्यर्थः । 'हुट्टु' इत्यपभ्रष्टभाषा । 'खञ्जा मन्थे प्रहस्ते च' इति मेदिनी । 'खञ्जा मन्थप्रहस्तयोः' इति विश्वः । **दर्वीं** लोहमयीम् । **कालाङ्गं** कृष्णायसमयम् । **अकोशं** आवरणरहितम् । **अव्रणं** निश्छिद्रम् ॥१॥

**स सूदरूपः परमेण वर्चसा रविर्यथा लोकमिमं प्रकाशयन् ।**
**स कृष्णवासा गिरिराजसारवांस्तं मत्स्यराजं समुपेत्य तस्थिवान् ॥२॥**

**कृष्णवासाः** । सूदधर्मप्रदर्शनार्थम् । गिरिराजस्येव सारः काठिन्यमस्यास्तीति तथा । **तस्थिवान्** तस्थौ । छन्दस्तुल्यत्वात्क्वसुः । 'तं तस्थिवांसम्'[1] इति क्वचिल्लोकेऽपि ॥ २ ॥

**तं वीक्ष्य राजा सभयोऽन्तिकागतं ततोऽब्रवीज्जानपदान् समागतान् ।**
**सिंहोन्नतांसोऽयमतीव रूपवान् यो दृश्यते को नु नरर्षभो युवा ॥ ३ ॥**

**सभयः** भयसहितः । वक्ष्यमाणप्रकारेण विलक्षणाकारदर्शनात् । **यमति इवेति छेदः** । यमवदाचरति नरर्षभ इवेत्यन्वयः ॥ ३ ॥

---

१. इति रघुवंशे । (५/६१)

**अदृष्टपूर्वः पुरुषो रविर्यथा [१]वितर्कयन्नद्य लभामि निश्चयम् ।**
**तथाऽस्य चित्ते ह्यपि संवितर्कयन्नरर्षभस्यास्य न यामि तत्त्वतः ।। ४ ।।**

**वितर्कयन्** स्वरूपनिर्धारणार्थं निश्चयं **न लभामि** न लभे । **तथा अस्य नरर्षभस्य चित्ते** मनसि यत् **तत्त्वतः** तत्त्वं रहस्यं वर्तते तदपि **संवितर्कयन् अद्य निश्चयं न यामि** ।। ४ ।।

**दृष्ट्वैव चैनं न विचारयाम्यहं गन्धर्वराजो यदि वा पुरन्दरः ।**
**जानीत कोऽयं मम दर्शने स्थितो यदीप्सितं तल्लभतां च मा चिरम् ।।५**

**न विचारयामि** साक्षात् । तदाकारदर्शनजनितभयादिति भावः । यूयं **जानीत** । **दर्शने** दृष्टिपथे । **लभतां** मत्तः ।। ५ ।।

**विराटवाक्येन च तेन चोदिता नरा विराटस्य समीपगामिनः ।**
**उपेत्य कौन्तेयमथाब्रुवंस्तथा यथा स राजाऽवददच्युतानुजम् ।।६।।**

अत्र **अच्युतो** धर्मः ।। ६ ।।

**ततो विराटं समुपेत्य पाण्डवः स भीमरूपो वचनं महामनाः ।**
**उवाच सूदोऽस्मि नरेन्द्र बल्लवो भजस्व मां व्यञ्जनकारमुत्तमम् ।। ७ ।।**

**सूदः** सूपकारः **बल्लवो** नाम्ना । व्यञ्जनकाराणां मुख्यैस्ते व्यञ्जनकारमुदः । तेषु श्रेष्ठम् । उत्तममिति पदम् । सापेक्षया विशेष्ये विशेषणाधायकं सत् । विशेषणतया व्यञ्जनपदेनान्वेति । ततश्च उत्तमव्यञ्जनकार इति भविष्यति । नचैतददृष्टचरमिति वाच्यम् । 'दीप्तानलार्कद्युतिमप्रमेयम्' [२]इत्यत्र अप्रमेयमिति द्युतावन्वेतीति टीकायां व्याख्यातत्वात् । परं परिपृच्छसि चेत् त्वं, स्वर्गी ध्वस्तस्तवोत्तरं दद्यात् ।। ७ ।।

---

१. वितर्कयन्नास्य । इति गी.पाठः ।

२. भगवद्गीता (११/१७)

**विराट उवाच -**

**न सूदतां बल्लव श्रद्दधामि ते सहस्रनेत्रप्रतिमो विराजसे ।**
**श्रिया च रूपेण च विक्रमेण प्रभाससे त्वं नृवरो नरेष्विह ।।८।।**

**बल्लव श्रद्दधामि त** इत्यत्र भीमस्य कालानुसारेण लाघवसूचनाय वो लघु पठनीयः । **श्रिया रूपेण च** नरेषु **प्रभाससे**ऽतो नरवरोऽसि न सूदः ।। ८ ।।

**भीमसेन उवाच -**

**नरेन्द्र सूदः परिचारकस्ते जानामि सूपान् प्रथमं च केवलान् ।**
**आस्वादिता ये नृप ते पुराऽभवन् युधिष्ठिरेणापि नृपेण सर्वशः ।।९।।**

**प्रथमं केवलान्** इत्यनेन जात्या सूपकारत्वमेव ममान्यच्च नियुद्धादिकमभ्युच्चयरूपमिति द्योत्यते । **ये सर्वशः** सूपा **आस्वादिताः** तान् केवलान् **सूपान्** जानामीत्यन्वयः ।। ९ ।।

**बलेन तुल्यश्च न विद्यते मया नियुद्धशीलश्च सदैव पार्थिव ।**
**गजैश्च सिंहैश्च समेयिवानहं सदा करिष्यामि तवानघ प्रियम् ।।**

**समेयिवान्** सन् तव **प्रियं करिष्यामि** ।। १० ।।

**विराट उवाच -**

**ददामि ते हन्त वरान् महानसे तथाहि कुर्याः कुशलं प्रभाषसे ।**
**न चैव मन्ये तव कर्म यत्समं समुद्रनेमिं पृथिवीं त्वमर्हसि ।।११।।**

**ते** तुभ्यं वरान् हन्त **ददामि । महानसे** यथा त्वयोक्तं **तथा कुर्याः । समं** योग्यम् ।। ११ ।।

**यथा हि कामो भवतस्तथा कृतो महानसे त्वं भव मे पुरस्कृतः ।**
**नराश्च ये तत्र समाहिताः पुरा भवांश्च तेषामधिपो मया वृतः ।।**

**मे** मया **पुरस्कृतः** सत्कृतस्त्वं **महानसे भव** । ननु प्राचीना वर्तन्ते कथं गन्तव्यं तत्रेति? तत्राप्याह– **नरा इति** ।। १२ ।।

**वैशम्पायन उवाच -**

**तथा स भीमो विहितो महानसे विराटराज्ञो दयितोऽभवद्दृढम् ।**
**उवास राज्ये न च तं पृथग्जनो बुबोध तत्रानुचराश्च केचन ।।१३।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि अष्टमोऽध्यायः ।।**

**विराटराज्ञो** विराटराजस्य 'जानन्ति पूर्वराजानः'[1] इत्यादिवत् समासान्तविधेरनित्यतया न टच् । **पृथक्** जनः मूर्खः । **तत्र** महानसे ।। १३ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां अष्टमोऽध्यायः ।।**

*****

# ९. नवमोऽध्यायः

**( सैरन्ध्रीरूपेण द्रौपद्या सुदेष्णाया गृहे निवासः । )**

**वैशम्पायन उवाच -**

**ततः केशान् समुत्क्षिप्य वेल्लिताग्राननिन्दितान् ।**
**कृष्णान् सूक्ष्मान् मृदून् दीर्घान् समुद्ग्रथ्य शुचिस्मिता ।।१।।**

अत्र कर्मकरणालोचनकाले द्रौपदीविचारस्यान्तिमत्वेऽपि तस्याः मुख्यतया भीमपत्नीत्वात् तत्प्रवेशानन्तरमेव प्रवेश उचित इति ज्ञेयम् । **वेल्लिताग्रान्** वेल्लितानि कुटिलान्यग्राणि येषां ते तथा तान् । 'आविद्धं कुटिलं भुग्नं वेल्लितं वक्रमित्यपि' इत्यमरः । 'वेल्लितं गमने क्लीबं कुटिले कुटिलेष्विति' इति भानुः । अत एव

१. गीतातात्पर्यनिर्णये (४/१) ब्रह्मतर्कवचनम् ।

**अनिन्दितान्** । **समुद्ग्रथ्य** आबद्ध्य **शुचिस्मिता** शुभ्रहासि । 'शुचिः शुद्धेऽनपहते शृङ्गाराषाढयोः सिते' इति विश्वः ।। १ ।।

**जुगूहे दक्षिणे पार्श्वेऽमृदूनसितलोचना ।**
**वासश्च परिधायैकं कृष्णं सुमलिनं महत् ।। २ ।।**

**कृत्वा वेषं तु सैरन्ध्र्याः कृष्णा सा व्यचरत् तदा ।**
**तां पौराः परिधावन्ति स्त्रियश्च समुपाद्रवन् ।। ३ ।।**

**अमृदून्** दुष्टानुद्दिश्य **जुगूहे** । आच्छादितवती । कृष्णवर्णतः । सुमलिनमधावनात् । एतच्च सैरन्ध्रीलक्षणं[1] ज्ञेयम् ।। २-३ ।।

**अपृच्छंश्चैव तां दृष्ट्वा का त्वं किञ्च चिकीर्षसि ।**
**सा तानुवाच राजेन्द्र सैरन्ध्र्यहमिहागता ।**
**कर्म चेच्छामि वै कर्तुं तस्य यो मां युयुक्षति ।। ४ ।।**

**तस्य** य इति च स्त्रिया अस्वातन्त्र्यात्परम्परया पुरुषस्यैव पोषकत्वोपपादनाय । **युयुक्षति** युयुक्षते । योजयितुमिच्छति **पुपूषतीति पाठे** पोषयितुमिच्छति ।। ४ ।।

**तस्या रूपेण वेषेण श्लक्ष्णया च तया गिरा ।**
**न श्रद्दधत तां दासीमन्नहेतोरुपस्थिताम् ।। ५ ।।**

**नाश्रद्दधत** न श्रद्दधिरे ।। ५ ।।

**विराटस्य तु कैकेयी भार्या परमसम्मता ।**
**आलोकयन्ती ददृशे प्रासादाद् द्रुपदात्मजाम् ।। ६ ।।**

---

१. सैरन्ध्री परवेश्मस्था स्ववशा शिल्पकारिका । - इत्यमरः ।
सैरन्ध्री परवेश्मस्था शिल्पकृत्स्ववशस्त्रियाम् ।
चतुःषष्टिकलाभिज्ञा शीलरूपादिसेविनी ।
प्रसाधनोपचारज्ञा सैरन्ध्री परिकीर्तिता ।। - इति कात्यः ।

कैकेयी केकयराजपुत्री । 'न प्राच्य..'[१] इति तद्राजस्य न लुक् । अणन्तत्वाद् ङीप् । प्रासादात् । ल्यब्लोपनिमित्ता पञ्चमी । प्रासादमारुह्येत्यर्थः ।। ६ ।।

**सा समीक्ष्य तथारूपामनाथामेकवाससम् ।**
**समाहूयाब्रवीद्भद्रे का त्वं किं च चिकीर्षसि ।। ७ ।।**

**अनाथां** तामिव विद्यमानाम् ।। ७ ।।

**सा तामुवाच राजेन्द्र सैरन्ध्र्यहमुपागता ।**
**कर्म चेच्छामि वै कर्तुं तस्य यो मां पुपूषति ।। ८ ।।**

**तस्य यः** गतः ।। ८ ।।

**सुदेष्णोवाच -**

**नैवंरूपा भवन्त्येव यथा वदसि भामिनि ।**
**प्रेषयन्तीव वै दासी दासांश्च विविधान् बहून् ।। ९ ।।**

एवं भवन्ति सैरन्ध्र्यः भवन्ति । **प्रेषयन्तीव** आज्ञापयन्तीव भाससे । विशिष्टा विधा गजान्नं येषां ते **दासान्** । विविधा विधा वेतनं समृद्धिर्येषामिति वा तान् । 'विधा गजान्ने ऋद्धौ च प्रकारे वेतने विधौ' इति विश्वः ।। ९ ।।

**नोच्चगुल्फा संहतोरू त्रिगम्भीरा षडुन्नता ।**
**रक्ता पञ्चसु रक्तेषु हंसगद्गदभाषिणी ।। १० ।।**

लक्षणेनापि लक्षयामि राजपुत्रीं त्वामित्याह– **नोच्चेति** ।। नोच्चौ गुल्फौ पुटिके यस्याः सा । 'चरणोऽस्त्रियाम् । तद्ग्रन्थी घुटिके गुल्फौ' इत्यमरः । संहतौ संलग्नौ ऊरू यस्याः सा । त्रिषु शब्दबुद्धिनाभिषु । गम्भीरा । षडुन्नता षट्सु । नेत्रश्रोत्रनासिका-

---

१. न प्राच्यभर्गादियौधेयादिभ्यः । पा.सू (४/१/१७८)

स्तननखप्रपदेषून्नता । पञ्चसु रक्तेषु । सामुद्रे रक्तत्वेन वर्णनीयेषु नेत्रान्तोष्ठपादहस्ततलनखेषु रक्ता । जिह्वायाः बहुशोऽबहिर्ललनाद्रक्तत्वेनानुक्तिः । हंसवद्गद्गदं भाषत इति तथा । एवं नारद उवाच 'त्रिगम्भीरं त्रिविस्तीर्णं चतुर्ह्रस्वं षडुन्नतम्' इत्यादि । 'पाणिपादतले रक्ते नेत्रान्तानि नखानि च । तालुजिह्वाधरोष्ठे च सप्त रक्तं प्रचक्षते' इत्यन्तेनात्रानुक्तमन्यदपि रक्तादिकं ग्राह्यम् ।। १० ।।

**सुकेशी सुस्तनी श्यामा पीनोन्नतपयोधरा ।**
**तेन तेनैव सम्पन्ना काश्मीरीव वराङ्गना ।। ११ ।।**

श्यामा वर्णतः । शोभनतया कीर्त्यत इति सुस्तनस्तस्येयं सुस्तनी । स्तनते पचाद्यच् । स्तुत्यभार्येत्यर्थः । येन येन यादृशेन वर्तितव्यं तेन तेनैव सम्पन्ना । **काश्मीरी** तद्देशभवा ।। ११ ।।

**अरालपक्ष्मनयना बिम्बोष्ठी तनुमध्यमा ।**
**कम्बुग्रीवा गूढशिरा पूर्णचन्द्रनिभानना ।। १२ ।।**

अराले कुञ्चिते पक्ष्मणी ययोस्ते नयने यस्याः सा । 'तथा बिम्बोष्ठी आत्वोष्ठयोः समासेवा' इति विवृद्धिः । विकल्याद्बिम्बोष्ठी बिम्बोष्ठीत्यपि । 'नासिकोदर...'[१] इति ङीप् । **तनुमध्यमा** । सूक्ष्ममध्या । 'कम्बुग्रीवा त्रिरेखा सा' इत्यमरः । गूढाः शिराः नाड्योः यस्याः सा । 'नाडी तु धमनिः सिरा' इत्यमरः । अयं तालव्यादिरपि । 'शिरो ना पिप्पलीमूले स्याद्धमन्यां च योषिति' इति तालव्यादौ रभसात् ।।१२।।

**शारदोत्पलपत्राक्ष्या शारदोत्पलगन्धया ।**
**शारदोत्पलसेविन्या रूपेण सदृशी श्रिया ।। १३ ।।**

---

१. नासिकोदरौष्ठजङ्घादन्तकरणशृङ्गाच्च । पा.सू. (४/१/५५)

**का त्वं ब्रूहि यथा भद्रे नासि दासी कथञ्चन ।**
**यक्षी वा यदि वा देवी गन्धर्वी यदि वाऽप्सराः ।। १४ ।।**

**शारदोत्पलगन्धया** । 'उपमानाच्च'[1] इति यद्यपीता भाव्यं तथाऽप्येतद्गन्धस्य तत्तुलना नास्तीत्येवंनिर्देशेन द्योत्यते । उत्पलानां गन्धः उत्पलगन्धः । शारदानां उत्पलगन्धो यस्याः सा । शारदपदार्थस्य उत्पलपदार्थे तादात्म्येनान्वयः । सप्तघटिकाभोजनवदि-त्यादिवत् ज्ञेयः । उत्पलानां गन्धो उत्पलगन्धः शारदः उत्पलगन्धो यस्याः सा । तया । गन्धस्य शारदत्वं तु उत्पलस्य विनाऽनुपपन्नं सदर्थाल्लब्धम् । शारदोत्पलानि सेवेत इति तथा तया ।। १३-१४ ।।

**देवकन्या भुजङ्गी वा नगरस्याथदेवता ।**
**विद्याधरी किन्नरी वा यदि वा रोहिणी स्वयम् ।। १५ ।।**

**भुजङ्गी** नागकन्या । **रोहिणी** चन्द्रभार्या । **अथदेवता** इत्येकपदं मङ्गलदेवतेत्यर्थो वा । 'अथ स्नपयाम्बभूव'[2] इत्यत्र पेद्दभट्टेन मङ्गलस्नानं कारितवतीति व्याख्या-तत्वात् ।। १५ ।।

**अलम्बुषा मिश्रकेशी पुण्डरीकाऽथ मालिनी ।**
**इन्द्राणी वारुणी वा त्वं त्वष्टुर्धातुः प्रजापतेः ।**
**देव्य देवेषु विख्यातास्तासां त्वं कतमा शुभे ।। १६ ।।**

अस्य राज्ञ इत्युक्तं किञ्चिद्विशदयति– **अलम्बुषेति** ।। इन्द्राणी 'इन्द्रावरुणा' इत्यानुक् ङीप् च । **वारुणी** शेषभार्या । नतु वरुणपत्नी । त्वष्टुः धातुः प्रजापतेरित्येषां देव्यः पत्न्यः सञ्ज्ञासरस्वतीप्रसूतयः ।। १६ ।।

---

१. उपमानाच्च । पा.सू. (५/४/१३७)

२. ''तथा च श्रीहर्षः - 'यथाकुलाचारमथावनीन्द्रजां पुरन्ध्रिवर्गः स्नपयाम्बभूव ताम्' इति । 'अथ स्नपयाम्बभूव' इत्यस्य मङ्गलस्नानं कारयामासेत्यर्थः । निपातश्चाथशब्दः मृदङ्गादिध्वानवत् मङ्गलम् ।'' - इति बालमनोरमायाम् च (१/३/७७) ।

**द्रौपद्युवाच -**

**नास्मि देवी न गन्धर्वी नासुरी न च राक्षसी ।**
**सैरन्ध्री तु भुजिष्याऽस्मि सत्यमेतद् ब्रवीमि ते ।। १७ ।।**

**नासुरी न च राक्षसी** इत्यनुवादग्राह्ये । अथवा भूपपत्नी । केयमागच्छेत् इति आसुरी **राक्षसी** वेति नाप्राक्षीत् स्वयं तु तदभीत्यै स्वाहान्ताशान्त्यै च तथोत्प्रेक्ष्य अवददिति ज्ञेयम् ।। १७ ।।

**केशान् जानाम्यहं कर्तुं पिष्ये साधु विलेपनम् ।**
**मल्लिकोत्पलपद्मानां चम्पकानां तथा शुभे ।। १८ ।।**
**ग्रथयिष्ये विचित्राश्च स्रजः परमशोभनाः ।। १९ ।।**

**केशान्** कर्तुं शोधयितुं । **विलेपनं** वर्णगन्धमिति यावत् । 'विलेपनं वर्णकं स्यात्' इत्यमरः ।। १८-१९ ।।

**आराधयं सत्यभामां कृष्णस्य महिषीं प्रियाम् ।**
**कृष्णां च भार्यां पाण्डूनां कुरूणामेकसुन्दरीम् ।। २० ।।**

कुरूणां पाण्डवानां चेत्युभयेषामप्येकसुन्दरी ।। २० ।।

**तत्रतत्र चराम्येवं लभमाना सुभोजनम् ।**
**वासांसि यावच्च लभेत् तावत् तावद्रमे तथा ।। २१ ।।**

यावद्भोजनं वासांसि च लभेत् तावत् तावत् कालपर्यन्तं तत्रतत्र रमे । नो चेच्चरामि अन्यत्रेति शेषः ।। २१ ।।

**मालिनीत्येव मे नाम स्वयं देवी चकार सा ।**
**साहमद्यागता देवि सुदेष्णे त्वन्निवेशनम् ।। २२ ।।**

देवी द्रौपदी स्वयं साक्षादेव ।। २२ ।।

**सुदेष्णोवाच -**

**मूर्ध्नि त्वां वासयेयं वै संशयो मे न विद्यते ।**
**न चेदिच्छति राजा त्वां गच्छेत् सर्वेण चेतसा ।। २३ ।।**

राजा त्वां नेच्छति चेत् तर्हि मूर्ध्नि त्वां वासयेयं संशयस्त्वपोषणे । तव सौन्दर्यवशेन राजमनःस्थापनं दुःशकमित्याह– **गच्छेदिति** ।। सर्वेण चेतसा सर्वप्रकारेण मनसा । सर्वेण शर्वेण तदभिमन्यमानेन मनसा । भूता तदवस्था । नारायणीरूप-दर्शनकालेर्यमिदमिति ।। २३ ।।

**स्त्रियो राजकुले याश्च याश्चेमा मम वेश्मनि ।**
**तेऽपि त्वां सन्नमन्तीव पुमांसं कं न मोहयेः ।। २४ ।।**

**राजकुले** अन्यत्र ।। २४ ।।

**राजा विराटः सुश्रोणि दृष्ट्वा वपुरमानुषम् ।**
**विहाय मां वरारोहे गच्छेत् सर्वेण चेतसा ।। २५ ।।**

**वपुः** तवेति शेषः ।। २५ ।।

**वृक्षांश्चावस्थितान् पश्य य इमे मम वेश्मनि ।**
**यं हि त्वमनवद्याङ्गि तरलायतलोचने ।**
**प्रसक्तमभिवीक्षेथाः स कामवशगो भवेत् ।। २६ ।।**

उत्प्रेक्षयति - **वृक्षान् इति । प्रसक्तं** त्वद्दृष्टिपथमायातम् ।। २६ ।।

**यश्च त्वां सततं पश्येत् पुरुषश्चारुहासिनी ।**
**एवं सर्वानवद्याङ्गि स चानङ्गवशो भवेत् ।। २७ ।।**

एवं त्वत्कर्म त्वद्दर्शनमपि मोहकमित्याह– **य इति** ।। **त्वां** पश्येत् यः सकृत् **पुरुषः सततं अनङ्गवशगो भवेत्** । **सततं** दुःखोपवासादिसमयेऽपीति वा ।। २७ ।।

**अध्यारोहेद्यथा वृक्षान् वधायैवात्मनो नरः ।**
**राजवेश्मनि ते सुभ्रू गृहे स्यात् तु तथा मम ।। २८ ।।**

**वृक्षान्** दुरारोहान् **नरः** बिभ्यत् । हे **सुभ्रूः** । ह्रस्वान्तपाठः प्रामादिकः । ते **गृहे** सङ्गृहे ।। २८ ।।

**यथा च कर्कटी गर्भमाधत्ते मृत्युमात्मनः ।**
**तथाविधमहं मन्ये वासं तव शुचिस्मिते ।। २९ ।।**

[१]कर्कटी कुलीरस्त्री । 'कर्कटो विहगान्तरे । राशिभेदे कुलीरे करणेऽस्त्रि' इति मेदिनी । आत्मनो मृत्युं तद्रूपं गर्भमाधत्ते । शरीरविदारणेन प्रसवात् ।। २९ ।।

**द्रौपद्युवाच -**

**नास्मि लभ्या विराटेन न चान्येन कदाचन ।**
**गन्धर्वाः पतयो मह्यं युवानः पञ्च भामिनि ।। ३० ।।**

**मह्यं** मम ।। ३० ।।

**पुत्रा गन्धर्वराजस्य महासत्त्वस्य कस्यचित् ।**
**रक्षन्ति ते च मां नित्यं दुःखाचारा तथा ह्यम् ।। ३१ ।।**

कस्यचिद्गन्धर्वराजस्य । **दुःखाचारा** दुःखसाध्याचारा ।। ३१ ।।

**यो मे न दद्यादुच्छिष्टं नच पादौ प्रधावयेत् ।**
**प्रीणेरंस्तेन वासेन गन्धर्वाः पतयो मम ।। ३२ ।।**

प्रधावयेत् क्षालयेत् । प्रीणेरन् प्रीता भवेयुः ।। ३२ ।।

**यो हि मां पुरुषो गृद्ध्येद्यथाऽन्याः प्राकृताः स्त्रियः ।**
**तामेव निवसेद्रात्रिं प्रविश्य च परां तनुम् ।। ३३ ।।**

---

१. 'कुलीरे करणे स्त्रीणां राशौ खगे' । इति हैमः ।

गृद्ध्येत् आकाङ्क्षेत् । **प्राकृताः** क्तप्रत्ययान्तोऽयं शब्दः । अपरां तनुं प्रविशेत् । उषःकाले मृतो भवेदिति भावः ।। ३३ ।।

**न चाप्यहं चालयितुं शक्या केनचिदङ्गने ।**
**दुःखशीला हि गन्धर्वास्ते च मे बलवत्प्रियाः ।। ३४ ।।**

**केनचित्** पुरुषेण **चालयितुं** अन्यथाकर्तुं **केनचि**न्निमित्तेन **दुःखशीलाः** दुःखसाध्यसद्वृत्तवन्तः । 'शीलं स्वभावे सद्वृत्ते' इति विश्वः । बलवन्तश्च ते प्रियाश्च ।।३४।।

**प्रच्छन्नाश्चापि रक्षन्ति ते मां नित्यं शुचिस्मिते ।**

**सुदेष्णोवाच -**

**एवं त्वां वासयिष्यामि यथा त्वं नन्दिनीच्छसि ।**
**न च पादौ न चोच्छिष्टं स्प्रक्ष्यसि त्वं कथञ्चन ।। ३५ ।।**

**एवम्** एवं चेत् । **नन्दिनि** सुखदे । **स्प्रक्ष्यसि** स्प्रक्ष्यसे ।

**वैशम्पायन उवाच -**

**एवं कृष्णा विराटस्य भार्यया परिसान्त्विता ।**
**उवास नगरे तस्मिन् पतिधर्मवती सती ।**
**न चेमां वेद तत्रान्यस्तत्त्वेन जनमेजय ।। ३६ ।।**

**।। इति श्रीमहाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि नवमोऽध्यायः ।।**

**तत्त्वेन** द्रौपदीत्वेन ।। ३६ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां नवमोऽध्यायः ।।**

*****

# १०. दशमोऽध्यायः

( सहदेवेन गोपालकवेषपरिग्रहेण विराटनगरे निवासः । )

**सहदेवोऽपि गोपानां कृत्वा वेषमनुत्तमम् ।**
**भाषां येषां समास्थाय विराटमुपयादयम् ॥ १ ॥**

उपयात् उपायात् ॥ १ ॥

**गोष्ठमासाद्य तिष्ठन्तं भवनस्य समीपतः ।**
**राजाऽथ दृष्ट्वा पुरुषान् प्राहिणोज्जातविस्मयः ॥ २ ॥**

'गोष्ठं गोस्थानकं तु' इत्यमरः । 'अम्बाम्ब..'[1] इति स्मृतेः षत्वम् ॥ २ ॥

**तमायान्तमभिप्रेक्ष्य भ्राजमानं नरर्षभम् ।**
**समुपास्थाय वै राजा पप्रच्छ कुरुनन्दनम् ॥ ३ ॥**

**तमायान्तं** स्वपुरुषाकरणानन्तरम् । **समुपस्थाय** सम्भ्रमात् सम्मुख उपविश्य ॥ ३ ॥

**कस्य वा त्वं कुतो वा त्वं किं वा तात चिकीर्षसि ।**
**नहि मे दृष्टपूर्वस्त्वं तत्त्वं ब्रूहि नरर्षभ ॥ ४ ॥**

**कस्य वा पुत्रः** । **कुतो** देशात् । **किं** कर्म । **वा** वदतीति वा ततः तस्य सम्बुद्धिरिति वा । पूर्वं दृष्टो **दृष्टपूर्वः** । भूतपूर्व इति निर्देशात् ॥ ४ ॥

**सम्प्राप्य राजानममित्रकर्शनस्तथाऽब्रवीन्मेऽद्य महौघनिस्वनः ।**
**वैश्योऽस्मि नाम्नाऽहमरिष्टनेमिर्गोसङ्ख्य आसं कुरुपुङ्गवानाम् ॥५॥**

---

१. अम्बाम्बगोभूमिसव्यापद्वित्रिकुशेकुशङ्क्वङ्गुञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः ।
- पा.सू.(८/३/९७)

जात्या वैश्यः । **नाम्ना अरिष्टनेमिः** । **गोसङ्ख्यः** गोपः । **कुरुपुङ्गवानां** पाण्डवानाम् ।।५।।

**वस्तुं त्वयीच्छामि विशां वरिष्ठ तान् राजसिंहान् नहि वेद्मि पार्थान् ।**
**न शक्यते जीवितुमप्यकर्मणा न च त्वदन्यो मम रोचते नृपः ॥६॥**

**विशां** प्रजानाम् । **तान् पार्थान्** तदागमनपर्यन्तं मनः स्थिरीकुर्वित्यत आह– **नेति** ।। **अकर्मणा** कर्मरहितेन **त्वदन्यः** पदमेकमनेकं वा । समोऽर्थः । तक्रपूर्त-रामायणनीतिवत् । आत्यन्तिकप्रीणनानभिप्रेणनात् **मम** इति षष्ठी ।। ६ ।।

**विराट उवाच -**

**त्वं ब्राह्मणो यदि वा क्षत्रियोऽसि समुद्रनेमीश्वररूपवानसि ।**
**आचक्ष्व मे तत्त्वममित्रकर्शन न वैश्यकर्म त्वयि विद्यते समम् ॥७॥**

समुद्रनेम्याः **अब्धिकाञ्च्याः** ईश्वरः । तस्य रूपमस्यास्तीति तथा । **सोऽसि** । **समं** योग्यम् ।। ७ ।।

**कस्यासि राज्ञो विषयादिहागतः किञ्चापि शिल्पं तव विद्यते कृतम् ।**
**कथं त्वमस्मासु निवत्स्यते तदा वदस्व किञ्चापि तवेह वेतनम् ॥८॥**

**कस्य राज्ञो विषयादिहागतोऽसि** । अनेन मध्येध्वं किं राजानो न सन्ति चेदपि त्वां न स्थापयाञ्चक्रुरुत त्वन्मनो नायातमिति पुनः प्रश्नाशयो ध्वन्यते । **शिल्पं** कर्म **कृतम्** । पर्याप्तं **कथं** केन प्रकारेण । **वेतनं** मासिमासि देयं द्रव्यम् । 'भृतयो भर्म वेतनम्' । 'भरण्यं भरणं मूल्यं निर्वेशः पण इत्यपि' इत्यमरः ।। ८ ।।

**सहदेव उवाच -**

**पञ्चानां पाण्डुपुत्राणां ज्येष्ठो भ्राता युधिष्ठिरः ।**
**तस्याष्टशतसाहस्रा गवां वर्गाः शतं शतम् ।। ९ ।।**

**पञ्चानां** मध्ये । **अष्टशतसाहस्राः** अष्टलक्षसङ्ख्याकाः ।। ९ ।।

**अपरे शतसाहस्राद्विस्तावन्तस्तथाऽपरे ।**
**तेषां गोसङ्ख्य आसं वै तन्तिपालेति मां विदुः ।। १० ।।**

द्विस्तावन्तः द्विलक्षसङ्ख्याकाः । आहत्य दशसहस्रोत्तरैकादशलक्षसङ्ख्याकाः । **तन्तिपालेति** पूर्वं सङ्केतितं नाम ।। १० ।।

**भूतं भव्यं भविष्यं च यच्च सङ्ख्यागतं गवाम् ।**
**न मेऽस्त्यविदितं किञ्चित्समन्ताद्दशयोजनम् ।। ११ ।।**

गवां यच्च सङ्ख्यागतं सङ्ख्यायां प्राप्तम् अस्याः गोः इयन्तो वत्सा जाताः इयन्तो भविष्यन्तीयन्तोवर्तन्तइति**भूतंभव्यम्**।'भवद्योगेयत्' इतियत्।**भविष्यंच**यत्किञ्चिद्देशयोजनपर्यन्तमविदितं मे नास्तीति योजना । **भविष्यच्चेत्यक्लिष्टार्थपाठः** । **भविष्यं चेति पाठे** 'लृटः सद्वा'[१] इत्यत्र 'लृटो वा' इति योगविभागेनाकारोऽपि लृटादेशत्वेन व्याख्यायते । ये भूता ये भविष्याश्चेत्यादिप्रयोगात् । विस्तरस्तु 'नूतनैरेष्यैः'[२] इति ऋग्भाष्यटीकादितोऽवसेयः ।। ११ ।।

**गुणाः सुविदिता आसन् मम तस्य महात्मनः ।**
**आसीच्च स मया तुष्टः कुरुराजो युधिष्ठिरः ।। १२ ।।**

**मम तस्य** चेति **गुणाः** परस्परं **सुविदिता आसन्** ।। १२ ।।

**क्षिप्रं च गावो बहुला भवन्ति न तासु रोगो भवतीह कश्चन ।**
**तैस्तैरुपायैर्विदितं ममैतदेतानि शिल्पानि मयि स्थितानि ।।१३।।**

**बहुला** बहुसङ्ख्याः विपुलाश्च । **उपायैः** तत्साधकशास्त्रादिभिः ।। १३ ।।

---

१. लृटः सद्वा । पा.सू. (३/३/१४)
२. '...नूतनैरुत' इति ऋग्वेदे (१/१/२) ; ऋग्भाष्ये (१/१३) ; नूतनैः नूशब्दोऽद्यपर्यायः। ततः सायं चिरमिति तनः - इति ऋग्भाष्य टीकायाम् ।

**ऋषभांश्चापि जानामि राजन् पूजितलक्षणान् ।**
**येषां मूत्रमुपाघ्राय अपि वन्ध्या प्रसूयते ।। १४ ।।**

**ऋषभांश्चेति** श्लोकोऽपि व्याख्यातः[१] ।। १४ ।।

**विराट उवाच -**

**शतं सहस्राणि समाहितानि सवर्णवर्णस्य विमिश्रिता गुणैः ।**
**पशून् सपालान् भवते ददाम्यहं त्वदाश्रया मे पशवो भवन्त्विह ।।**

**शतं सहस्राणि** बहुलक्षाणि **समाहितानि** सङ्गृहीतानि । समानो वर्णः शुक्लादिर्येषां ते तथा ते च वर्णस्य वर्णो **विमिश्रिताः** च तान् । विभक्त्यलोप आर्षः । **गुणैः** उपलक्षितान् ।। १५ ।।

**वैशम्पायन उवाच**

**तदा स राज्ञोऽविदितो विशाम्पते उवास तत्रैव सुखं नरोत्तमः ।**
**न चैनमन्येऽपि विदुः कथञ्चन प्रादाच्च तस्मै भरणं यथेप्सितम् ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि दशमोऽध्यायः ।।**

**यथेप्सितं** स्ववाञ्छितं तद्वाञ्छितं वा ।। १६ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां दशमोऽध्यायः ।।**

*****

१. (३/१३) इत्यत्र ।

# ११. एकादशोऽध्यायः

( अर्जुनेन बृहन्नळारूपेण विराटसभाप्रवेशः । विराटनगरे निवासश्च )

**वैशम्पायन उवाच -**

**अथापरोऽदृश्यत रूपसम्पदा स्त्रीणामलङ्कारधरो बृहत्पुमान् ।**
**प्राकारवप्रे प्रतिमुच्य कुण्डले दीर्घे च कम्बूपरि हाटके शुभे ॥१॥**

**रूपसम्पदा बृहत्पुमान्** महापुरुषः । **स्त्रीणामलङ्कारधरः** । धरतीति धरः अलङ्काराणां धरः । प्राकारस्य वरणस्य **वप्रे** तदाधारमृण्मयवेदिकाकारे कुण्डले कर्णवेष्टने **प्रतिमुच्य** आबद्ध्य । **कम्बूपरि** हस्तगतशङ्खोपरि **हाटके** सुवर्णमये **कुण्डले** वलये च **प्रतिमुच्य** । 'प्राकारो वरणः शालः' । 'स्याच्च यो वप्रमस्त्रियाम्' । 'कुण्डले वलये पाशे कुण्डलं कर्णवेष्टने' इति विश्वः ॥ १ ॥

**बाहू च दीर्घान् प्रविकीर्य मूर्धजान् महाभुजो [१]वारणमत्तविक्रमः ।**
**गतेन भूमिं प्रतिकम्पयंस्तदा विराटमासाद्य सभासमीपतः ॥२॥**

**वारणमत्तविक्रमः** मत्तवारणविक्रमः । **गतेन** गमनेन **विराटमासाद्य सभासमीपतः** समीपेऽदृश्यतेत्यन्वयः ॥ २ ॥

**तं प्रेक्ष्य राजोपगतं सभातले [२]वस्तुं प्रतिच्छन्नमरिप्रमाथिनम् ।**
**विराजमानं परमेण वर्चसा सुतं महेन्द्रस्य गजेन्द्रविक्रमम् ॥३॥**

**वस्तुं** वासार्थम् । **प्रतिच्छन्नं** गूढम् ॥ ३ ॥

**सर्वानपृच्छच्च समीपचारिणः कुतोऽयमायाति पुरा न मे श्रुतः ।**
**न चैनमूचुर्विदितं तदा नराः सविस्मयं वाक्यमिदं नृपोऽब्रवीत् ॥ ४ ॥**

---

१. वारणतुल्यविक्रमः (इति गी. पाठः)

२. व्याजात् (इति गी. पाठः)

**न श्रुतः** न दृष्ट इति किमु वक्तव्यमिति भावः । **नराः** पृष्टाः **एनम्** अर्जुनं **विदितं** स्वैर्ज्ञातं **न चोचुः** । अथ राजाऽयं राज्यार्ह इति मत्वा **सविस्मयम् इदं वाक्यम्** अर्जुनं प्रत्येव **अब्रवीत्** ।। ४ ।।

**सत्त्वोपपन्नः पुरुषोऽमरोपमः श्यामो युवा वारणयूथपोपमः ।**
**आमुच्य कम्बूपरि हाटके शुभे विमुच्य वेणीमपिनह्य कुण्डले ॥५॥**

**सत्त्वोपपन्नः** बली । **श्यामो** वर्णतः । अवारणः वारयितुमशक्यो यो यूथपो गजश्रेष्ठस्तेनोपमा यस्य स तथा **अपिनह्य** आबद्ध्य ।। ५ ।।

**स्रग्वी सुकेशः परिधाय चान्यथा शुशोभ धन्वी कवची शरी यथा ।**
**आरुह्य यानं परिधावतां भवान् सुतैः समो मे भव वा मया समः ॥६॥**

**स्रग्वी** । 'अस्माय....'[1] इति विनिप्रत्ययान्तोऽयम् । अन्यथा **परिधाय** स्त्रीणामिव परिधानं कृत्वाऽपि **धन्वी कवची शरी** पुमान् **यथा** तथा यो **भवान्** **शुशुभे**, स भवान् यानम् **आरुह्य परिधावताम्** यथेष्टं विहरतु । **सुतैः समः** युवराजो **वा** । **मया समः** महाराजो वा । भविता तृन्वा तृज्वा लुङ् वा ।। ६ ।।

**वृद्धो ह्यहं वै परिहारकामः सर्वान् मत्स्यांस्तरसा पालयस्व ।**
**नैवंविधा क्लीबरूपा भवन्ति कथञ्चनेति प्रतिभाति मे मनः ।।७।।**

यतो नैवेश्वरद्वयं युक्तमतो मह्यं महीं दत्वा । किं कुरुष इत्यत आह– **वृद्ध इति** ।। परिहारं कामयत इति तथा । क्लीबोऽहं किं कुर्यामिति तत्राह– **नेति** ।। **एवंविधाः** क्लीबरूपा **न भवन्ति** । **मे मनः प्रतिभाति** । मनः मनस इति वा । तदाप्रभृति भातीत्यखण्डम् ।। ७ ।।

---

१. अस्मायामेधास्रजो विनिः । पा. सू. (५/२/१२१)

अर्जुन उवाच -

**गायामि नृत्याम्यथ वादयामि भद्रोऽस्मि नृत्ये कुशलोऽस्मि गीते ।**
**त्वमुत्तरायै [१]परिदत्स्व मां स्वयं भवामि देव्या नरदेव नर्तकः ॥८॥**

**भद्रः** श्रेष्ठः । 'भद्रः त्रिषु श्रेष्ठः' इति त्रिकाण्डशेषः । **परिदत्स्व** देहि ॥ ८ ॥

**इदं तु रूपं मम येन किं तव प्रकीर्तयित्वा भृशशोकवर्धनम् ।**
**बृहन्नलां मां नरदेव विद्धि सुतं सुतां वा पितुमातृवर्जिताम् ॥९॥**

**इदं रूपं** क्लीबात्मकं **येन** निमित्तेन **कृतं** तत्कीर्तयित्वा स्थितस्य भृशं शोकवर्धनं **बृहन्नलां** नाम्ना । **सुतं सुतां वा** आकारद्वयसमावेशात् । एकस्याः कुन्त्याः शेषः । एकशेषं बबाध इति । एकसत्त्वे द्वयं नास्तीति नित्या । **पितृमातृवर्जिताम्** इत्युक्तिः । पिता ममापि नास्तीति विधानार्थं च । पुंस्त्वचिह्नबाहुल्याद्वर्जिता-मित्युक्तिः सम्भवति ॥ ९ ॥

विराट उवाच -

**ददामि ते हन्त वरं बृहन्नले सुतां च मे नर्तय याश्च तादृशीः ।**
**इदं च ते कर्म समं च मे मतं समुद्रनेमिं पृथिवीं त्वमर्हसि ॥१०॥**

**तादृशीः** तत्सखीः **समं** योग्यम् ॥ १० ॥

वैशम्पायन उवाच -

**बृहन्नलां तामभिवीक्ष्य मत्स्यराट् कलासु नृत्येषु तथैव वादिते ।**
**सम्मन्त्र्य राजा विविधैः स्वमन्त्रिभिः परीक्ष्य चैनं प्रमदाभिराशु वै॥११॥**

**अभिवीक्ष्य** परीक्ष्य । स्वमन्त्रिभिः **विविधैः** प्रकारैः **सम्मन्त्र्य** आलोच्य तत्राप्यनिर्णीतप्रमेयः । **प्रमदाभिरेनं** परीक्ष्य ॥ ११ ॥

---

१. प्रदिशस्व (इति गी. पाठः)

**अपुंस्त्वमप्यस्य निशम्य च स्थिरं ततः कुमारीपुरमुत्ससर्ज तम् ।**
**स शिक्षयामास च गीतवादितं सुतां विराटस्य धनञ्जयः प्रभुः ॥१२॥**

**निशम्य** ताभ्यः । **स्थिरं** दृढं अपुंस्त्वम् ।। १२ ।।

**सखीश्च तस्याः परिचारिकास्तथा प्रियश्च तासां स बभूव पाण्डवः ।**
**तथा स सत्रेण धनञ्जयो वसन् प्रियाणि कुर्वन् सह ताभिरात्मवान् ।**
**तथा च तं तत्र न जज्ञिरे जना बहिश्चरा वाऽप्यथ चान्तरेचराः ॥१३॥**

।। इति श्रीमन्महाभारते विराटपर्वणि पाण्डवप्रवेशपर्वणि एकादशोऽध्यायः ।।

**तासां** सा च ताश्चेति ताः । **सत्रेण** वेषेण । 'सत्रमाच्छादने यज्ञे सदा दाने च कैतवे' इति विश्वः । **न जज्ञिरे** न व्यजानात् ।।१३।।

।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां एकादशोऽध्यायः ।।

*****

# १२. द्वादशोऽध्यायः

( विराटनगरे अश्वपालनरूपेण नकुलस्य निवासः )

**वैशम्पायन उवाच -**

**अथापरोऽदृश्यत पाण्डवः प्रभुः विराटराजं तरसा समेयिवान् ।**
**तमापतन्तं ददृशे पृथक् जनो विमुक्तमभ्रादिव सूर्यमण्डलम् ॥१॥**

**अथ** अर्जुनप्रवेशानन्तरं । पूर्वम**दृश्यत** नन्तरं च विराटं **समेयिवान्** । **आपतन्तं** च जनः सर्वोऽपि **पृथक्** पृथक् **अभ्राद्विमुक्तं सूर्यमण्डलमिव ददृशे** । **पृथक् जनः** मूर्खोऽप्येवं **ददृशे** । किमु पुरुषलक्षणज्ञ इति वा । १ ।।

**स वै हयानैक्षत तांस्ततस्ततः समीक्षमाणं स ददर्श मत्स्यराट् ।**
**[१]ततोऽब्रवीत्ताननुगानमित्रहा कुतोऽयमायाति [२]नरोऽमरप्रभः ॥२॥**

**तान् हयान्** ततस्ततः **समीक्षमाणं** तत्र तत्र निरीक्षमाणम् । **अमित्रहा** 'वीरहा शत्रुहा'[३] इत्यादिप्रयोगादन्योपपादकादपि नृपसम्मतः । येषु येषु वा समं कार्षं ते ते नृपसम्मतः ॥ २ ॥

**अयं हयानीक्षति मामकान् दृढं ध्रुवं हयज्ञो भविता विचक्षणः ।**
**प्रवेश्यतामेष समीपमाशु मे विभाति वीरो हि यथाऽमरस्तथा ॥३॥**

**अभ्येत्य राजानममित्रहाऽब्रवीज्जयोऽस्तु ते पार्थिव भद्रमस्तु च ।**
**हयेषु युक्तो नृपसम्मतः सदा तवाश्वसूतो निपुणो भवाम्यहम् ॥४॥**

**विराट उवाच -**

**ददामि यानानि धनं निवेशनं ममाश्वसूतो भवितुं त्वमर्हसि ।**
**कुतोऽसि कस्यासि कथं त्वमागतः प्रब्रूहि शिल्पं तव विद्यते च यत् ॥५॥**

**निवेशनं** गृहम् । **अन्यत् शिल्पम्** । इतोऽतिरिक्तं कर्म ॥ ५ ॥

**नकुल उवाच -**

**पञ्चानां पाण्डुपुत्राणां ज्येष्ठो भ्राता युधिष्ठिरः ।**
**तेनाहमश्वेषु पुरा नियुक्तः [४]शत्रुकर्षणः ॥ ६ ॥**

---

१. ततोऽब्रवीत्ताननुगान् नरेश्वरः । (इति गी. पाठः)

२. नरोऽमरोपमः । (इति गी. पाठः)

३. मन्युसूक्ते । (ऋग्वेद १०/८३/३)

४. शत्रुकर्शन (इति गी.पाठः)

**अश्वानां प्रकृतिं वेद्मि विनयं चापि सर्वशः ।**
**दुष्टानां प्रतिपत्तिं च कृत्स्नं चैव चिकित्सितम् ॥ ७ ॥**

**प्रवृत्तिं** स्वभावम् । **विनयं** विनयसाधनम् । **प्रतिपत्तिं** विश्वासीभावनप्रकारम् । **चिकित्सितं** चिकित्साम् ॥ ७ ॥

**न कातरं स्यान्मम जातु वाहनं न मेऽस्ति दुष्टा वडवा कुतो हयाः ।**
**जनस्तु मामाह स चापि पाण्डवो युधिष्ठिरो ग्रन्थिकमेव नामतः ॥८॥**

**कातरं** भयविह्वलम् । 'अधीरे कातरत्रस्तौ' इत्यमरः । **वडवा** अश्वाऽपि ॥ ८ ॥

**विराट उवाच -**

**यदस्ति किञ्चिन्मम वाजिवाहनं तदस्तु सर्वं त्वदधीनमद्य वै ।**
**ये चापि केचिन्मम वाजियोजकास्त्वदाश्रयाः सारथयश्च सन्तु मे ॥९॥**

**मम** वाजिवाहनम् । सेनाङ्गत्वादेकवद्भावः ॥ ९ ॥

**इदं तवेष्टं यदि वै सुरोपम ब्रवीहि यत् ते प्रसमीक्षितं वसु ।**
**न तेऽनुरूपं हयकर्म विद्यते प्रशाधि राजेव हि सम्मतो मम ॥१०॥**

इदं हयकर्म । **तव** कर्म **यदि इष्टम्,** तर्हि ते यद्वसु **प्रसमीक्षितम्** प्रसमीक्षितं मनस्यालोचितं वेतनरूपं तद् **ब्रवीहि** । यदि तवेष्टमित्यनेन सूचितमाह– **नेति** ॥ १० ॥

**युधिष्ठिरस्यैव हि दर्शनेन समं तवेदं प्रियदर्श दर्शनम् ।**
**कथं तु भृत्यैः स विनाकृतो वने वसत्यनिन्द्यो रमते च पाण्डवः ॥११॥**

हे **प्रियदर्श** प्रियं दर्शयते अत्रेति प्रियदर्शः । तस्य सम्बुद्धिः । घञन्तः । **विनाकृतः** वियुक्तः ॥ ११ ॥

**वैशम्पायन उवाच -**

**तथा स गन्धर्ववरोपमो युवा विराटराज्ञा मुदितेन पूजितः ।**
**न चैनमन्येऽपि विदुः कथञ्चन प्रियाभिरामं विचरन्तमन्तरा ॥१२॥**

विराटराज्ञा गतम् । द्रष्टॄणां प्रियेभ्योऽप्यभिरामः मनोहरस्तम् । अन्तरा पुरमध्ये ॥ १२ ॥

**एवं हि मत्स्ये निवसन्ति पाण्डवा यथाप्रतिज्ञाभिरमोघदर्शनाः ।**
**अज्ञातचर्यां व्यचरन् समाहिताः समुद्रनेमीपतयोऽतिदुःखिताः ॥१३॥**

॥ इति विराटपर्वणि नकुलप्रवेशो नाम द्वादशोऽध्यायः ॥

यथाप्रतिज्ञाभिः गतम् । व्यचरन् अकुर्वन् ॥ १३ ॥

॥ इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां द्वादशोऽध्यायः ॥

॥ इति पाण्डवप्रवेशपर्व ॥

*****

# २. समयपालनपर्व

## १३. त्रयोदशोऽध्यायः

( भीमसेनकर्तृकजीमूतवधः । )

जनमेजय उवाच -

एवं ते मत्स्यनगरे वसन्तस्तत्र पाण्डवाः ।
अत ऊर्ध्वं महावीर्याः किमकुर्वत वै द्विज ।। १ ।।

**अतः** प्रवेशात् ।। १ ।।

वैशम्पायन उवाच -

एवं ते न्यवसंस्तत्र प्रच्छन्नाः कुरुनन्दनाः ।
आराधयन्तो राजानं यदकुर्वत तच्छृणु ।। २ ।।

तृणबिन्दुप्रसादाच्च धर्मस्य च महात्मनः ।
अज्ञातवासमेवं तु विराटनगरे वसन् ।। ३ ।।

**तृणबिन्दुप्रसादात्** । स्वस्वरूपावरणे तेनापि वरदानात् । चात्प्रसादाकर्षः ।। ३ ।।

युधिष्ठिरः सभास्तारो मत्स्यानामभवत् प्रियः ।
तथैव च विराटस्य सपुत्रस्य विशाम्पते ।। ४ ।।

**मत्स्यानां** मत्स्यदेशस्थानाम् ।। ४ ।।

स ह्यक्षकुशलस्तान् वै क्रीडयामास पाण्डवः ।
अक्षवत्यां यथाकामं सूत्रबद्धानिव द्विजान् ।। ५ ।।

**अक्षकुशलः** बृहदश्वोपदेशात् **अक्षवत्यां** द्यूते तद्वत्सभायां वा । 'द्यूतो स्त्रियामक्षवती कैतवं पण इत्यपि' इत्यमरः । **द्विजान्** पक्षिणः ।। ५ ।।

अज्ञातं च विराटस्य विजित्य वसु धर्मराट् ।
भ्रातृभ्यः पुरुषव्याघ्रो यथार्हं सम्प्रयच्छति ॥ ६ ॥

**विराटस्य अज्ञातं** यथा भवति तथा **वसु** धनं **विजित्य** ॥ ६ ॥

भीमसेनोऽपि मांसानि भक्ष्याणि विविधानि च ।
अतिसृष्टानि मत्स्येन पाण्डवेभ्यः प्रयच्छति ॥ ७ ॥

**अतिसृष्टानि** दत्तानि ॥ ७ ॥

वासांसि परिजीर्णानि लब्धान्यन्तःपुरेऽर्जुनः ।
विक्रीणाति च सर्वेभ्यः पाण्डवेभ्यः प्रयच्छति ॥ ८ ॥

सहदेवोऽपि गोपानां वेषमास्थाय पाण्डवः ।
दधि क्षीरं घृतं चैव पाण्डवेभ्यः प्रयच्छति ॥ ९ ॥

**विक्रीणाति** विक्रीणातीत्यपदेशं कृत्वा **सर्वेभ्यः पाण्डवेभ्यः प्रयच्छति** ॥८, ९॥

नकुलोऽपि धनं लब्ध्वा कृते कर्मणि वाजिनाम् ।
तुष्टे तस्मिन् नरपतौ पाण्डवेभ्यः प्रयच्छति ॥ १० ॥

कृष्णापि सर्वभर्तॄंस्तान् निरीक्षन्ती तपस्विनी ।
यथा पुनरविज्ञाता तथा चरति भामिनी ॥ ११ ॥

**निरीक्षन्ती** निरीक्षमाणा ॥ ११ ॥

एवं सम्पादयन्तस्ते तथाऽन्योन्यं महारथाः ।
विराटनगरे चेरुः पुनर्गर्भधृता इव ॥ १२ ॥

**सम्पादयन्तः** जीवनोपायम् । **गर्भधृताः** गर्भवासिनः ॥ १२ ॥

**साशङ्का धार्तराष्ट्रस्य भयात् पाण्डुसुतास्तदा ।**
**प्रेक्षमाणास्तदा कृष्णामूषुश्छन्ना नराधिप ॥ १३ ॥**

**छन्नाः** प्रेक्षमाणाः ॥ १३ ॥

**अथ मासे चतुर्थे तु ब्रह्मणः सुमहोत्सवः ।**
**आसीत् समृद्धो मत्स्येषु पुरुषाणां सुसम्मतः ॥ १४ ॥**

**समृद्धः** उत्कृष्टः । **सुसम्मतः** इष्टः ॥ १४ ॥

**तत्र मल्लाः समापेतुः दिग्भ्यो राजन् सहस्रशः ।**
**समाजे ब्रह्मणो राजन् यथा पशुपतेरिव ॥ १५ ॥**

यथा **ब्रह्मणः** समाजे सभायां सत्यलोके । पशुपतेः समाजे कैलासे इव च सुमहोत्सवः । आग्रायणेष्टिकाले देशविशेषे क्रियमाणो उत्सवविशेषः । **तत्र** मत्स्यनगरे **मल्लाः समापेतुः** ॥ १५ ॥

**महाकाया महावीर्याः कालखञ्जा इवासुराः ।**
**वीर्योद्धूता बलोदग्रा राज्ञा समभिपूजिताः ॥ १६ ॥**

**कालखञ्जाः** तन्नामका असुरा इति वा । बलेन शारीरेण उदग्रा उत्कृष्टाः ॥ १६ ॥

**सिंहस्कन्धकटिग्रीवाः स्ववदाता मनस्विनः ।**
**असकृल्लब्धलक्ष्यास्ते रङ्गे पार्थिवसन्निधौ ॥ १७ ॥**

सिंहस्येव स्कन्धे कटिग्रीवं येषां ते तथा । सर्वदा मल्लानां परिकरबन्धात् कटेः । सिंहवत् सौक्ष्म्यम् । **स्ववदाताः** अत्यन्तस्वच्छाः । **असकृत्** बहुवारं लब्धं लक्ष्यं वेध्यं यैस्ते । प्राप्तविजया इति यावत् । **पार्थिवसन्निधौ** तत्तद्राजसन्निधौ ॥१७॥

**तेषामेको महानासीत् सर्वमल्लानथाह्वयत् ।**
**आहूयमानं तं रङ्गे नोपतिष्ठति कश्चन ॥ १८ ॥**

**आह्वयत्** युद्धार्थम् । **नोपतिष्ठति** मन्त्रकरणाद्यन्यतमत्वाभावादुपपूर्वकत्वे परस्मैपदता ।। १८ ।।

**यदा सर्वे विमनसस्ते मल्ला हतचेतसः ।**
**अथ कङ्को विराटं तं उवाच प्रहसन्निव ।**
**सूदेन योधयस्वैनमित्युक्तस्तं समाह्वयत् ।। १९ ।।**

**ते** विराटसमीपस्थाः । **अथ** राजपालितमल्लपलायनानन्तरम् । को वा युद्ध्यति कं वाऽऽकारयामीति विचारं मनसि कुर्वन्तं विराटं प्रत्यप्याह– **कङ्क इति** । **एनं** जीमूतम् । **इत्युक्तः** कङ्केन । **तं** भीमम् ।। १९ ।।

**भीमसेनो विराटेन आहूतश्चोदितस्तथा ।**
**योद्धुं ततोऽब्रवीद्वाक्यं योद्धुं शक्तोऽस्मि भूपते ।। २० ।।**

**आहूतः** आकारितः । **तथा योद्धुं चोदितः** प्रेरितः । **ततः** राजाज्ञानन्तरम् हे **भूपते** अहं **योद्धुं शक्तोऽस्मि** इत्य**ब्रवीत्** ।। २० ।।

**नरेन्द्र ते प्रभावेन श्रिया शक्त्या च शासनात् ।**
**अनेन सह मल्लेन योद्धुं राजन् हि शक्नुयाम् ।। २१ ।।**

स्वाहन्तां शमयन्निवाह– **नरेन्द्रेति** ।। **नरेन्द्र ते** इत्यत्र त इत्यव्ययम् । प्रभावः सामर्थ्यम् । **श्रिया** कान्त्या । **शक्त्या** शारीरबलेन । **शासनात्** त्वदाज्ञया । मदीयमल्लशिक्षात इति वा ।। २१ ।।

**महादेवस्य भक्त्या च तं मल्लं पातयाम्यहम् ।**

**वैशम्पायन उवाच -**

**अथ सूदेन तं मल्लं योधयामास मत्स्यराट् ।। २२ ।।**

**महादेवस्य** श्रीनारायणस्य । यथोक्तम्-

समस्तदेववृन्दतो महान् य एव केशवः ।
समस्तदेवनामवांस्तदीयभक्तितो बलम् ।।
य एव देवनामधा इति श्रुतिर्जगाद ह ।
महांश्च देव एष तत् स मे जयं विधास्यति'[१] इति ।। २२ ।।

**नोद्यमानस्तदा भीमो दुःखेनैवाकरोन्मतिम् ।**
**नहि शक्नोति विवृते प्रथ्याख्यातुं नराधिपम् ।। २३ ।।**

**नोद्यमानः** प्रेर्यमाणः । **विवृते** प्रकाशे सभायामिति यावत् । **नराधिपं प्रत्याख्यातुं** नेति वक्तुं **नहि** शक्नोतीति **दुःखेन** हा पारतन्त्र्यमिति प्राकट्यं भवेदिति भयेन । नतु शरीरभङ्गभिया ।। २३ ।।

**ततः स पुरुषव्याघ्रः शार्दूलशिथिलश्चरन् ।**
**प्रविवेश महारङ्गं विराटमभिपूजयन् ।। २४ ।।**

**शार्दूलशिथिलः** शिथिलशार्दूलो यथा चरति तथा चरन् । मुक्तव्याघ्र इव [२]अजिरेत्यादिसूत्रे निपातितशिथिलशब्दस्य मोचनार्थतया व्याख्यानात् । रङ्गप्रवेशनसमये मल्लैः क्रियमाणगतिविशेषस्येयं सञ्ज्ञेति सम्प्रदायविदः । **अभिपूजयन्** जयशब्देन मानयन् ।। २४ ।।

**बबन्ध कक्षां कौन्तेयस्ततः संहर्षयन् जनम् ।**
**ततस्तु वृत्रसङ्काशं भीमो(ऽ)मल्लं समाह्वयत् ।। २५ ।।**

---

१. इति महाभारततात्पर्यनिर्णये (२३- १५,१६)

२. अजिरशिशिरशिथिलशिबिरस्थिरस्फिरस्थविरखदिराः (उणादिसूत्रम् १/५३) - इति किरच् ।

**कक्षां** कार्श्वीं परिकरबन्धनमिति यावत् । 'कक्षोद्रहणिका काश्वी' इति विश्वः । अमल्लमिति च्छेदः । इतरैरधार्यमित्यर्थः । मल मल्लधारण इति धातुः ।। २५ ।।

**जीमूतं नाम तं तत्र मल्लं प्रस्थितविक्रमम् ।**
**तावुभौ सुमहोत्साहौ उभौ भीमपराक्रमौ ।। २६ ।।**

**मत्ताविव महाकायौ वारणौ षष्टिहायनौ ।**
**ततस्तौ नरशार्दूलौ बाहुयुद्धं समीयतुः ।। २७ ।।**

**षष्टिहायनौ** षष्टिसंवत्सरौ । 'संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः' इत्यमरः ।। २७ ।।

**वीरौ परमसंहृष्टावन्योन्यजयकाङ्क्षिणौ ।**
**आसीत् सुभीमः सम्पातो वज्रपर्वतयोरिव ।। २८ ।।**

**सुभीमः** भयङ्करः । **सम्पातः** सङ्घर्षः ।। २८ ।।

**उभौ परमसंहृष्टौ बलेनातिबलावुभौ ।**
**अन्योन्यस्यान्तरं प्रेप्सू मत्ताविव महागजौ ।।२९ ।।**

**बलेन** परिवर्तनेन 'बल परिवर्तने' इति धातोः । **अन्तरं** च्छिद्रं ।।२९।।

**कृतप्रतिकृतैश्चित्रैर्बाहुभिश्च [१]सुसङ्कटैः ।**
**सन्निपातावधूतैश्च प्रमाथोन्मथनैस्तथा ।। ३० ।।**

**कृतप्रतिकृतैः** परस्परहस्तधारणमोचनादिभिः **सुसङ्कटैः** परस्परचारणेन सम्पीडितैः । सकण्टकैरिति **पाठे** वज्रमुष्टिरूपमुष्टिकवचसहितैः । सरोमाश्चैर्वा । सकिङ्कणैर्वा । 'कण्टको बाहुचरणकवचे कठिने किणे' इति [२]चतुर्धरधृतो

१. ससङ्कटैः (इति क्वचित्)

२. अस्पष्टमिदम् ।

(चतुर्धरर्धतो?) विश्वः[१]। 'कण्टकः स्याद्रोमाञ्चद्रुमाङ्गयोः' इति मेदिनी। 'सन्निपात' इत्यारभ्य 'वराहो धूतनिस्वनैः' इत्यन्तस्य मल्लशास्त्ररीत्याऽर्थो ज्ञेयः। तथाहि तत्।

एकस्योपरि पातस्तु सन्निपातः प्रकीर्तितः।
तस्यैव चाधःपातश्चेदवधूतः स उच्यते।
निपात्य पेषणं भूमौ प्रमाथ इति कथ्यते।
अभ्युत्थायाङ्गमथनं तदुन्मथनमुच्यते।
क्षेपणं कथ्यते यत्तत् स्थानात् प्रच्यावनं हठात्।
उभयोर्भुजयोर्मुष्टिरूर्वोर्मध्ये निपात्यते।
मुष्टिरित्युच्यते तज्ज्ञैर्मल्लविद्याविशारदैः।
अवाङ्मुखं स्कन्धगतं भ्रामयित्वा तथैव यः।
क्षिप्तस्य शब्दः सभवेद्वराहोद्धूतनिस्वनः' इति ॥ ३० ॥

**क्षेपणैर्मुष्टिभिश्चैव वराहोद्धूतनिस्वनैः।**
**तलैर्वज्रनिपातैश्च प्रसृष्टाभिस्तथैव च ॥ ३१ ॥**

**वज्रनिपातैः** तत्सदृशैः **तलैश्च** पेटिकाभिः **प्रसृष्टाभिः** शलाकाः नखपातैश्च।

अङ्गुल्यः प्रसृतायास्तु प्रसृष्टाः प्रकीर्तिताः।
ऋज्वी दृढा रुषा क्षिप्ता शलाका साङ्गुलिः स्मृता ॥

इति तत्रैव ॥ ३१ ॥

---

१. कण्टकः क्षुद्रशत्रौ च कर्मस्थानकदोषयोः।
रोमाञ्चे च द्रुमाङ्गे च कण्टको मस्करेऽपि च ॥ - इति विश्वः।
कण्टको न स्त्रियां क्षुद्रशत्रौ मत्स्यादिकीकसे।
नैयोगिकादिदोषोक्तौ स्याद्रोमाञ्चद्रुमाङ्गयोः ॥ - इति मेदिनी।

**शलाकानखपातैश्च पादोद्धूतैश्च दारुणैः ।**

**जानुभिश्चाश्मनिर्घोषैः शिरोभिश्चावघट्टनैः ॥ ३२ ॥**

तादृशाङ्गुलिनखपातैः । **पादोद्धूतैः** पादतस्ताडनैः । **अश्मनिर्घोषैः** पाषाणसङ्घट्टन-ध्वनिसदृशध्वनिमद्भिः । **जानुभिः शिरोभिः** परस्परं **अवघट्टनैः** सन्ताडनैः ॥ ३२ ॥

**तद्युद्धमभवद्धोरमशस्त्रं बाहुतेजसा ।**

**बलप्राणेन शूराणां समाजोत्सवसन्निधौ ॥ ३३ ॥**

**अशस्त्रं** शस्त्ररहितम् । तदुक्तं तत्रैव-

बाहुयुद्धं तु मल्लानामशस्त्रमृषिभिः स्मृतम् ।

मृतस्य तस्य न स्वर्गो यशो नेहापि विद्यते ॥ इति ।

तद्युद्धप्रभेदस्तु-

मल्लयुद्धं नियुद्धज्ञाः विंशद्भेदं प्रचक्षते ।

द्वात्रिंशद्भेदमपरे चत्वारिंशद्विधं तथा ॥

इतिसङ्ग्रामविजयवचनात्ज्ञेयः।**बलप्राणेन**प्राणबलेन।शरीरबलात्मकसैन्येनेत्यर्थः। 'बलं निःस्थौल्यसैन्ययोः' 'प्राणेऽनिले बलः' इति च विश्वः ॥ ३३ ॥

**अरज्यत जनः सर्वः सोत्कृष्टनिनदोत्थितः ।**

**बलिनोः संयुगे राजन् वृत्रवासवयोरिव ॥ ३४ ॥**

**अरज्यत** रक्तोऽभूत् । तद्दर्शनार्थं परस्पराह्वानजनिततुमुलध्वनिः ॥ ३४ ॥

**प्रकर्षणाकर्षणयोरभ्याकर्षविकर्षणैः ।**

**आकर्षतुरथान्योन्यं जानुभिश्चापि जघ्नतुः ।**

**ततः शब्देन महता भर्त्सयन्तौ परस्परम् ॥ ३५ ॥**

**प्रकर्षणेत्यादि ।**

आकृष्य क्रोडीकरणं प्रकर्षणमुदाहृतम् ।
आकर्षणं लीलयैव सम्मुखीकरणं स्मृतम् ।
पुरः पश्चात् पार्श्वयोश्चाभ्याकर्षो भ्रमणं तथा ।
पश्चात् प्रपातनं वेगाद्विकर्षणमुदाहृतम् ।। इत्युक्तेस्तदर्थो ज्ञेयः ।

**आकर्षतुः** आचकर्षतुः ।। ३५ ।।

**व्यूढोरस्कौ दीर्घभुजौ नियुद्धकुशलावुभौ ।**
**बाहुभिः समसज्जेतामायासैः परिघैरिव ।। ३६ ।।**

**व्यूढोरस्कौ** विपुलवक्षसौ । 'व्यूढं संहतविन्यस्ते पृथुलेषु च गद्यते'[१] इति विश्वः । **बाहुभिः** चतुर्भिः । भूमौ पातयामास ।। ३६ ।।

**चकर्ष दोर्भ्यामुत्पाट्य भीमो मल्लममित्रहा ।**
**निनदं तमभिक्रोशन् शार्दूल इव वारणम् ।। ३७ ।।**

**उत्पाट्य** अत्यन्तं भूलग्नम् । तत उद्धृत्येत्यर्थः ।। ३७ ।।

**समुद्यम्य महाबाहुः भ्रामयामास वीर्यवान् ।**
**ततो मल्लाश्च मत्स्याश्च विस्मयं चक्रिरे परम् ।। ३८ ।।**

**भ्रामयित्वा शतगुणं गतसत्त्वमचेतनम् ।**
**प्रत्यपिंषन्महाबाहुर्मल्लं भुवि वृकोदरः ।। ३९ ।।**

**तस्मिन् विनिहते वीरे जीमूते लोकविश्रुते ।**
**विराटः परमं हर्षमगच्छद्बान्धवैः सह ।। ४० ।।**

**प्रत्यपिंषत्** पिपेष । न हनिष्यामीति पूर्वमुक्तिस्तु राजसुहृद्विषयिणी अयं तु प्रतिकूल इति हननं युक्तमिति न विरोधः ।। ४० ।।

१. व्यूढं संहतविन्यस्ते पृथुलेऽप्यभिधेयवत् ।। इति मेदिनी ।

प्रहर्षात् प्रददौ वित्तं बहु राजा महामनाः ।
वल्लवाय महारङ्गे यथा वैश्रवणस्तथा ॥ ४१ ॥

**वैश्रवणः** विश्रवसोऽपत्यम् कुबेरः । **यथा वैश्रवणः** वित्तदानेऽपि न वित्तस्य ह्रास इति यथा वैश्रवणे युक्तिस्तथा ॥ ४१ ॥

एवं स सुबहून् मल्लान् पुरुषांश्च महाबलान् ।
विनिघ्नन् मत्स्यराजस्य प्रीतिमाहरदुत्तमम् ॥ ४२ ॥

**आहरत्** उपाजहार ॥ ४२ ॥

यदाऽस्य तुल्यः पुरुषो न कश्चित् तत्र वर्तते ।
ततो व्याघ्रैश्च सिंहैश्च द्विरदैश्चाप्ययोधयत् ॥ ४३ ॥

पुनरन्तःपुरगतः स्त्रीणां मध्ये वृकोदरः ।
योध्यते स विराटेन सिंहैर्मत्तैर्महाबलैः ॥ ४४ ॥

बीभत्सुरपि गीतेन स्वनृत्येन च पाण्डवः ।
विराटं तोषयामास सर्वाश्चान्तःपुरे स्त्रियः ॥ ४५ ॥

अश्वैर्विनीतैर्जवनैस्तत्र तत्र समागतैः ।
तोषयामास राजानं नकुलो नृपसत्तमम् ॥ ४६ ॥

तस्मै प्रदेयं प्रायच्छत् प्रीतो राजा धनं बहु ।
विनीतान् वृषभान् दृष्ट्वा सहदेवस्य चाभितः ॥ ४७ ॥

अरोगा सुबहुक्षीरा दृष्ट्वा गाः स नराधिपः ।
धनं ददौ बहुविधं विराटः पुरुषर्षभः ॥ ४८ ॥

**गाः** तत्पोषिताः ॥ ४७ ॥

द्रौपदी प्रेक्ष्य तान् सर्वान् क्लिश्यमानान् महारथान् ।
नातिप्रीतमना राजन् निश्वासपरमाऽभवत् ।। ४९ ।।

निश्वासपरमा पुनःपुनर्निशश्वासेत्यर्थः ।। ४९ ।।

एवं ते न्यवसंस्तत्र प्रच्छन्ना पुरुषर्षभाः ।
कर्माणि तस्य कुर्वाणा विराटनृपतेस्तदा ।। ५० ।।

।। इति श्रीमन्महाभारते विराटपर्वणि समयपालनपर्वणि त्रयोदशोऽध्यायः ।।

।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां त्रयोदशोऽध्यायः ।।

।। इति समयपालनपर्व ।।

*****

# ३. कीचकवधपर्व

## १४. चतुर्दशोऽध्यायः

( द्रौपद्या परुषभाषणैः कीचकस्य प्रत्याख्यानम् । )

**वैशम्पायन उवाच -**

**वसमानेषु पार्थेषु मत्स्यस्य नगरे तदा ।**
**महारथेषु च्छन्नेषु मासा दश समभ्ययुः ॥ १ ॥**

**वसमानेषु** वसत्सु ॥ १ ॥

**याज्ञसेनी सुदेष्णां तु शुश्रूषन्ती विशाम्पते ।**
**[१]आवसत् परिचारार्थं सुदुःखं जनमेजय ॥ २ ॥**

**परिचारार्थं** परिचाराः स्वीकृतदासभावाः पाण्डवाः तेभ्यः परिचारार्थं प्रच्छन्नपाण्डव-निमित्तमेव सुदुःखं यथा भवति तथा । सुदेष्णां शुश्रूषन्ती न्यवसत् ॥ २ ॥

**तथा चरन्तीं पाञ्चालीं सुदेष्णाया निवेशने ।**
**तां देवीं तोषयामास तथा चान्तःपुरे स्त्रियः ॥ ३ ॥**

**तस्मिन् वर्षे गतप्राये कीचकस्तु महाबलः ।**
**सेनापतिः विराटस्य ददर्श द्रुपदात्मजाम् ॥ ४ ॥**

**गतप्राये** द्विमासोने । ददर्श दिग्विजयादागत इति शेषः । यथोक्तम् - 'संवत्सरे द्विमासोने विजित्य दिशमागतः'[२] इति ॥ ४ ॥

**तां दृष्ट्वा देवगर्भाभां चरन्तीं देवतामिव ।**
**कीचकः कामयामास कामबाणप्रपीडितः ॥ ५ ॥**

---

१. अवसत् परिचारार्हा (इति क्वचित्)

२. महाभारततात्पर्यनिर्णये (२३/१९)

देवगर्भाणां आभेव आभा यस्याः सा ताम् । साधारणं तादृग्देवगर्भव्यावृत्त्यर्थं देवतामिवेत्युक्तिः ।। ५ ।।

**स तु कामाग्निसन्तप्तः सुदेष्णामभिगम्य वै ।**
**प्रहसन्निव सेनानीरिदं वचनमब्रवीत् ।। ६ ।।**

'सेनानीर्वाहिनीपतिः' इत्यमरः ।। ६ ।।

**नेयं मया जातु पुरेह दृष्टा राज्ञो विराटस्य निवेशने शुभा ।**
**रूपेण चोन्मादयतीव मां भृशं गन्धेन जाता मदिरेव भामिनी ॥७॥**

इह **निवेशने** । **उन्मादयतीव** भ्रान्तं करोतीव । **जाता** सद्यस्तनी **मदिरा** मदम् ।। ७ ।।

**का देवरूपा हृदयङ्गमा शुभे आचक्ष्व मे कस्य कुतोऽत्र शोभने ।**
**चित्तं हि निर्मथ्य करोति मां वशे नचान्यदत्रौषधमस्ति मे मतम् ॥८॥**

**हृदयङ्गमा** मनोहरा । 'गमेः सुपि'[1] इति खच् । **कस्य** पुत्री । **कुतो** देशात् । **अन्यत्** तत्सङ्गात् ।। ८ ।।

**अहो तवेयं परिचारिका शुभा प्रत्यग्ररूपा प्रतिभाति मामियम् ।**
**अयुक्तरूपं हि करोति कर्म ते प्रशास्तु मां यच्च ममास्ति किञ्चन ।। ९ ।।**

**प्रत्यग्ररूपा** नूतनाकारा । 'प्रत्यग्रोऽभिनवो नव्यः' इत्यमरः । तरुणीति यावत् । **प्रशास्तु** । तत्स्वामिनी भूत्वा शिक्षयतु ।। ९ ।।

**प्रभूतनागाश्वरथं महाजनं समृद्धियुक्तं बहुपानभोजनम् ।**
**मनोहरं काञ्चनचित्रभूषणं गृहं महच्छोभयतामियं मम ।। १० ।।**

मद्गृहम् ।। १० ।।

---

१. 'गमेः सुपि वाच्यः' । वार्तिकम् ।

**ततः सुदेष्णामनुमन्त्र्य कीचकस्ततः समभ्येत्य नराधिपात्मजाम् ।**
**उवाचकृष्णामभिसान्त्वयन्सदामृगेन्द्रकन्यामिवजम्बुकोवने।।११।**

**अनुमन्त्र्य** 'कामातुराणां न भयं न लज्जा' इति स्वविषये औदासीन्येन स्थितां गच्छामीत्युक्त्वा । **मृगेन्द्रकन्यां** सिंहपुत्रीम् । **जम्बुको** गोमायुः ।। ११ ।।

**का त्वं कस्यासि कल्याणि कुतो वा त्वं वरानने ।**
**प्राप्ता विराटनगरं तत्त्वमाचक्ष्व शोभने ।। १२ ।।**

**का** नाम्ना जात्या वा ।। १२ ।।

**रूपमग्र्यं तथा कान्तिः सौकुमार्यमनुत्तमम् ।**
**कान्त्या विभाति वक्त्रं ते शशाङ्क इव निर्मलम् ।। १३ ।।**

कान्तिस्तथाऽग्र्या यदि तत्र निर्मलम् । मलाभावस्तर्हि **शशाङ्क इव विभाति** 'अव्ययं विभक्ति..'[1] इति समासः ।। १३ ।।

**नेत्रे सुविपुले सुभ्रु पद्मपत्रनिभे शुभे ।**
**वाक्यं ते चारु सर्वाङ्गि परपुष्टरुतोपमम् ।। १४ ।।**

**सुविपुले** गतम् । वाक्यं ध्वनिः । परपुष्टः कोकिलः । तद्रुतोपमम् तद्ध्वनिसदृशम् । 'वनप्रियः परभृतः कोकिलः पिक इत्यपि' इत्यमरः ।। १४ ।।

**एवंरूपा मया नारी काचिदन्या महीतले ।**
**न दृष्टपूर्वा सुश्रोणि यादृशी त्वमनिन्दिते ।। १५ ।।**

एवंरूपेति बहुव्रीहिः ।। १५ ।।

---

१. अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौग-पद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु । पा.सू. (२/१/६)

**लक्ष्मीः पद्मालया का त्वमथ भूतिः सुमध्यमे ।**
**ह्रीः श्रीः कीर्तिरथो कान्तिरासां का त्वं वरानने ।। १६ ।।**

पद्मालयेति यौगिकम् । **लक्ष्मीः** शोभाभिमानिनी देवता वा । **पद्मालया** रमा । **भूतिः** सम्पदभिमानिनी । 'लक्ष्मीः सम्पत्तिशोभयोः', 'भूतिर्भस्मनि सम्पदि' इत्यमरविश्वौ । **आसां** तिसृणां मध्ये **का त्वम्** । **आसां** चतसृणां मध्ये **का त्वम्** ।। १६ ।।

**अतीव रूपिणी किं त्वमनङ्गाङ्गविहारिणी ।**
**अतीव भ्राजसे सुभ्रु प्रभेवेन्दोरनुत्तमा ।। १७ ।।**

**अनङ्गाङ्गविहारिणी** रतिः **किं अनुत्तमा** अकलङ्का चेत् तद्वद् **भ्राजसे** ।। १७ ।।

**अपि [१]चेक्षणयक्ष्माणां स्मितं ज्योत्स्नोपमं शुभम् ।**
**दिव्यांशुरश्मिभिर्वृत्तं [२]दिव्यकान्तिमनोरमम् ।। १८ ।।**

**निरीक्ष्य चन्द्रवक्त्रं ते लक्ष्म्याऽनुपमया युतम् ।**
**को नेह कृत्स्ने जगति कामस्य वशगो भवेत् ।। १९ ।।**

चन्द्रधर्मानाह– **अपि चेति** ।। ईक्षणमेव यक्ष्म राजरोगः । उपमाने चन्द्रस्येदं । यक्ष्मात्र तु दौर्मनस्येन । द्रष्टॄणामिति शेषः । **ईक्षणलक्षणमिति पाठः सुन्दरः** । ईक्षणमेव लक्ष्म चिह्नं यस्य स तथा तम् । 'चिह्नं लक्ष्म च लक्षणम्' इत्यमरः । ज्योत्स्ना उपमीयते अनेनेति तथा । स्मितमीषद्धसितमेव ज्योत्स्नोपमं यस्य स तथा तम् । दिव्याः अंशवः वस्त्रसूक्ष्मांशास्त एव रश्मयः किरणास्तैवृत्तम् । 'वृत्तोऽतीते वटे ख्याते वर्तुलेऽपि वृते वृतः' इति विश्वः । चन्द्रपक्षे – अंशुवत् सूर्यवद्विद्यमानाश्च ते रश्मयश्च तैः मम तापकत्वादिति भावः । 'अंशुर्लेशे रवौ

१. चेक्षणपक्ष्माणाम् । (इति गी. पाठः)
२. दिव्यकान्तिमनोहरम् । (इति गी. पाठः)

रश्मौ' इति विश्वः । 'वृत्तातीते वटे ख्याते वर्तुलेऽपि मृते वृते' इति विश्वः । दिव्यकान्त्या मनोरमः । **दिव्यकान्तिमनोरमः** । तम् । वक्त्ररूपो यश्चन्द्रस्तम् । **लक्ष्म्या** शोभया **अनुपमया** सदातन्याऽसदृशया युतमित्यनेन शैला इवोन्नताः सन्तो, किन्तु प्रकृतिकोमला इतिवत् प्रसिद्धादप्येनं विशेषयामासेति ध्येयम् ।। १८ ।।

**हारालङ्कारयोग्यौ तु स्तनौ चोभौ शुशोभनौ ।**
**सुजातौ संहतौ लक्ष्म्या पीनौ वृत्तौ निरन्तरौ ।। २० ।।**

**सुजातौ** उन्नतौ **पीनौ** पुष्टौ **वृत्तौ** वर्तुलौ **निरन्तरौ** परस्परं संश्लिष्टौ । तौ हारालङ्कारयोग्याविति विधेयोक्तिः ।। २० ।।

**कुड्मलाम्बुरुहाकारौ तव सुभ्रु पयोधरौ ।**
**कामप्रतोदाविव मां तुदतश्चारुहासिनि ।। २१ ।।**

**कुड्मलाम्बुरुहाकारौ** कमलमुकुलसदृशौ । **कामं** यथेच्छं **प्रतोदाविव** अश्वतोदकसूचिकाग्रयष्टिविशेषाविव **तुदतः** व्यथयतः 'प्राजनं तोदनं तोत्रम्' इत्यमरः ।।२१।।

**वल्लीविभङ्गचतुरं स्तनभारविनामितम् ।**
**कराग्रसम्मितं मध्यं तवेदं तनुमध्यमे ।। २२ ।।**

वल्लीनां यो विभङ्गः प्रकारस्तेन चतुरं कुशलं वल्लीत्रयशोभितमिति यावत् । विनामितं नम्रीकृतम् । कराग्रेण मिलितसर्वाङ्गुलिकरेण समितं समम् । तनु सूक्ष्मं मध्यमं यस्याः सा तत्सम्बुद्धिः । अनेन नेयमविद्यमानस्तुतिरिति द्योतयति । 'मध्यमं चावलग्नं च मध्योऽस्त्री' इत्यमरः ।। २२ ।।

**दृष्ट्वैव चारु जघनं सरित्पुलिनसन्निभम् ।**
**कामव्याधिरसाध्यो मामप्याक्रामति भामिनि ।। २३ ।।**

**सरित्पुलिनसन्निभं** नदीसैकतोन्नतप्रदेशसदृशम् । स्त्रीवर्णनसमयत्वात्सरिदित्यधिकोक्तिः । 'तोयोत्थितं तत्पुलिनं सैकतं सिकतामयम्' इत्यमरः । **असाध्यः** त्वां विनाऽचिकित्स्यः **आक्रामति** अन्तर्व्याप्नोति । अनुद्यमनार्थत्वात् क्रमेराङ् उद्गमन इति नतङ् ।। २३ ।।

**जज्वाल चाग्निमदनो दावाग्निरिव निर्दयः ।**
**त्वत्सङ्गमातिसङ्कल्पविवृद्धो मां दहत्ययम् ।। २४ ।।**

**अग्निमदनः** मदनाग्निः **जज्वाल** ज्वलितोऽभूत् । न केवलं जज्वाल, किन्तु तव यः सङ्गमस्तस्मिन् अत्यन्तं यः सङ्कल्पः मनोवृत्तिविशेषस्तेन विशेषेण वृद्धः सन् **मां दहति** च ।। २४ ।।

**आत्मप्रदानवर्षेण सङ्गमाम्भोधरेण च ।**
**शमयस्व वरारोहे ज्वलन्तं मन्मथानलम् ।। २५ ।।**

**आत्मप्रदानवर्षेण** शरीरदानलक्षणवृष्ट्या । सङ्गम एवाम्भोधरस्तेन च । अनन्तरं **शमयस्व** । शं सुखं अयश्च प्राप्नुहि इति वा ।। २५ ।।

**मच्चित्तोन्मादनकरा मन्मथस्य शरोत्कराः ।**
**त्वत्सङ्गमेन शमितास्तीव्राः शशिनिभानने ।। २६ ।।**

**शरोत्कराः** बाणसमूहाः **शमिताः** शान्ता भवेयुः ।। २६ ।।

**मह्यं विदार्य हृदयमिदं निर्दयवेदिनः ।। २७ ।।**

**यदि त्वमेवं न करोषि तर्हीत्थं दशेत्याह– मह्यमिति ।। ममेदं हृदयं निर्दयं वेदयन्तीति निर्दयवेदिनः । मोक्तुं दयाभावसूचकाः ।। २७ ।।**

**प्रविष्टा ह्यसितापाङ्गि [१]प्रचण्डाश्चण्डि दारुणाः ।**
**अत्युन्मादसमारम्भाः प्रीत्युन्मादकरा मम ।। २८ ।।**

**हे चण्डिकोपमे** । अत्युन्मादं समारभन्त इति तथा । स्वभावोक्तिरियम् । एतादृशा शराः त्वयि या प्रीतिः तया **ममोन्मादकराः** । 'उन्मादश्चित्तविभ्रमः' इत्यमरः ।। २८ ।।

**आत्मप्रदानसम्भोगैर्मामुद्धर्तुमिहार्हसि ।**
**चित्रमाल्याम्बरधरा सर्वाभरणभूषिता ।। २९ ।।**

**आत्मप्रदानसम्भोगैः** आत्मप्रदानं च सम्भोगाश्च तैः ।। २९ ।।

**कामं प्रकामं सेव त्वं मया सह विलासिनि ।**
**नार्हसीहासुखं वस्तुं सुखार्हा सुखवर्जिता ।। ३० ।।**

**कामं** विषयजातम् । **प्रकामम्** अत्यन्तम् । **सेव** सेवस्व । असुखं दुःखं यथा भवति तथा सुखवर्जिता । सुखसाधनालङ्कारादिरहिता ।। ३० ।।

**प्राप्नुह्यनुत्तमं सौख्यं मत्तस्त्वं मत्तगामिनि ।**
**स्वादून्यमृतकल्पानि पेयानि विविधानि च ।। ३१ ।।**

**अनुत्तमं** सुखं मत्तः प्राप्नुहि । मत्त इव गन्तुं शीलमस्यास्तीति तथा। मदशालिगजस्यैव मत्त इति सञ्ज्ञा । 'प्रभिन्नो गर्जितो मत्तः' इत्यमरः ।। ३१ ।।

**पिबमाना मनोज्ञानि रममाणा यथासुखम् ।**
**भोगोपचारान् विविधान् सौभाग्यं चाप्यनुत्तमम् ।**
**पानं पिब महाभागे भोगैश्चानुत्तमैः शुभैः ।। ३२ ।।**

---

१. प्रचण्डाश्चण्डदारुणाः । (इति गी. पाठः)

**पिबमाना** पिबन्ती । **पानं** पेयम् । **भोगैः** सह । 'वृद्धो यूना'[1] इत्यादिनिर्देशात् ।।३२।।

**इदं हि रूपं प्रथमं नवं वयो[2] निरर्थकं केवलमद्य भामिनि ।**
**अधार्यमाणा स्रगिवोत्तमा शुभा न शोभसे सुन्दरि शोभना सती ।।३३।।**

**रूपम्** आकारः । **प्रथमं** श्रेष्ठम् । **निरर्थकं** भवति । **उत्तमा शुभा** । उत्तरस्मिन् काले अशुभा म्लानी भवतीति । त्वमपि पुरुषैरधार्यमाणा चेन्न शोभसे ।।३३।।

**त्यजामि दारान् मम ये पुरातना भवन्तु दासीस्तव चारुहासिनि ।**
**अहं च ते सुन्दरि दासवत् स्थितः सदा भविष्ये वशगो वरानने ।।**

तव बहवो दारा वर्तन्ते किं करोषि मयेत्यत आह– **त्यजामीति** ।। **दासीः** दास्यः । दासवत् सु स्वामिषु स्थितोऽहमपि स्वामी सन् **सदा** तव **वशगो भविष्ये** भविष्यामि ।। ३४ ।।

**सैरन्ध्र्युवाच -**

**अप्रार्थनीयामिह मां सूतपुत्राभिमन्यसे ।**
**न हीनवर्णां सैरन्ध्री बीभत्सां केशकारिणीम् ।। ३५ ।।**

हे **सूतपुत्र** । सुदेष्णाकीचकयोः [3]क्षत्त्रस्त्रीजातत्वेऽपि पित्रैक्येन सूतपुत्रत्वं

---

१. वृद्धो यूना तल्लक्षणश्चेदेव विशेषः । पा.सू. (१/२/६५)

२. तवानघे (इति गी. पाठः)

३. ब्राह्मण्यां क्षत्रियाज्जातः सूतो भवति पार्थिव ।
प्रतिलोम्येन जातानां स ह्येको द्विज एव तु ।।
रथकारमितीमं हि क्रियायुक्तं द्विजन्मनाम् ।
क्षत्रियादवरं वैश्याद् विशिष्टमिति चक्षते ।।
सह सूतेन सम्बन्धः कृतपूर्वो नरेश्वरैः ।
तथापि तैर्महीपाल राजशब्दो न लभ्यते ।।

सुदेष्णाभ्रातृत्वं चोपपद्यते । **अभिमन्यसे** कामयसे । अप्रार्थनीयत्वे हेतूनाह –

---

तेषां तु सूतविषयः सूतानां नामतः कृतः ।
उपजीव्य च यत् क्षत्रं लब्धं सूतेन तत् पुरा ।।
सूतानामधिपो राजा केकयो नाम विश्रुतः ।।
राजकन्यासमुद्भूतः सारथ्येऽनुपमोभवेत् ।
पुत्रास्तस्य कुरुश्रेष्ठ मालव्यां जज्ञिरे तदा ।।
तेषामतिबलो ज्येष्ठः कीचकः सर्वजित् प्रभो ।
द्वितीयायां तु मालव्यां चित्रा ह्यवरजाभवत् ।
तां सुदेष्णोति वै प्राहुर्विराटमहिषीं प्रियाम् ।।
तां विराटस्य मात्सयस्य केकयः प्रददौ मुदा ।
सुरथायां मृतायां तु कौसल्यां श्वेतमातरि ।।
सुदेष्णां महिषीं लब्ध्वा राजा दुःखमपानुदत् ।।
उत्तरं चोत्तरां चैव विराटात् पृथिवीपते ।
सुदेष्णा सुषुवे देवी कैकेयी कुलवृद्धये ।।
मातृष्वसृसुतां राजन् कीचकस्तामनिन्दिताम् ।
सदा परिचरन् प्रीत्या विराटे न्यवसत् सुखी ।।
भ्रातरस्तस्य विक्रान्ताः सर्वे च तमनुव्रताः ।
विराटस्यैव संहृष्टा बलं कोशं च वर्धयन् ।।
कालेया नाम दैतेयाः प्रायशो भुवि विश्रुताः ।
जज्ञिरे कीचका राजन् बाणो ज्येष्ठस्ततोऽभवत् ।।
स हि सर्वास्त्रसम्पन्नो बलवान् भीमविक्रमः ।
कीचको नष्टमर्यादो बभूव भयदो नृणाम् ।
तं प्राप्य बलसम्मत्तं विराटः पृथिवीपतिः ।।
जिगाय सर्वांश्च रिपून् यथेन्द्रो दानवानिव ।
मेखलांश्च त्रिगर्तांश्च दशार्णांश्च कशोरुकान् ।।
मालवान् यवनांश्चैव पुलिन्दान् काशिकोसलान् ।
अङ्गान् वङ्गान् कलिङ्गांश्च तङ्गणान् परतङ्गणान् ।।
मलदान् निषधांश्चैव तुण्डिकेरांश्च कोङ्कणान् ।।

**हीनेति** ।। **हीनवर्णां** निकृष्टजात्युत्पन्नाम् । **बीभत्सां** विकृतचित्ताम् । निन्दितामिति यावत् । वधश्चित्तविकारे मानवधे च रूपम् ।। ३५ ।।

**परदाराऽस्मि भद्रं ते न युक्तं त्वयि साम्प्रतम् ।**
**दयिताः प्राणिनां दारा धर्मं समनुचिन्तय ।। ३६ ।।**

**परदाराऽस्मि** परभार्याऽस्मि । अयं टाबन्तोऽपि । 'क्रोडा हारा तथा दारा त्रय एते यथाक्रमम्' । 'क्रोडे हारे च दारेषु शब्दाः प्रोक्ता मनीषिभिः' [१]इत्युडुचन्द्र इति भानुः । **साम्प्रतम्** इदानीम् । 'साम्प्रतं चाधुनार्थे स्याद्' इति विश्वः । **दयिताः** प्रेष्ठाः **प्राणिनां** त्वदादीनामपि ।। ३६ ।।

**परदारे न ते बुद्धिर्जातु कार्या कथञ्चन ।**
**विवर्जनं ह्यकार्याणामेतत् [२]सत्पुरुषव्रतम् ।। ३७ ।।**

**परदारे** परभार्यायाम् । 'भवेद्दाराश्च दारोऽपि' इति द्विरूपकोशः ।। ३७ ।।

---

करदांश्च निषिद्धांश्च शिवान् दुश्छिल्लिकांस्तथा ।
अन्ये च बहवः शूराः नानाजनपदेश्वराः ।
कीचकेन रणे भग्ना व्यद्रवन्त दिशो दश ।।
तमेवं वीर्यसम्पन्नं नागायुतबलं रणे ।
विराटस्तत्र सेनायाश्चकार पतिमात्मनः ।।
विराटभ्रातरश्चैव दश दाशरथोपमाः ।
ते चैनानन्ववर्तन्त कीचकान् बलवत्तरान् ।।
एवंविधबलोपेताः कीचकास्ते न तद्विधाः ।
राज्ञः श्याला महात्मानो विराटस्य हितैषिणः ।
एतत् ते कथितं सर्वं कीचकस्य पराक्रमम् ।। - इति महाभारते विराटपर्वणि (१६)

१. 'इति व्याडिशुभाङ्कौ' इति क्वचित् ।
२. 'सुपुरुषव्रतम्' इति गी.पाठः ।

**मिथ्याभिगृध्नो हि नरः पापात्मा मोहमास्थितः ।**
**अयशः प्राप्नुयाद् घोरं महद्वा प्राप्नुयाद्भयम् ॥ ३८ ॥**

**मिथ्याभिगृध्नः** वितथाभिकाङ्क्षावान् । **भयं** तत्पत्यादिभ्यः ॥ ३८ ॥

**वैशम्पायन उवाच -**

**एवमुक्तस्तु सैरन्ध्र्या कीचकः काममोहितः ।**
**जानन्नपि सुदुर्बुद्धिः परदाराभिमर्शणे ॥ ३९ ॥**

बहून् दोषान् **जानन्नपि** तथा ममेयं जाता **सुदुर्बुद्धि**रिति **जानन्नपि** ॥ ३९ ॥

**दोषान् बहून् प्राणहरान् सर्वलोकविगर्हितान् ।**
**प्रोवाचेदं सदुर्बुद्धिः द्रौपदीमजितेन्द्रियः ॥ ४० ॥**

यतः **अजितेन्द्रिय**स्ततः **सुदुर्बुद्धिः द्रौपदीं** प्रतीदं **प्रोवाचे**ति योजना ॥ ४० ॥

**नार्हस्येवं वरारोहे प्रत्याख्यातुं वरानने ।**
**मां मन्मथसमाविष्टं त्वत्कृते चारुहासिनि ॥ ४१ ॥**

**त्वत्कृते** त्वन्निमित्तम् ॥ ४१ ॥

**प्रत्याख्याहि न मां भीरु वशगं प्रियवादिनम् ।**
**नूनं त्वमसितापाङ्गी पश्चात्तापं करिष्यसि ॥ ४२ ॥**

वृथा महान्तं त्यक्तवत्यहमस्मीति **पश्चात्तापम्** ॥ ४२ ॥

**अहं हि सुभ्रु राज्यस्य कृत्स्नस्यास्य सुमध्यमे ।**
**प्रभुर्वासयिता चैव वीर्येणाप्रतिमः क्षितौ ॥ ४३ ॥**

**वासयिता** क्लिष्टागन्तुकान् ॥ ४३ ॥

**पृथिव्यां मत्समो नास्ति कश्चिदन्यः पुमानिह ।**
**रूपयौवनसौभाग्यैर्भोगैश्चानुत्तमैः शुभैः ।। ४४ ।।**

**सर्वकामसमृद्धेषु भोगेष्वनुपमेष्विह ।**
**भोक्तव्येषु च कल्याणि कस्माद्दास्ये रता ह्यसि ।। ४५ ।।**

**भोक्तव्येषु भोगेषु** भोक्ताऽऽत्मसमो नास्ति ।। ४५ ।।

**मया दत्तमिदं राज्यं स्वामिन्यसि शुभानने ।**
**भजस्व मां वरारोहे भुङ्क्ष्व भोगाननुत्तमान् ।। ४६ ।।**

हे **स्वामिनि** अस्मिन् क्षण एव तुभ्यं **राज्यं मया दत्तं भोगान्** च **भुङ्क्ष्व** । सति राजनि विराटे कथं दास्यसीत्यतोऽप्याह । अस्मिन् **स्वामिनि विराटे** मयैव **राज्यं** दत्तम् । मद्बाहुपरिपालितमिति पुनस्ततोऽप्यपहृत्य दातुं शक्तिरस्तीति ध्वन्यते । 'यतौ दत्तमनन्तकम्' 'अक्षयं ब्राह्मणे दानम्' इतिवत् सत्यमिति ।। ४६ ।।

**एवमुक्ता तु सा साध्वी कीचकेनाशुभं वचः ।**
**कीचकं प्रत्युवाचेदं गर्हयन्त्यस्य तद्वचः ।। ४७ ।।**

**सैरन्ध्र्युवाच -**

**मा सूतपुत्र मुह्यस्व माऽद्यात्याक्षीः स्वजीवितम् ।**
**जानीहि पञ्चभिर्वीरैः नित्यं मामभिरक्षिताम् ।। ४८ ।।**

**मुह्यस्व** मुह्य **वीरैः** पतिभिः ।। ४८ ।।

**न चाप्यहं त्वया लभ्या गन्धर्वाः पतयो मम ।**
**ते त्वां निहन्युः कुपिताः साध्वलं मा व्यनीनशः ।।४९।।**

**मा व्यनीनशः** माऽयं न माङ् ।।

**अशक्यरूपं पुरुषैरध्वानं गन्तुमिच्छसि ।**
**यथा निश्चेतनो बालः कूलस्थः कूलमुत्तरम् ।। ५० ।।**
**तर्तुमिच्छति मन्दात्मा तथा त्वं तर्तुमिच्छसि ।। ५१ ।।**

**पुरुषैरशक्यरूपं** गन्तुमशक्यम् । **निश्चेतनः** अनिन्द्रियपाटवः । **उत्तरं** कूलम् । परपारं **तर्तुं** तरितुम् । [१]'साम्पराये तर्तव्याभावाद्' इत्यादेर्ह्रस्वान्तोऽप्यस्ति, तस्य वेदं रूपम् ।। ५१ ।।

**अन्तर्महीं वा यदि वोर्ध्वमुत्पतेः समुद्रपारं यदि वा प्रधावसि ।**
**तथाऽपि तेभ्यो न विमोक्षमर्हसि प्रमाथितो देवसुता हि खेचराः ।।५२।।**

**मही** मह्या अन्तः । तेषां **तेभ्यः** खेचराः । 'तत्पुरुषे कृति'[२] इत्यलुक् ।। ५२ ।।

**त्वं कालरात्रीमिव कश्चिदातुरः किं मां दृढं प्रार्थयसेऽद्य कीचक ।**
**किंमातुरङ्केशयितो यथा शिशुश्चन्द्रं जिघृक्षुरिव मन्यसे हि माम् ।। ५३**

**कालरात्रीं** मारयित्रीं देवताम् । 'कृदिकारात्'[३] इति ङीप् । **आतुरो** रोगी । का च सा माता च किंमाता तस्याः किंमातुः । किंक्षेप इति समासः । 'शायितः शयितः समौ' इत्यमरः । शी सेदुः क्तप्रत्ययः । निष्ठासीङ् इति नकित् । ततश्च गुणयादेशौ । इवशब्दोऽवधारणे । तथैव **मन्यसे** कामयसे ।। ५३ ।।

**तेषां प्रियां प्रार्थयतो न ते भुवि गत्वा दिवं वा शरणं भविष्यति ।**
**न वर्तते कीचक ते दृशा शुभं या तेन सञ्जीवनमर्थयेत सा ।।५४।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि चतुर्दशोऽध्यायः ।।**

---

१. 'ओं साम्पराये तर्तव्याभावात् तथा ह्यन्ये ओम्' इति ब्रह्मसूत्रम् (३/३/२८)
२. तत्पुरुषे कृति बहुलम् । पा.सू. (६/३/१४)
३. 'कृदिकारादक्तिनः' । वार्तिकम् ।

**भुवि** शरणं नास्ति । **दिवं गत्वा** स्थितस्य **ते शरणं** रक्षकं किमपि **न भविष्यति** । **या ते शुभं सञ्जीवनमर्थयेत** तादृशी **दृशा** बुद्धिः **तेन वर्तते** । कीचकपदस्यामन्त्रितत्वेनाविद्यमानतद्भावेऽपि वर्तत इति तिङः परत्वात् सर्वदा रक्ष देवन इतिवत् इत्यादेशः ।। ५४ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां चतुर्दशोऽध्यायः ।।**

*****

# १५. पञ्चदशोऽध्यायः

**( सुदेष्णाकर्तृकं द्रौपद्याः कीचकगृहं प्रति प्रेषणम् । )**

**वैशम्पायन उवाच -**

**प्रत्याख्यातो राजपुत्र्या सुदेष्णां कीचकोऽब्रवीत् ।**
**अमर्यादेन कामेन घोरेणाभिपरिप्लुतः ।। १ ।।**

**अमर्यादेन** न विद्यते मर्यादा [१]ज्येष्ठभगिनीं प्रत्येवं न वक्तव्यमित्यादिरूपा सत्सीमा यस्मात् स तथा तेन **कामेन** घोरेण एतमुपायं विना शान्तिरहितेन **अभिपरिप्लुतः** व्याप्तः ।। १ ।।

**यथा कैकेयि सैरन्ध्री समेयात् तद्विधीयताम् ।**
**येनोपायेन सैरन्ध्री भजेन्मां गजगामिनी ।। २ ।।**

**समेयात्** आगच्छेत् । आगमनमात्रस्याप्रयोजकत्वादाह–**येनेति** । **येनोपायेन सैरन्ध्री मां भजेत्,** येन चाहं मोहात् प्राणान् मा प्रहासिषमिति माङोऽध्याहारः ।। २ ।।

---

१. कीचकस्यैव ज्येष्ठत्वं भारतादवगम्यते -
द्वितियायान्तु मालव्यां चित्रा **ह्यवरजाऽभवत्** ।
तां सुदेष्णेति वै प्राहुर्विराटमहिषीं प्रियाम् ।। - इति भारतवचनम् । (४/१६)

**तं सुदेष्णे परीप्सस्व मोहात् प्राणान् प्रहासिषम् ।**

**वैशम्पायन उवाच -**

**तस्य सा बहुशः श्रुत्वा वाचं विलपतस्तदा ।। ३ ।।**

**तं परीप्सस्व** परीप्स आलोचय । आप्नोतेः 'आप्ज्ञप्यृधामीत्'[1] इत्यादिनेत् । केचित् मा उहात् इति विच्छिद्य ऊहात् तर्कात् परीप्सस्वेति व्यातन्वते । **विलपतः** परिदेवयतः । 'विलापः परिदेवनम्' इत्यमरः ।। ३ ।।

**विराटमहिषी देवी कृपां चक्रे मनस्विनी ।**
**स्वमन्त्रमभिसन्धाय तस्यार्थमनुचिन्त्य च ।। ४ ।।**

**स्वमन्त्रं** स्वालोचनाम् । एवं चेदित्थं भवेदिति निश्चित्य । **तस्य** कीचकस्य **अर्थं** प्रयोजनं च ।। ४ ।।

**उद्योगं चैव कृष्णायाः सुदेष्णा सूतमब्रवीत् ।**
**पर्वणि त्वं समुद्दिश्य सुरामन्नं च कारय ।। ५ ।।**

**उद्योगं** एवं चेत् । **एव कृष्णाया** इति ग्रन्थकृदुक्तिः । सैरन्ध्री कीचकगृहं गन्तुमुद्युक्ता भवेदित्युद्योगं **चानुचिन्त्य** । **पर्वणि** उत्सवविशेषे । उद्दिश्य । मामिति शेषः । 'पर्व स्यादुत्सवे ग्रन्थौ प्रस्तावे लक्षणान्तरे' इति विश्वः ।। ५ ।।

**तत्रैनां प्रेषयिष्यामि सुराहारीं तवान्तिकम् ।**
**तत्र सम्प्रेषितामेनां विजने निरवग्रहे ।**
**सान्त्वयेथा यथाकामं सान्त्व्यमाना रमेद्यदि ।। ६ ।।**

**एनां** अनुचिन्तनरूपकिञ्चित्कार्यं प्रत्युपात्तायाः पुनः प्रेषणरूपकार्यान्तरं प्रत्युपादानादेनादेशः । पूर्वं सुरान्नयोः प्रसक्तत्वेऽपि **सुराहारीं** इत्युक्तिः तस्याः

---

१. पा.सू. (७/४/५५)

सैरन्ध्रीत्वादन्नानयनयोग्यता नेति द्योतयितुम् । **निरवग्रहे** अप्रतिबन्धस्थले । 'प्रतिबन्धेऽप्यवग्रहे' इति विश्वः । **सान्त्व्यमाना यदि** रमते इत्यनुक्त्वा उक्त्वा च **रमेत्** इति पाण्डवरूपपरगामित्वं बोधति, तर्हि मनस्तोषो भवेदिति शेषः ।।६।।

**वैशम्पायन उवाच -**

**इत्युक्तः स विनिष्क्रम्य भगिन्या वचनात् तदा ।**
**सुरामाहारयामास राजार्हां सुपरिष्कृताम् ।। ७ ।।**

**सुपरिष्कृतां** 'सुपरिभ्याम्' इति सुट् । 'परिनिविभ्यः...'[1] इति षत्वम् ।। ७ ।।

**भक्ष्यांश्च विविधाकारान् बहूंश्चोच्चावचांस्तदा ।**
**कारयामास कुशलैरन्नं पानं च भोजनम् ।। ८ ।।**

**विविधाकारान्** नानाविधाकारवतः । तत्रापि **उच्चावचान्** नानाभेदवतः । **पानं** पेयं । **भोजनं** भोज्यम् ।। ८ ।।

**तस्मिन् कृते तदा देवी कीचकेनोपमन्त्रिता ।**
**सुदेष्णा प्रेषयामास सैरन्ध्रीं कीचकालयम् ।। ९ ।।**

तस्मिन् पेयादौ **कृते** सिद्धे सति **उपमन्त्रिता** परिवेष्य प्रेषयिष्यामि भुज्यतामित्या-मन्त्रिता ।। ९ ।।

**सुदेष्णोवाच -**

**उत्तिष्ठ गच्छ सैरन्ध्रि कीचकस्य निवेशनम् ।**
**पानमानय कल्याणि पिपासा मां प्रबाधते ।। १० ।।**

प्रेषयामासेत्युक्तं विशदयति— **उत्तिष्ठेति** ।। ऊर्ध्वकर्मत्वात् परस्मैपदम् । **पानं** पेयम् । **पिपासा** सुरापानेच्छा ।। १० ।।

---

१. परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम् । पा.सू. (८/३/७०)

**सैरन्ध्र्युवाच**

**न गच्छेयमहं तस्य राजपुत्रि निवेशनम् ।**
**त्वमेव राज्ञि जानासि यथा स निरपत्रपः ॥ ११ ॥**

**निरपत्रपः** निर्लज्जः ॥ ११ ॥

**नचाहमनवद्याङ्गि तव वेश्मनि भामिनि ।**
**कामवृत्ता भविष्यामि पतीनां व्यभिचारिणी ॥ १२ ॥**

**कामवृत्ता** सती ॥ १२ ॥

**त्वं देवि चैव जानासि यथा स समयः कृतः ।**
**प्रविशन्त्या मया पूर्वं तव वेश्मनि भामिनि ॥ १३ ॥**

**समयः** सङ्केतः ॥ १३ ॥

**कीचकश्च सुकेशान्ते मूढो मदनदर्पितः ।**
**सोऽवमंस्यति मां दृष्टो न यास्ये तत्र शोभने ॥ १४ ॥**

**अवमंस्यति** अवमानितां करिष्यति । धर्षयिष्यतीति यावत् ॥ १४ ॥

**सन्ति बह्व्यस्तव प्रेष्या राजपुत्रि वशानुगाः ।**
**अन्यां प्रेषय भद्रं ते स हि मामवमंस्यते ॥ १५ ॥**

**सुदेष्णोवाच -**

**नैव त्वां जातु हिंस्यात् स इतः सम्प्रेषितां मया ।**
**इत्युक्त्वा प्रददौ पात्रं सपिधानं हिरण्मयम् ॥ १६ ॥**

**हिंस्यात्** पीडयेत् । **सपिधानम्** आच्छादनपात्रसहितम् । **हिरण्मयम्** । 'दाण्डिनायन...'[१] इति निपातितोऽयं शब्दः ॥ १६ ॥

---

१. दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि । - पा. सू । (६/४/१७४)

सा शङ्कमाना रुदती देवं शरणमीयुषी ।
प्रातिष्ठत सुराहारी कीचकस्य निवेशनम् ॥ १७ ॥

**सुराहारी** ङीबन्तः ॥ १७ ॥

**सैरन्ध्र्युवाच -**

यथाऽहमन्यं भर्तृभ्यो नाभिजानामि कञ्चन ।
तेन सत्येन मां प्राप्तां मा कुर्यात् कीचको वशे ॥ १८ ॥

**प्राप्तां** स्वनिवेशनम् ॥ १८ ॥

**वैशम्पायन उवाच -**

उपातिष्ठत सासूयं मुहूर्तमबलात्वतः ।
स तस्यास्तनुमध्यायाः सर्वं सूर्योऽवबुद्धवान् ॥ १९ ॥

**उपातिष्ठत** 'उपाद्देवपूज...'[१] इति आत्मनेपदम् । **सर्वं** सोपास्तिहेतुम् । सूर्यस्य प्रार्थनं सर्वपाण्डवानां ज्येष्ठत्वात् ॥ १९ ॥

अन्तर्हितं ततस्तस्या रक्षो रक्षार्थमादिशत् ।
तच्चैनां नाजहात् तत्र सर्वावस्थास्वनिन्दिताम् ॥ २० ॥

अवबोधफलमाह– **अन्तर्हितमिति** ॥ **तत्** रक्षः ॥ २० ॥

तां मृगीमिव सन्त्रस्तां दृष्ट्वा कृष्णां समीपगाम् ।
उदतिष्ठन्मुदा सूतो नावं लब्ध्वेव पारगः ॥ २१ ॥

**॥ इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि पञ्चदशोऽध्यायः ॥**

**पारगः** पारं गन्तुमुद्यतः ॥ २१ ॥

**॥ इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां पञ्चदशोऽध्यायः ॥**

*****

---

१. उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम् - वार्तिकम् ।

# १६. षोडशोऽध्यायः

( कीचककृतं द्रौपद्या अपमानम् । )

**कीचक उवाच -**

**स्वागतं ते सुकेशान्ते सुव्युष्टा राजनी मम ।**
**स्वामिनी त्वमनुप्राप्ता प्रकुरुष्व मम प्रियम् ।। १ ।।**

**सुव्युष्टा** सुप्रभाता । 'व्युष्टं दिने प्रभाते च' इति विश्वः ।। १ ।।

**सुवर्णमालाः कम्बूंश्च कुण्डले परिहाटके ।**
**नानापत्तनजे शुभ्रे मणिरत्नं च शोभनम् ।। २ ।।**

**कम्बून्** शङ्खान् । परितो हाटकं ययोस्ते **परिहाटकम्** । **नानापत्तनजे** पृथक् पृथक् वर्तेते तन्मध्ये अपेक्षितं गृहाणेति भावः । **शुभ्रे** स्वस्थे । **मणिरत्नं** मणिश्रेष्ठम् ।।२।।

**आहरन्तु च वस्त्राणि कौशिकान्यजिनानि च ।**
**अस्ति मे शयनं दिव्यं त्वदर्थमुपकल्पितम् ।**
**एहि तत्र मया सार्धं पिबस्व मधु माधवीम् ।। ३ ।।**

**कौशिकानि** कौशेयानि । **अजिनानि** मृदूनि । **मधु** क्षीरम् । **माधवीं** मधोरियं माधवी तां सुराम् । पुष्परसजन्यमद्यविशेषमित्यर्थः । 'मधु क्षौद्रे जले क्षीरे मद्ये पुष्परसे मधुः' इति विश्वः ।। ३ ।।

**द्रौपद्युवाच -**

**अप्रैषीद्राजपुत्री मां सुराहारीं तवान्तिकम् ।**
**पानमाहर मे क्षिप्रं पिपासा मेति चाब्रवीत् ।। ४ ।।**

**पिपासा** मा **मां** बाधत इति शेषः । पिपासा मां प्रबाधत इति पूर्वमुक्तेः ।। ४ ।।

**कीचक उवाच -**

**अन्या भद्रे नयिष्यन्ति राजपुत्र्याः प्रतिश्रुतम् ।**
**इत्येतां दक्षिणे पाणौ सूतपुत्रः परामृशत् ।। ५ ।।**

**राजपुत्र्याः** सुदेष्णायाः **प्रतिश्रुतं** अहमानयिष्यामीति त्वया प्रतिज्ञातं पानं **इति** इत्युक्त्वा **परामृशत्** दधार ।। ५ ।।

**द्रौपद्युवाच -**

**यथैवाहं नाभिचरे कदाचित् पतीन् मदाद्वै मनसाऽपि जातु ।**
**तेनैव सत्येन वशीकृतं त्वां द्रष्टास्मि पापं परिकृष्यमाणम् ।।६।।**

**मदात्** सौन्दर्यादिमदात् । **अपि** नासम्भावितजननवती । अयोनिजेति यावत् । एतादृशी यथा येन **सत्येन कदाचिदपि मनसा नाभिचरे** नातिचरामि **तेनैव सत्येन** मत्पतिभिः **वशीकृतं** ततश्च **परिकृष्यमाणं त्वां अस्मि** अहं गतं द्रष्टा लुट् । अनियमात् सम्भवति । **द्रष्टास्मि** इत्यखण्डं वा । कदाचिद्द्रष्टेत्युत्तरत्र वाऽन्वयः ।। ६ ।।

**वैशम्पायन उवाच -**

**स तामभिप्रेक्ष्य विशालनेत्रां जिघृक्षमाणः परिभर्त्सयन्तीम् ।**
**जग्राह तामुत्तरवस्त्रदेशे स कीचकस्तां सहसाऽऽक्षिपन्तीम् ।।७।।**

**स तां** पाण्डवानामेवाभिप्रेक्ष्ये विशाले नेत्रे यस्याः सा तां **भर्त्सयन्तीम्** अपकारवचनवर्ती तामागताम् । 'तकारश्चागते' इति विश्वः । **उत्तर-वस्त्रदेशे** इत्यत्रोत्तरशब्देन शिरउपरितनवस्त्रान्तभाग उच्यते नतूत्तरीयम् । 'परिधायैकवस्त्रम्'[१] इति पूर्वमस्या एकवस्त्रत्वोक्तेः । केचित् – सुदेष्णादत्तोत्तरीयमिदं भवेदित्याहुः ।। ७ ।।

---

१. वासश्च परिधायैकम् । (९/२)

**प्रगृह्यमाणा तु महाजवेन मुहुर्विनिश्वस्य च राजपुत्री ।**
**तया समाक्षिप्ततनुः स पापः पपात शाखीव निकृत्तमूलः ॥८॥**

**महाजवेन** कीचकेन **प्रगृह्यमाणा मुहुर्विनिश्वस्य** स्थिता या **राजपुत्री** । तया **समाक्षिप्ततनुः** सन् **पपात** । निकृत्तमूल इति सरलः पाठः । [१]**निकृन्तमूल इति पाठे** 'विरहिनिकृन्तन...'[२] इति गीतगोविन्दादि प्रयोगात् क्वचिद् ह्रस्वान्तोऽपि कृतिधातुः । तस्येदं रूपम् ॥ ८ ॥

**सा गृहीता विधुन्वाना भूमावाक्षिप्य कीचकम् ।**
**सभां शरणमागच्छद्यत्र राजा युधिष्ठिरः ॥ ९ ॥**

**विधुन्वाना** वेपमाना । ह्रस्वान्तस्येदं रूपम् । **राजा** राट्शब्दोऽयम् । **राजा** विराटेन सह **युधिष्ठिरः** । **आक्षिप्य** निक्षिप्य ॥ ९ ॥

**तां कीचकः प्रधावन्तीं केशपाशे परामृशत् ।**
**अथैनां पश्यतो राज्ञः पातयित्वा पदाऽवधीत् ॥ १० ॥**

**राज्ञः** विराटस्य **पश्यतः** । तमनादृत्येत्यर्थः ॥ १० ॥

**तस्या योऽसौ तदाऽर्केण राक्षसः सन्नियोजितः ।**
**स कीचकमपोवाह वातवेगेन भारत ॥ ११ ॥**

**तस्याः** रक्षायै **अपोवाह** प्रत्यावर्तयामास ॥ ११ ॥

---

१. 'स्वान्तध्वान्तनिकृन्तने जितमहावैकर्तनांशुव्रजम् ।' इति तत्त्वप्रकाशिकायाम् । अत्र विशेषः तत्त्वप्रकाशिकाभावदीपादौ द्रष्टव्यः । नखनिकृन्तनेति च छान्दोग्योपनिषदि ।

२. निकृन्तन इति पाठे तु कृति च्छेदने इति धान्त्वरस्यरूपं ध्येयम् । तथाहि गीतगोविन्दे । विरहिनिकृन्तनकुन्तमुखाकृतिकेतकदन्तुरिताशे । इति प्रयोगः । एकेन नखनिकृन्तनेनेति श्रुतौ च ।
- इति तत्त्वप्रकाशिकाभावदीपे ।

**स पपात ततो भूमौ रक्षोबलसमाहतः ।**
**विघूर्णमानो निश्चेष्टश्छिन्नमूल इव द्रुमः ॥ १२ ॥**

**विघूर्णमानः** भ्रमन् ॥ १२ ॥

**तां चासीनौ ददृशतुर्भीमसेनयुधिष्ठिरौ ।**
**अमृष्यमाणौ कृष्णायाः कीचकेन पदा वधम् ॥ १३ ॥**

**वधं** ताडनम् ॥ १३ ॥

**तस्य भीमो वधं प्रेप्सुः कीचकस्य दुरात्मनः ।**
**दन्तैर्दन्तांस्तदा रोषान्निष्पिपेष महामनाः ॥ १४ ॥**

**निष्पिपेष** कटकटायितानकरोदित्यर्थः ॥ १४ ॥

**धूमच्छायां ह्यभजतां नेत्रे चोच्छ्रितपक्ष्मणी ।**
**सस्वेदा भ्रुकुटी चोग्रा ललाटे समवर्तत ॥ १५ ॥**

धूमस्य छायां कान्तिं छायाम् । 'छाया सूर्यप्रिया कान्तिः' इत्यमरः । भ्रुकुटी पृषोदरादित्वादीकारः । ललाटसङ्कोचनमित्यर्थः ॥ १५ ॥

**हस्तेन ममृदे चैव ललाटं परवीरहा ।**
**भूयश्च त्वरितः क्रुद्धः सहसोत्थातुमैच्छत ॥ १६ ॥**

**ममृदे** ममर्द । **ऐच्छत**, व्यत्ययेन तङ् ॥ १६ ॥

**अथावमृद्नादङ्गुष्ठमङ्गुष्ठेन युधिष्ठिरः ।**
**प्रबोधनभयाद्राजा भीमं तं प्रत्यषेधयत् ॥ १७ ॥**

**अङ्गुष्ठं** भीमस्य अवमृद्नन् पीडयन् । **प्रबोधनभयात्** स्वरूपप्रकाशभयात् । तं वनस्पतिमित्यन्वयः॥ १७ ॥

**आलोकयसि किं वृक्षं सूद दारुकृतेन वै ।**
**यदि ते दारुभिः कृत्यं बहिर्वृक्षान्निगृह्यताम् ।। १८ ।।**

**दारुकृतेन** दारुनिर्मितेन । **बहिर्वृक्षात्** बाह्यवृक्षात् । **दारु** निगृह्यताम् ।। १८ ।।

**सा सभाद्वारमागत्य रुदती मत्स्यमब्रवीत् ।**
**अवेक्षमाणा सुश्रोणी पतींस्तान् दीनचेतसः ।। १९ ।।**

**पतीन् दीनचेतसः अवेक्षमाणा** अनुसन्दधती ।। १९ ।।

**आकारमभिरक्षन्ती प्रतिज्ञां धर्मसंहिताम् ।**
**दह्यमानेव रौद्रेण चक्षुषा द्रुपदात्मजा ।। २० ।।**

**द्रौपद्युवाच -**

**येषां वैरी न स्वपिति षष्ठेऽपि विषये वसन् ।**
**तेषां मां मानिनीं भार्यां सूतपुत्रः पदाऽवधीत् ।। २१ ।।**

**येषां** मत्पतीनाम् । **वैरी** अपकारी । **षष्ठे विषयेऽपि** 'मनःषष्ठानीन्द्रियाणि'[१] इत्यादेः मनसः षष्ठेन्द्रियत्वाद्विषये स्वप्नरूपे **वसन्** तिष्ठन्नप्ययम् । **न स्वपिति** 'रुदादिभ्यः सार्वधातुके'[२] इति इट् । तद्भयेन सर्वेन्द्रियोपरमरूपसुषुप्त्येव स्थानं प्राप्नोतीत्यर्थः यथोक्तं भागवते – 'नाना मनोरथधिया क्षणभग्ननिद्राः'[३] इति । वस्तुतस्तु षष्ठे यामे 'यामात् परत एवाथ स्वपेद्ध्यायन् जनार्दनम्'[४] इत्यादेः । 'रात्रौ प्रहरपर्यन्तं दिवाकर्माणि कारयेत्' इत्यादेश्च रात्रिप्रथमयामस्य दिवा तुल्यं तया षष्ठे यामे येषां विषये स्वदेशे वसन्नपि भोगादिके सत्यपि न स्वपिति । पञ्चयामीं जाग्रदपि

१. इति गीता । (१५/७)
२. पा.सू. (७/२/७६)
३. भागवते । (३/१०/१०)
४. सदाचारस्मृतौ ।

प्रवासाद्यभावे केवलं यद्भयान्न स्वपितीति भावः । षष्ठे एतत्पञ्चकातिरिक्ते कर्णे वसन् तदाश्रयेण सन्निति यावत् । वैरी दुर्योधनः विषये स्वभोग्ये सत्पापिनैव स्वपितीत्यान्तरिको भावः ।। २१ ।।

**ये दद्युर्न च याचेयुर्ब्रह्मण्याः सत्यवादिनः ।**
**तेषां मां मानिनीं भार्यां सूतपुत्रः पदाऽवधीत् ।। २२ ।।**
**येषां दुन्दुभिनिर्घोषो ज्याघोषः श्रूयतेऽनिशम् ।**
**तेषां मां मानिनीं भार्यां सूतपुत्रः पदाऽवधीत् ।। २३ ।।**

**श्रूयते** अनिशम् । क्रियाप्रबन्धे डट् ।। २३ ।।

**ये वै तेजस्विनो दान्ता बलवन्तोऽभिमानिनः ।**
**तेषां मां मानिनीं भार्यां सूतपुत्रः पदाऽवधीत् ।। २४ ।।**
**सर्वं लोकमिमं हन्युर्धर्मपाशसितास्तु ये ।**
**तेषां मां मानिनीं भार्यां सूतपुत्रः पदाऽवधीत् ।। २५ ।।**

**सर्वं लोकं** जनं **इमं** कीचकं समयश्चेद्धन्युः । स एव कुतो नेत्यत आह– **धर्मपाशसिता इति** । इममिति कैमुतिकन्यायेन वा वक्ति । यद्वा 'अर्व षर्व हिंसायाम्' इति धातुव्याख्यानात् सर्वः हिंसकः । लोक्यत इति लोकः । कर्मणि घञ् । सर्व इति लोकः सर्वलोकस्तं मद्धिंसकत्वेन सर्वसाक्षिसिद्धमिमं कीचकम् । शिष्टं पूर्ववत् । सत्यपाशसिता इत्यनुक्त्वा च धर्मपाशसिता इति 'हे महाराज त्वं तु न हन्ता हन्तारोऽप्येते त्वद्रूपपाशासिताः' इति धर्मराजं कटाक्षीकरोतीति सूच्यते ।।२५।।

**शरणं ये प्रपन्नानां भवन्ति शरणार्थिनाम् ।**
**चरन्ति लोके प्रच्छन्नाः क्व नु तेऽद्य महारथाः ।। २६ ।।**

यद्यपि धर्मपाशसिताः तथापि एतादृशदुर्दशायां एकान्ते वा स हन्तव्य इति प्रोत्साहयन्ती वदति सुदतीत्याह - **शरणमिति** ।। **शरणार्थिनां ये शरणं भवन्ति**

ये च इदानीं **प्रच्छन्नाः** सन्तो **लोके चरन्ति ते महारथाः** प्रपन्नानामस्माकं विषयेऽद्य **क्वे**त्यन्वयः ॥ २६ ॥

**कथं ते सूतपुत्रेण वध्यमानां प्रियां सतीम् ।**
**मर्षयन्ति यथा क्लीबा बलवन्तोऽमितौजसः ॥ २७ ॥**

**यथा क्लीबा** षण्ढास्तथा **कथं मर्षयन्ति** सहन्ते । नासमर्थास्त इत्याह– **बलवन्त** इति ॥ २७ ॥

**क्व नु तेषाममर्षश्च वीर्यमोजश्च वर्तते ।**
**न परीप्सन्ति ये भार्यां वध्यमानां दुरात्मना ॥ २८ ॥**

**ओजः** इन्द्रियावष्टम्भशक्तिः । **अमर्षः** कोपः । **वीर्यं** पराक्रमः । **तेजः** परपराभावकशक्तिः । **न परीप्सन्ति** रक्षकतया न प्राप्नुवन्ति ॥ २८ ॥

**मयाऽत्र शक्यं किं कर्तुं विराटे धर्मदूषणे ।**
**यः पश्यन् मां मर्षयति वध्यमानामनागसाम् ॥ २९ ॥**

**यः अनागसां** निरपराधां **वध्यमानां मां पश्यन्** अपि **मर्षयति** सहते न तच्छिक्षां करोति, तस्मिन् विराटे राज्ञि इति एवं धर्मदूषणे सति **अत्र** एतस्मिन् विषये मया **किं** कर्तुं **शक्यम्** इति योजना ॥ २९ ॥

**न राजन् राजवत् किञ्चित् समाचरसि कीचके ।**
**दस्यूनामिव धर्मस्ते नहि संसदि शोभते ॥ ३० ॥**

**कीचके** विषये **किञ्चिन्न समाचरसि** । शिक्षां न करोषीत्यर्थः । धर्मोऽत्राचारः 'धर्मः पुण्ये यमे न्याये स्वभावाचारयोः क्रतौ' इति विश्वः ॥ ३० ॥

**नाहमेतेन युक्तं वै हन्तुं मत्स्य तवान्तिके ।**
**सभासदोऽत्र पश्यन्तु कीचकस्य व्यतिक्रमम् ॥ ३१ ॥**

हे **मत्स्य तवान्तिके हन्तुं** हिंसामुद्दिश्य **एतेन** कीचकेन तत्कर्तृक इति यावत् । यो योगो मन्नीचताग्राहकमनोवृत्तिविशेषस्तत्कर्मीभूता नेत्यर्थः । तेन समानकर्तृकतालाभः ।। ३१ ।।

**कीचको न च धर्मज्ञो न च मत्स्यः कथञ्चन ।**
**सभासदोऽप्यधर्मज्ञा य इमे पर्युपासते ।। ३२ ।।**

**वैशम्पायन उवाच -**

**एवंविधैर्वचोभिः सा तदा कृष्णा सुलोचना ।**
**उपालभत राजानं मत्स्यानां वरवर्णिनी ।। ३३ ।।**

**उपालभत** निनिन्द ।। ३३ ।।

**विराट उवाच -**

**परोक्षं नाभिजानामि विग्रहं युवयोरहम् ।**
**अर्थतत्त्वमविज्ञाय किन्नु स्यात् कौशलं मम ।। ३४ ।।**

**परोक्षम्** अर्शआद्यजन्तोऽयम् । मदिन्द्रियासन्निकृष्टमित्यर्थः । **अर्थतत्त्वं** प्रमेययाथार्थ्यम् । **अविज्ञाय** शिक्षयितुं **मम किं नु कौशलं स्यात्** इत्यर्थः ।। ३४ ।।

**ततस्तु सभ्या विज्ञाय कृष्णां भूयोऽभ्यपूजयन् ।**
**साधु साध्विति चाप्याहुः कीचकं च व्यगर्हयन् ।। ३५ ।।**

**विज्ञाय** कीचकदुर्नयं । **भूयो** बाहुल्येन । गन्धर्वाः पतयो ममेत्यादिना श्रुतपतिपञ्चका अपि **सभ्याः** प्रायो लोके असम्भावितमिदमिति यस्य तस्येत्यूचुरिति ज्ञेयम् । एतत्कर्मणः कीचकवध एव मुख्यं फलमिति निश्चित्य भयं त्यक्त्वा **व्यगर्हयन्** ।। ३५ ।।

**सभ्या ऊचुः -**

**यस्यैषा चारुसर्वाङ्गी भार्या स्यादायतेक्षणा ।**
**परो लाभस्तु तस्य स्यान्न च शोचेत् कथञ्चन ॥ ३६ ॥**

**लाभः** त्रैवर्गिकस्य ॥ ३६ ॥

**नहीदृशी मनुष्येषु सुलभा वरवर्णिनी ।**
**नारी सर्वानवद्याङ्गी देवीं मन्यामहे वयम् ॥ ३७ ॥**

**वैशम्पायन उवाच -**

**एवं सम्पूजयन्तस्ते कृष्णां प्रेक्ष्य सभासदः ।**
**युधिष्ठिरस्य कोपात् तु ललाटे स्वेद आगमत् ॥ ३८ ॥**

सम्पूजयन्तोऽभवन्निति शेषः । **स्वेदः** घर्मः । 'घर्मो निदाघः स्वेदः स्यात्' इत्यमरः ॥ ३८ ॥

**अथाब्रवीद्राजपुत्रीं कौरव्यो महिषीं प्रियाम् ।**
**गच्छ सैरन्ध्रि मात्र स्थाः सुदेष्णाया निवेशनम् ॥ ३९ ॥**

**अत्र मा स्थाः** न तिष्ठ ॥ ३९ ॥

**भर्तारमनुरुन्द्ध्यन्त्यः क्लिश्यन्ते वीरपत्नयः ।**
**शुश्रूषया क्लिश्यमानाः पतिलोकं जयन्त्युत ॥ ४० ॥**

**अनुरुन्द्ध्यन्त्यः** अनुसृत्य वर्तमानाः । **वीरपत्नयः** इकारान्तोऽप्ययम् । 'देवानां पत्नयः'[1] इति श्रुतेः । **जयन्ति** प्राप्नुवन्ति । धनजित इत्यादिवज्जिः प्राप्त्यर्थः ॥४०॥

**मन्ये न कालं क्रोधस्य पश्यन्ति पतयस्तव ।**
**तेन त्वां नाभिधावन्ति गन्धर्वाः सूर्यवर्चसः ॥ ४१ ॥**

---

१. तैत्तिरीयारण्यके (३/९/२)

**क्रोधस्य कालं** क्रोधकरणयोग्यं न **पश्यन्ति** । अस्मिन् समये कोपो न कार्य इति जानन्तीत्यभिप्रायः । **तेन** निमित्तेन । **नाभिधावन्ति** रक्षार्थमिति शेषः ।।४१।।

**अकालज्ञाऽसि सैरन्ध्रि शैलूषीव विरोदिषि ।**
**विघ्नं करोषि मत्स्यानां दीव्यतां राजसंसदि ।। ४२ ।।**

**शैलूषी** वा शैलूषो नटः, तस्येयं शैलूषी । 'शैलूषो नटबिल्वयोः' इति विश्वः । **मत्स्यानां** विराटसम्बन्धिनाम् । **दीव्यतां** विघ्नं करोषि । देवने **विघ्नं** करोषीति भावः ।। ४२ ।।

**गच्छ सैरन्ध्रि गन्धर्वाः करिष्यन्ति तव प्रियम् ।**
**व्यपनेष्यन्ति दुःखं ते येन ते विप्रियं कृतम् ।। ४३ ।।**

**येन** पुरुषेण । तमप्यपनेष्यन्ति घातयिष्यन्ति । दुःखयतीति दुःखमिति कीचक-परत्वे ते गन्धर्वा इति योज्यम् ।। ४३ ।।

**सैरन्ध्र्युवाच -**

**अतीव तेषां घृणिनामर्थेऽहं धर्मचारिणी ।**
**तस्य तस्यैव ते वध्या येषां ज्येष्ठोऽक्षदेविता ।। ४४ ।।**

घृणादयो एषामस्तीति तथा शिखादिः । **तेषामर्थेऽहं धर्मचारिणी । एषां** पाण्डवानां ज्येष्ठो भवान् **अक्षदेविता** पूर्वमिदानीं च ते पाण्डवाः **तस्य तस्य** यस्य कस्यापीत्यर्थः । वध्या भवन्तीति गूढोऽर्थः । बाह्यस्तु येषां मत्स्यानां ज्येष्ठो राजा **अक्षदेविता** न्यायतदितरविचारं विनाऽत्रैवासक्तः । ते तस्य **तस्यैव वध्याः** किं किं वा भवतु । केऽपि न वक्तार इत्यराजकप्रायमिदं जातमिति ।। ४४ ।।

**वैशम्पायन उवाच -**

**इत्युक्त्वा प्राद्रवत् कृष्णा सुदेष्णाया निवेशनम् ।**
**केशान् मुक्त्वा च सुश्रोणी संरम्भाल्लोहितेक्षणा ।। ४५ ।।**

**केशान् मुक्त्वा** अत्यन्तक्लेशप्रकाशनाय मुखमात्रं मुक्त्वा कोपाटोपात् ततस्ततोऽवकीर्येत्यर्थः । यद्वक्ष्यति – **मेघलेखे**त्यादि, तदत एव श्लिष्टम् । **संरम्भात्** कोपाटोपात् ।। ४५ ।।

**शुशुभे वदनं तस्या रुदितायाश्चिरं तदा ।**
**मेघलेखाविनिर्मुक्तं दिवीव शशिमण्डलम् ।। ४६ ।।**

**रुदितायाः** 'गत्यर्थाकर्मका...'[१] इति कर्तरि क्तः । **दिवि** अन्तरिक्षे ।। ४६ ।।

**सुदेष्णोवाच -**

**कस्त्वाऽवधीद्वरारोहे कस्माद्रोदिषि शोभने ।**
**कस्याद्य न सुखं भद्रे केन ते विप्रियं कृतम् ।। ४७ ।।**

अज्ञाततद्वातकेव पृच्छति– **क इति** ।। हे **वरारोहे** त्वं **कस्माद्रोदिषि** इति प्रथमः प्रश्नः । इदानीमेव मद्गेहाद्गतायाः रोदने निमित्तान्तरासम्भवात् कश्चित् ताडितवानिति ततः पृच्छति– **कस्त्वेति** ।। ४७ ।।

**द्रौपद्युवाच -**

**कीचको माऽवधीत् तत्र सुराहारीं गतां तव ।**
**सभायां पश्यतो राज्ञो यथैव विजने वने ।। ४८ ।।**

**तव** त्वदर्थे । **राज्ञ** इति षष्ठ्यनादरे ।। ४८ ।।

**सुदेष्णोवाच -**

**घातयामि सुकेशान्ते कीचकं यदि मन्यसे ।**
**योऽसौ त्वां कामसन्तप्तो[२] दुर्लभामवमन्यते ।। ४९ ।।**

---

१. गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च । पा.सू. (३/४/७२)

२. कामसम्मत्तो... (गी. पाठः)

**घातयामि** 'हन्त्यर्थाश्च'[१] इतिस्वार्थेणिच्।स्वयमन्येनवा।पूर्वंश्रुतद्रौपदीवाक्येति कामसन्तप्त इत्याह ।। ४९ ।।

**सैरन्ध्र्युवाच -**

**अन्ये तस्य वधिष्यन्ति येषामागः करोति सः ।**
**मन्ये चैवाद्य सुव्यक्तं परलोकं गमिष्यति ।। ५० ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि षोडशोऽध्यायः ।।**

तमित्युक्त्वा तस्येत्युक्त्या च तत्रत्यस्तच्छब्दः कीचकतदनुबन्ध्युभयपरः तदुभयवधकर्मत्वमत्र विवक्षितमिति सूच्यते । **वधिष्यन्ति** । स्वतन्त्रो वधधातुः । **आगो** अपराधम् । 'आगोऽपराधो मन्तुश्च' इत्यमरः ।। ५० ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां षोडशोऽध्यायः ।।**

*****

# १७. सप्तदशोऽध्यायः

**( भीमसेनसमीपे द्रौपद्या गमनम् । )**

**वैशम्पायन उवाच -**

**सा हता सूतपुत्रेण राजपत्नी यशस्विनी ।**
**वधं कृष्णा परीप्सन्ती सेनावाहस्य भामिनी ।। १ ।।**

**सेनावाहस्य** सेनापतेः । **भामिनी** कोपना ।। १ ।।

**जगामावासमेवाथ तदा सा द्रुपदात्मजा ।**
**कृत्वा शौचं यथान्यायं कृष्णा सा तनुमध्यमा ।। २ ।।**

---

१. 'हन्त्यर्थाश्च' (ग) । वार्तिकम् ।

**शौचं** यथान्यायं परकरस्पर्शरोदनादौ यद्विहितं तत्कृत्वेत्यर्थः ।। २ ।।

**गात्राणि वाससी चैव प्रक्षाल्य सलिलेन सा ।**
**चिन्तयामास रुदती तस्य दुःखस्य निर्णयम् ।। ३ ।।**

**दुःखस्य निर्णयम्** । अध्यगमम् ।। ३ ।।

**किं करोमि क्व गच्छामि कथं कार्यं भवेन्मम ।**
**इत्येवं चिन्तयित्वा सा भीमं वै मनसाऽगमत् ।। ४ ।।**

**नान्यः कर्ता ऋते भीमान्ममाद्य मनसः प्रियम् ।**
**तत उत्थाय रात्रौ सा विहाय शयनं स्वकम् ।। ५ ।।**

**कर्ता ऋते** इत्यत्र 'ऋत्यकः'[१] इति प्रकृतिभावः । भीमाद् 'अन्याराद्'[२] इति पञ्चमी ।। ५ ।।

**प्राद्रवन्नाथमिच्छन्ती कृष्णा(ऽ)नाथवती सती ।**
**भवनं भीमसेनस्य क्षिप्रमायतलोचना ।**
**दुःखेन महता युक्ता मानसेन मनस्विनी ।। ६ ।।**

**सती** पतिव्रता **कृष्णा अनाथवती** साऽनाथवतीव । **नाथमिच्छन्ती** ।

'सदृशे वा प्रधाने वा करणे वा तदित्ययम् ।
शब्दः सङ्घटते भेदे विद्यमानेऽपि तत्त्वतः ।।

इति [३]प्रथमतात्पर्योक्तेः । अकारप्रश्लेषेणैवमर्थकरणे सति नाथवती सती नाथमिच्छन्तीति नाथान्तरप्रतिभानरूपविरुद्धमतिकृतशङ्काऽपगतेति ज्ञेयम् ।।६।।

---

१. पा.सू. (६/१/१२८)

२. अन्यारादितरर्ते दिक्शब्दाञ्चूत्तरपदाजाहियुक्ते । - पा.सू. (२/३/२९)

३. श्रीमद्भागवततात्पर्योद्धृतब्रह्मतर्कवचनम् । (१/१४/२१)

सा वै महानसं प्राप्य भीमसेनं शुचिस्मिता ।
सर्वश्वेतेव माहेयी वने जाता त्रिहायणी ॥ ७ ॥

उपातिष्ठत पाञ्चाली वासितेव वरर्षभम् ।
सा लतेव महाशालं फुल्लं गोमतितीरजम् ॥ ८ ॥

**शुचिस्मिते**ति स्वाभाविक्युक्तिः । **वने जाता** ग्रामीणपरिचयशून्या **सर्वश्वेता** सर्वतः परितः सर्वेण हिंसकेन वा शुना दंशकेन । इता युक्ता । **माहेयी** मह्यते पूज्यत इति । मही गौः तस्यापत्यं स्त्री माहेयी 'नद्यादिभ्यो ढक्'[१] इति 'ढक् । टिड्ढाण...'[२] इति ङीप् । **वरर्षभमिव** । तथा **त्रिहायणी** त्रयो हायनमस्या इति । त्रिहायणी दाम । 'हायनान्त....इति'[३] ङीप् । 'त्रिचतुर्भ्याम्...'[४] इतिणत्वम् । वर्षत्रयवतीगौःप्राप्तयौवनेति कामोपद्रवेण वरर्षभं पुङ्गवमिव । वासिताकरिणी वरर्षभं गजश्रेष्ठमिव च । **पाञ्चाली वरर्षभं**भीमम**उपातिष्ठते**तियोजना । 'माहेयीसौरभेयीगौः', 'चतुरुस्राचतुर्हायिणी', 'एवं त्र्यब्दा त्रिहायणी', '**वासिता** स्त्रीकरिण्योश्च' । 'ऋषभो वृषभो वृषः', इति सर्वत्रामराः । यद्वा । 'मही द्यौः पृथिवी चन' इत्येतदृग्भाष्ये 'स्वयं वा भगवाम्' इत्युक्तेर्महीशब्दः सत्यादिशब्दवत् स्त्रीलिङ्गः सन्नेव भगवद्वाची । मह पूजायाम् इत्यस्मात् पचाद्यचि 'षिद्गौरादिभ्यश्च ङीपि मही'[५] इति रूपम् । तस्या अपत्यं स्त्री **माहेयी** गङ्गा **सर्वश्वेता** सर्वतः शुभ्रा **वने** शरवणे **जाता** प्रादुर्भूता **वरर्षभं** समुद्रमिव । **अजाता** अं अजं ब्रह्माणं प्रत्यागता । पूर्वमिति यावत् । अनन्तरं च सर्वश्वेते स्फटिकसप्रभे रुद्रे पतित्वा वने सगरात्मजास्थिक्लेदनजलनिमित्तम् । **वरर्षभं** वरः स्वयं दत्तः सोऽस्यास्तीति वरः अर्श आद्यजन्तः । स चासौ ऋषभः श्रेष्ठो यो भगीरथस्तमिव । [६]पूर्ववत् द्रौपदीपक्षेऽपि सर्वतः

---

१. पा.सू (४/२/९७)

२. टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः । (पा.सू. ४/१/१५)

३. हायनान्तयुवादिभ्योऽण् । पा.सू. (५/१/१३०)

४. 'त्रिचतुर्भ्यां हायनस्य ।' - इति वार्तिकम् ।

५. पा.सू. (४/१/४१)

६. ('सर्वो ह्येष रुद्रः' इति श्रुतेः 'सर्वः शर्वः शिवः' इति नामनिदानात् श्वेतश्चासौ सर्वश्च

श्वेता उभयकुलशुद्धा। माहेयीव महीपुत्री सीतेवेयमपि वने जाताऽग्निकुण्डोपमा। अयोनिजत्वमात्रे दृष्टान्तः । एतादृशी पाञ्चाली । शिष्टं पूर्ववत् । श्वेतः शुद्धः शशी श्वेत इति वा पालितः **उपातिष्ठत** गतम् । महाशालं महास्कन्धशाखावन्तं तरुम्। 'शाला गृहे तरुस्कन्धशाखाकारैकदेशयोः' इति विश्वः । **फुल्लं** विकसितम् । अनेन दार्ष्टान्तिकेऽङ्गकौमल्यं द्योत्यते । **गोमतितीरजम्** । 'सञ्ज्ञाछन्दसोः' इति ह्रस्वः ।। ७-८ ।।

**परिष्वजत पाञ्चाली मध्यमं पाण्डुनन्दनम् ।**
**बाहुभ्यां परिरभ्यैनं प्राबोधयदनिन्दिता ।। ९ ।।**

**परिष्वजत** पर्यष्वजत। **मध्यमं** पार्थेषु। **पाण्डुनन्दनं** तत्पुत्रम्। पाण्डुं नन्दयतीति स तथेति । **मध्यमं** वाय्वात्मकमिति वा । 'योऽयं मध्यमः प्राणः' इति श्रुतेः ऐतरेयभाष्ये। 'मध्यमो वायुरेवैक उत्तमः केशवो हरिः' इति गीतातात्पर्ये षष्ठेऽध्याये। 'दुःखासम्पीडितत्वात् तु मध्यमो वायुरुच्यते[1]' इत्युक्तेः। [2]हनुमद्भीममध्वेषु मध्यमं भीममिति वाऽवेहि । अथवा पाण्डुनन्दनं **बाहुभ्यां परिरभ्य एनं** मध्यमम् । मध्यान्मः। बाह्वन्तरगतं विधायेति शेषः । प्राबोधयदित्यन्वयः ।। ९ ।।

**सिंहं सुप्तं वने दुर्गे मृगराजवधूरिव ।**
**भीमसेनमुपाश्लिष्य हस्तिनीव महागजम् ।। १० ।।**

हे मृगराजेति तद्वधूर्यथा प्रबोधयति तथेति वा । वधूरित्यनिन्दितपदेनान्वेति । इतरोऽर्थः स्फुटः ।। १० ।।

---

सर्वश्वेतः । सर्वा सरवा घोषवती च सा श्वेता च सर्वश्वेता 'सर्वस्सरवः' इति श्रीमदुक्तेः । यतोऽन्येव(यताऽन्येव) हायनानि त्रीणि हायनानि अस्याः सन्तीति त्रिहायणी हय गताविति स्मृतेः त्रिपथगेति यावत् ।) इत्यधिकं पठ्यते क्वचित् ।

१. छान्दोग्योपनिषद्भाष्यम् ।

२. प्रथमो हनूमान्नाम द्वितीयो भीम एव च ।
पूर्णप्रज्ञस्तृतीयस्तु भगवत्कार्यसाधकः ।। - म.भा.ता.निर्णयोद्धृतभविष्यत्पर्ववचनम् ।

**वीणेव मधुरालापा गान्धारं साधु मूर्च्छती ।**
**अभ्यभाषत पाञ्चाली भीमसेनमनिन्दिता ॥ ११ ॥**

**वीणेव मधुरालापा** । कर्णश्राव्यसुवचनवती । **गान्धारं**[१] स्वरविशेषम् । **साधु मूर्च्छती** मूर्छन्ती औत्तरार्धेण व्यञ्जयन्ती । **अभ्यभाषत** ॥ ११ ॥

**उत्तिष्ठोत्तिष्ठ किं शेषे भीमसेन यथा मृतः ।**
**नामृतस्य**[२] **हि पापीयान् भार्यामालभ्य जीवति ॥ १२ ॥**

**यथा मृतः** शेते दीर्घनिद्रां प्राप्नोति, तथा **शेषे किं** कुत इत्यत आह– **नेति** ॥ **अमृतस्य** सतः **पापीयान्** कीचकः । **आलभ्य** स्पृष्ट्वा **जीवति** किम्? ॥ १२ ॥

**तस्मिन् जीवति पापिष्ठे सेनावाहे मम द्विषि ।**
**तत्कर्म कृतवानद्य कथं निद्रां निषेवसे ॥ १३ ॥**

यः **तत्** तादृशं **कृतवान् तस्मिन् मम द्विषि पापिष्ठे सेनावाहे** सेनापतौ **जीवति** सति किं **निद्रां निषेवसे** । यद्वा तस्मिन् मम द्विषि जीवति सति किं **तत्कर्म** सूदकर्म । अथ दिवा कथं कृतवान् । रात्रौ च कथं निद्रां निषेवसे । इत्यन्वयार्थौ ॥ १३ ॥

**वैशम्पायन उवाच -**

**एवमुक्त्वाऽथ तां शालां प्रविवेश मनस्विनी ।**
**यस्यां भीमस्तदा शेते मृगराज इव श्वसन् ॥ १४ ॥**

**एवमुक्त्वेति** श्लोकः प्रक्षिप्त इति बहवः । ग्रन्थकृत्स्वभावोऽयम् उक्तोक्तिरिति तत्परिपाठीपटवः । ‘प्रतिनन्दन्तु निन्दन्तु के वा के वा सुखासुखे । नमः पद्यामुपाश्रित्य पद्यमेतद्विवृण्महे’ । तथाहि । सिंहावलोकनन्यायेन पूर्वमनुक्तमवश्यं

---

१. ‘‘(द्वे द्वे निषादगान्धारौ त्रिश्रुती दैवतर्षभौ ।)
चतुःश्रुतय उद्दिष्टाः षड्जमध्यमपञ्चमाः’’ इति । -सुमध्वविजयभावप्रकाशिकायाम्(१६/५०)

२. अमृतस्य - वायोः । ‘अमृतो वायुरुद्दिष्टः’ इति ईशावास्यभाष्योक्तेः ।

वक्तव्यं प्रवेशोतिकर्त-व्यरूपं किञ्चिद् द्रौपदीकृतं कर्म जनमेजयहार्दं विज्ञाय वदति- **एवमुक्त्वेति** । यस्यां शालायां मृगराजः सिंह इव श्वसन् भीमः शेते । तां शालां प्रविवेश । प्रवेशकाले, 'तत उत्थाय रात्रौ सा विहाय शयनं स्वकम् । ....भवनं भीमसेनस्य'[१] इत्याद्युक्तम् । तत्र किमुपाहृतोपहारागादगादनन्नाद्यद- नेति मानसीं जनमेजयशङ्कामनभ्युपगमेन प्रथमामपाकृत्य द्वितीयामभ्युपगम्य परिहरति– **एवेति** ।। 'एवमुक्त्वा, अथ तां' इति पदानि । आ सम्यक् ईषद्वा थम् अन्नम् । 'अन्नं थम्'[२] इति श्रुतेः यस्य जनस्य स अथस्तस्य भाव अथता । बह्वल्पा- न्नादिभोक्तृतामुक्त्वैवेत्यन्वयः । त्यक्त्वैव किञ्चिदप्यनश्नन्त्येव शालां प्रविवेश तस्य यथापूर्वम् । अथवा परावरा चेति स्मरणादवरेण परस्य योगे क्त्वाप्रत्यये द्रौपदीकर्तृकप्रवेशोत्तरकालिकतत्कर्तृकमेव वचनमिति तदर्थः स्फुरयति । न च देशविशेषनियन्त्रणं ज्ञायत उदाहरणात् तत्रेति कालकृतपरावरत्वपरतया न व्याख्यानं रुरुचे कस्मैचिदिति वाच्यम् । कालस्यापि सुग्रहत्वात् । उक्तं मञ्जूषायाम् - 'क्वचित् साक्षात् क्रियाया एव परावरयोगः । यथाऽवेर्मांसमिति विग- ह्याऽऽविकशब्दादुत्पत्तिरित्यत्र । तत्र विग्रहो विभिन्नत्वेन ज्ञानं तदुत्तरकालिकी । आविकशब्दावधिक्त्वाप्रत्ययकर्तृकोत्पत्तिरित्यर्थः । परत्वादिकमत्र लोकव्यव- हाराद्वैवक्षिकमित्यन्यत्र विस्तर' इति । तथा सूदत्वावस्थायाम् । अथवा आ समन्तात् थमन्नम् । उपलक्षणया यवाग्वादिकं च यस्यां सा । अथ सा च सा पाकस्थली ताम् । उक्त्वैवेति वा ।। १४ ।।

**तस्या रूपेण सा शाला भीमस्य च महात्मनः ।**
**सम्मूर्च्छितेव कौरव्य प्रजज्वाल च तेजसा ।। १५ ।।**

---

१. महाभारते (५/१७/५,६)

२. कठोपनिषदाद्भाष्योद्धृतमहाकूर्मवचनम् । (२/२)

**तस्याः** द्रौपद्याः । **भीमस्य च** तद्रूपेणेत्यन्वेति । **सम्मूर्च्छिता** सोच्छ्रया । तारकादीतजन्तः । 'मूर्च्छिताः पथिकाङ्गनाः' इत्यादेः प्रजज्वालेवाभूदित्यर्थः । यथाक्रममिवान्वयः । उच्छ्रयस्याविद्यमानतापत्यापत्तेः ।। १५ ।।

**स सम्प्रहाय शयनं राजपुत्र्या प्रबोधितः ।**
**उपातिष्ठत मेघाभः पर्यङ्के सोपसङ्ग्रहे ।। १६ ।।**

**सम्प्रहाय** त्यक्त्वा । **सोपसङ्ग्रहे** कशिप्वादिपरिच्छदसहिते **उपातिष्ठत** आगतः ।।१६।।

**अथाब्रवीद्राजपुत्रीं कौरव्यो महिषीं प्रियाम् ।**
**केनास्यर्थेन सम्प्राप्ता त्वरितेव ममान्तिकम् ।। १७ ।।**

**त्वरितेव** केनार्थेन प्राप्तासीत्यन्वयः ।। १७ ।।

**न ते प्रकृतिमान् वर्णः कृशा पाण्डुश्च लक्ष्यसे ।**
**आचक्ष्व परिशेषेण सर्वं विद्यामहं यथा ।। १८ ।।**

**प्रकृतिमान्** स्वाभाविकः । **पाण्डुः** शुभ्रः । **च लक्ष्यसे** । मम यथाऽहं **विद्यां** जानीयां तथा **परिशेषेण** निःशेषतः ।। १८ ।।

**सुखं वा यदि वा दुःखं द्वेष्यं वा यदि वाऽप्रियम् ।**
**यथावत् सर्वमाचक्ष्व श्रुत्वा ज्ञास्यामि यत्क्षमम् ।।१९।।**

**यदि सुखम्** इति विकल्पस्तु तदन्तस्तापसर्वस्वबहिष्करणार्थः । अन्यथा भीमासमयज्ञताप्राप्तेरिव न ते प्रकृतिमानित्याद्यसामञ्जस्याप्तेः । **द्वेष्यं** तत्काले जीवशिक्षार्हम् । **अप्रियं** मरणार्हं । यद्वा विपर्यासः । यत्क्षमं सः । **यत्क्षमं** युक्तम् । 'क्षमं युक्तम्' इति विश्वः । मयि तव न गोपनीयं वर्तत इत्याह ।। १९ ।।

**अहमेव हि ते कृष्णे विश्वास्यः सर्वकर्मसु ।**
**अहमापत्सु चापि त्वां मोक्षयामि पुनःपुनः ॥ २० ॥**

हे **कृष्णे ते अहमेव विश्वास्यः** । **सर्वकर्मसु** सर्वव्यापारेषु । आन्तरङ्गिको भावस्तु हि हिंसककर्मसु सम्भावितेषु सत्सु हि ते । तदर्थं अहमेव विश्वास्य इति वेति । **मोक्षयामि** सुधातुः ॥ २० ॥

**शीघ्रमुक्त्वा यथाकामं यत् ते कार्यं विवक्षितम् ।**
**गच्छ वै शयनायैव पुरा नान्योऽवबुद्ध्यते ॥ २१ ॥**

**॥ इति मन्महाभारते विराटपर्वणि कीचकवधपर्वणि सप्तदशोऽध्यायः ॥**

**अन्यो** न **अवबुद्ध्यते पुरा** । अवबुद्ध्येत । तन्मध्य एव शयनाय **गच्छ** ॥२१॥

**॥ इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां सप्तदशोऽध्यायः ॥**

*****

# १८. अष्टादशोऽध्यायः

**( द्रौपद्या भीमसन्निधौ कीचककर्तृकस्वीयापमानादिनिवेदनम् )**

**द्रौपद्युवाच -**

**अशोच्यत्वं कुतस्तस्या यस्या भर्ता युधिष्ठिरः ।**
**जानन् सर्वाणि दुःखानि किं मां त्वं परिपृच्छसि ॥ १ ॥**

रोषं विशेषयितुं पूर्वानुभूतक्लेशेन सहाधुनातनमपि कथयति– **अशोच्यत्वमिति** ॥ शरदः कृतार्थतेत्यादि 'सामान्ये नपुंसकम्'[1] इत्यशोच्यत्वस्य भावोऽशोच्यत्वमिति विग्रहः । मूलं सर्वस्य स इत्येवमुक्तिः ॥ १ ॥

**यन्मां दासीप्रवादेन प्रातिकामी तदाऽनयत् ।**
**सभां परिषदो मध्ये तन्मां दहति भारत ॥ २ ॥**

---

१. वार्तिकम् ।

**प्रातिकामी** दुर्योधनदूतः । सभायां द्यूतस्य गृहे या परिषत् सदस् **तन्मध्ये** । 'सभासामाजिके द्यूते गोष्ठी मन्दिरयोरपि' इति विश्वः । **तत्** आनयनम् ।। २ ।।

**पार्थिवस्य सुता नाम का नु जीवति मादृशी ।**
**अनुभूयेदृशं दुःखमन्यत्र द्रौपदीं प्रभो ।। ३ ।।**

**मादृशी** मया समा मादृशी 'आ सर्वनाम्नः'[1] इत्यात्वम् । कञन्तत्वात् 'टिड्ढाणञ्'[2] इत्यादिना ङीप् । **द्रौपदीम्** । **अन्यत्र** विना सैन्धवो जयद्रथः यः परामर्शः । द्वितीयः प्रातिकामिपरामर्शतः दुर्योधनमूलः प्रातिकामिदुःशासनकृत इत्येक इति भवत्ययं द्वितीयः । **का** कामिन्यन्या ।। ३ ।।

**वनवासगतायाश्च सैन्धवेन दुरात्मना ।**
**परामर्शो द्वितीयो वै सोढुमुत्सहते नु का ।। ४ ।।**
**मत्स्यराज्ञः समक्षं तु तस्य धूर्तस्य पश्यतः ।**
**कीचकेन पदाऽऽमृष्टा का नु जीवति मादृशी ।। ५ ।।**

हे मत्स्येति भीमस्य सम्बोधनम् । मां स्यति हन्तीति कृत्वा मत्स्यः । तस्य सम्बुद्धिः हे मत्स्य । मत्स्यराज्ञः मत्स्यराजस्य समासान्तविधेरनित्यत्वात् 'जानन्ति पूर्वराजानः'[3] इत्यादिवदिदं ज्ञेयम् । **समक्षं** । 'प्रतिपरसमनुभ्योऽक्ष्णः'[4] इति टच् । सम्मुखम् । **धूर्तस्य** वियात्तस्य । **तस्य** धर्मराजस्यापीति वा । **पश्यतः** सतः **आमृष्टा** ताडिता **का नु जीवति** जीवेत् । जीवति चेत् सा **मादृशी** एव भवेत् ।। ४, ५ ।।

---

१. आ सर्वनाम्नः । - पा.सू. (६/३/९१)

२. टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः । (पा.सू. ४/१/१५)

३. गीतातात्पर्यनिर्णये । (४/१)

४. प्रतिपरसमनुभ्योऽक्ष्णः । इति वार्तिकम् ।

**एवं बहुविधैः क्लेशैः क्लिश्यमानां च भारत ।**
**न मां जानासि कौन्तेय किं फलं जीवितेन मे ॥ ६ ॥**

**क्लेशैः** तत्साधनैः । **क्लिश्यमानां मां न जानासि** । अतो **मे जीवितेन** जीवनेन **किं फलम्**? विचारापचाराद्वरं मम मरणमिति भावः ॥ ६ ॥

**[१]श्यालो राज्ञो विराटस्य कीचको नाम भारत ।**
**सेनानीः पुरुषव्याघ्र श्यालः परमदुर्मतिः ॥ ७ ॥**

**श्यालः** सुदेष्णाभ्राता । 'श्यालाः स्युर्भ्रातरः पत्न्याः' इत्यमरः । **नाम** नाम्ना प्रसिद्धम् इति वा ॥ ७ ॥

**समां सैरन्ध्रिवेषेण वसन्तीं राजवेश्मनि ।**
**नित्यमेवाह दुष्टात्मा भार्या मम भवेति वै ॥ ८ ॥**

**सैरन्ध्रिवेषेण** 'आङ्यापोः' इति ह्रस्वः । वेषेण तेन **वसन्तीं** मां हे सैरन्ध्रीति वा अन्वयः । **समां** [२]एकसंवत्सरमिति वा । न च 'स्त्रियां बहुष्वप्सरसः' इत्यमरवत् 'समाः' इति बहुवचनामरः कथमिति वाच्यम् । स च प्रायिकत्वाभिप्रायक इति न विरोधः । 'समां समां विज्ञायते'[३] इति सूत्रात् समायां समायामिति भाष्यात् । 'स

---

१. योऽयं राज्ञो । (इति गी. पाठः)

२. एकसंवत्सरं द्रौपदी सैरन्ध्रीवेषेण विराटनगरे आसीत् । कीचकस्तां संवत्सरे द्विमासोने ददर्श । तावत् पर्यन्तं सः दिग्विजयार्थं गतः । इति महाभारततात्पर्यनिर्णयादवसीयते -
वसमानेषु पार्थेषु मत्स्यस्य नगरे सदा ।
महारथेषु छन्नेषु महसादश समाययौ ॥....
तस्मिन् वर्षे गतप्राये कीचकस्तु महाबलः ।
सेनापतिर्विराटस्य ददर्श द्रुपदात्मजाम् ॥ - महाभारते (४/१४/१,४)
संवत्सरे द्विमासोने विजित्य दिश आगतः ।
कीचको मात्स्यनृपतेः श्यालो बलवतांवरः ॥ - इति महाभारततात्पर्यनिर्णये (२३/१९)

३. पा.सू. (५/२/१२)

मा योषिति शारदे' । 'समात्वं वत्सरे स्त्रियाम्' इति रत्नकोशविश्वादेश्चैकवचनान्तोऽपि । संमाति सह वर्तते वास्यामिति वा । मा माने । 'आतश्चोपसर्गे'[1] इत्यङ् । समां समामिति निर्देशान्मलोपे परम् । समग्रं संवत्सरमिति काले द्वितीया ॥ ८ ॥

**तेनोपमन्त्र्यमाणाया वधार्हेण सपत्नहन् ।**
**कालेनेव फलं पक्वं हृदयं मे विदीर्यते ॥ ९ ॥**

**सपत्नहन्** । **कालेन** । **पक्वं** फलम् । यथा **विदीर्यते** । तद्वद्धृदयं विदीर्यत इत्यन्वयः ॥ ९ ॥

**भ्रातरं च विगर्हस्व ज्येष्ठं दुर्द्यूतदेविनम् ।**
**यस्यास्मि कर्मणा प्राप्ता दुःखमेतदनन्तकम् ॥ १० ॥**

**अनन्तकम्** अपर्यवसिति । **अस्मि** । अहं गतम् ॥ १० ॥

**को हि राज्यं परित्यज्य सर्वस्वं चात्मना सह ।**
**प्रव्रज्यायैव दीव्येत विना दुर्द्यूतदेविनम् ॥ ११ ॥**

**आत्मना** स्वेन । **प्रव्रज्य** प्रव्रजन्तं । तस्मै । [2]'व्रज्या पर्यटने' इति विश्वः । 'व्रजयजोर्भावे क्यप्'[3] । नपुंसकत्वमनियतेर्लिङ्गानाम् । एवेति वा **दुर्द्यूतदेविनम्** । अशोभनक्रीडारतम् । 'दुरशोभनदुःखयोः' इत्यभिधानम् ॥ ११ ॥

**यदि निष्कसहस्रेण यच्चान्यत् सारवद्धनम् ।**
**सायम्प्रातरदेविष्यदपि संवत्सरान् बहून् ॥ १२ ॥**

---

१. पा.सू. (३/१/१३६)

२. 'व्रज्याटाट्या पर्यटनम्' इत्यमरः ।, यात्रा व्रज्याभिनिर्वाणम् इति च अमरः ।

३. व्रजयजोर्भावे क्यप् । पा.सू (३/३/९८)

निष्काणां सुवर्णानाम् । निष्काकर्षचतुष्टयात्मकपलानि तेषां सहस्रम् । तेन सहितम्। 'निष्कमस्त्री साष्टहेमशते दीनाकर्षयोः । वक्षोऽलङ्करणे हेममात्रे हेमफलेऽपि च' इति मेदिन्या योग्योऽर्थो ज्ञेयः । अमरोऽप्येवम्[१] । **सारवत्** श्रेष्ठम् । **सायम्प्रातः** अहर्निशम् । यदि तर्हि **बहून् संवत्सरान्** । **अदेविष्यत्** अक्रीडिष्यदेव । आशात इति भावः ।। १२ ।।

**रुग्मं हिरण्यं वासांसि यानं युग्यमजाविकम् ।**
**अश्वाश्वतरसङ्घांश्च न जातु क्षयमावहेत् ।। १३ ।।**

धनमेतद्रूपमित्याह–**रुग्ममिति**।।**हिरण्यं** रजतम्।तस्माद् 'रजतहिरण्यमदक्षिण्यम-श्रुजम्' इति श्रुतेः।**यानम्** - आन्दोलिका।**युग्यं** चपत्रे' इति निपातनात्।युगं वहतीति **युग्यं** वाहनम्। यद्यपि 'सर्वं स्याद्वाहनं यानं युग्यम्' इत्यमरः, तथापि सहप्रयोगस्तु द्रौपदीक्रोधपारवश्येन ज्ञेयः। **अजाविकम्** ऊर्णादिकम् **अश्वाः** वडवाः **आवहेत्** । क्षेयं क्षेतुं योग्यं क्षयिष्णु । जात्वपि न सम्पादयेत् ।। १३ ।।

**सोऽयं द्यूतप्रवादेन श्रिया प्रत्यवरोपितः ।**
**तूष्णीमास्ते यथा मूढः स्वानि कर्माणि चिन्तयन् ।।१४।।**

**प्रत्यवरोपितः** हापितः ।। १४ ।।

**दशनागसहस्राणि हयानां हेममालिनाम् ।**
**यं यान्तमनुयान्तीह सोऽयं द्यूतेन जीवति ।। १५ ।।**

**हेममालिनाम्** । **हयानाम्** । नागसहस्राणीत्यतो विश्लिष्टं सहस्रा-णीत्येतद्धयानामित्यनेनाप्यन्वेति । बहूनि सहस्राणीत्यर्थः । **इह** विराटनगरे **जीवति** ।। १५ ।।

---

१. साष्टे शते सुवर्णानां हेम्न्युरोभूषणे पले ।
दीनारेऽपि च निष्कोऽस्त्री.................... । - इत्यमरः ।

**रथाः शतसहस्राणि नृपाणामतितेजसाम् ।**
**उपासन्त महाराजमिन्द्रप्रस्थे युधिष्ठिरम् ॥ १६ ॥**

**नृपाणां** च शतसहस्राणीत्यन्वयः । **उपासन्त** । गणकार्यानित्यतायाः शपो न लुक् । असङ्गतीत्यस्य वा रूपम् । सेवनमकुर्वन्नित्यर्थस्तु धात्वनेकार्थतायाः विस्तृतं चैतत् आस ते विनियामकमिति[1] **तलवकारभाष्यश्रीसत्यप्रियगुरुराज-विवृतौ** ॥ १६ ॥

**शतं दासीसहस्राणां यस्य नित्यं महानसे ।**
**पात्रीहस्तं दिवारात्रमतिथीन् भोजयत्युत ॥ १७ ॥**

**पात्रीहस्तम्** । पातेः ष्ट्रन् उणादिः ङीप् । षित्वे 'षिद्गौरादिभ्यश्च'[2] इति पात्र्या हस्ते यस्य तत् । **दिवारात्रम्** । **अतिथीन् भोजयति** । दिवासहिता च सा रात्रिश्चेति तत्पुरुषसमासे चात् 'सङ्ख्याव्ययादेः'[3] इत्यच् । दिवारात्रस्ताम् । 'अत्यन्तसंयोगे'[4] द्वितीया ॥ १७ ॥

**एष निष्कसहस्राणि प्रदाय ददतां वरः ।**
**द्यूतजेन ह्यनर्थेन महत्तापमुपाश्रितः ॥ १८ ॥**

**प्रदाय** विराजमानः । **महता अनर्थेन** इदानीम् **उपाश्रितः** ॥ १८ ॥

---

१. अत्र भाष्ये 'आसते विनियामकम्' इत्यत्र आस ते विनियामकमिति च्छेदः । न त्वासत इत्येकं पदम् । आस्तेः लुग्विकरणस्थत्वात् । अथ कथमास त इति बोभूयामास किन्तु अस्तेर्भूरित्यार्धधातुके भूभावोऽनुशासनात् । आसत इत्येतच्चेयते समीपस्थमित्यर्थनिर्देशाय उपनिषद्गत आस त इति पदद्वयानुवादपरत्वं आसतेर्गत्याद्यर्थस्य लिटि रूपमेतत् । भावनार्थत्वं तु अनेकार्थत्वात् धातूनामुपपद्यते । - इति तलवकारभाष्यश्रीसत्यप्रियगुरुराजविवृतौ

२. पा.सू. (४/१/४१)

३. सङ्ख्याव्ययादेर्ङीप् । पा.सू. (४/१/२६)

४. अत्यन्तसंयोगे च । पा.सू. (२/१/२९)

**एनं हि स्वरसम्पन्ना बहवः सूतमागधाः ।**
**सायम्प्रातरुपातिष्ठन् सुमृष्टमणिकुण्डलाः ।। १९ ।।**

**उपातिष्ठन्** सिषेविरे ।। १९ ।।

**सहस्रमृषयो यस्य नित्यमासन् सभासदः ।**
**तं यः श्रुतोपसम्पन्नाः सर्वकामैरुपस्थिताः ।। २० ।।**

'विंशत्याद्याः सदैकत्वे' इत्यमरादृषयः सहस्रमिति सम्भवति । श्रुतं श्रवणम् । यान् युधिष्ठिरो बिभर्ति, ते च ।। २० ।।

**अष्टाशीतिसहस्राणि स्नातका गृहमेधिनः ।**
**त्रिंशद्दासीक एकैको यान् बिभर्ति युधिष्ठिरः ।। २१ ।।**

**यान् युधिष्ठिरो बिभर्ति** । ते च **अष्टाशीतिसहस्राणि** पूर्वं **स्नातकाः** सन्तो **गृहमेधिनः** । अनेन विवाहोऽप्यनेन कारित इति ध्वन्यते । तेषां मध्य 'एकं बहुव्रीहिवत्'[1] इत्युक्तेः । पूर्वैकपदात् सुबभावः । त्रिंशत्सङ्ख्या दास्यो यस्य स तथा । 'न कपि'[2] इति निषेधात् न 'केऽण'[3] इति ह्रस्वः ।। २१ ।।

**अप्रतिग्राहिणां चैव यतीनामूर्ध्वरेतसाम् ।**
**दश चापि सहस्राणि सोऽयमास्ते नरेश्वरः ।। २२ ।।**

**अप्रतिग्राहिणाम्** । प्रतिग्रहीतृभिन्नानाम् । **स नरेश्वरः अयमास्ते** एतद्दशापन्न आस्ते ।। २२ ।।

**आनृशंस्यमनुक्रोशं संविभागस्तथैव च ।**
**यस्मिन्नेतानि सर्वाणि सोऽयमास्ते नरेश्वरः ।। २३ ।।**

---

१. पा.सू. (८/१/९)

२. पा.सू. (७/४/१४)

३. पा.सू. (७/४/१३)

**आनृशंस्यं** न परहिंसालालसत्वम् । **अनुक्रोशो** दया । 'कृपा दयाऽनुकम्पा स्यादनुक्रोशः'[१] इत्यमरः । **संविभागः** यथायोग्यं द्रव्यादिविभागः ।। २३ ।।

**अन्धान् वृद्धांस्तथाऽनाथान् बालान् राष्ट्रे सुदुर्गतान् ।**
**बिभर्ति विविधान् राजा धृतिमान् सत्यविक्रमः ।**
**संविभागमना नित्यमानृशंस्याद् युधिष्ठिरः ।। २४ ।।**

**सुदुर्गतान्** अतिदरिद्रान् । 'दुर्गतिः दारिद्र्ये नरके वाऽपि' इति हैमः । **आनृशंस्यात्** परपीडनमतिहाय ।। २४ ।।

**स एष निरयं प्राप्तो मत्स्यस्य परिचारकः ।**
**सभायां देविता राज्ञः कङ्को ब्रूते युधिष्ठिरः ।। २५ ।।**

**निरयं** दुःखं । यद्वा अयं मत्स्यस्य **परिचारक** इति निरयं प्राप्तः सः **प्राप्त** इव । तच्छब्द इवार्थो गतम् । **राज्ञः सभायां देविता** यः कोऽपि **युधिष्ठिरं कङ्कं ब्रूते** ।। २५ ।।

**इन्द्रप्रस्थे निवसतः समये यस्य पार्थिवाः ।**
**आसन् बलिभृतः सर्वे सोऽद्यान्यैर्भृतिमिच्छति ।। २६ ।।**

**समये** सङ्केते इच्छायामिति यावत् । तत्तत्काले वा । **बलिभृतः** करकलितकराः । 'करोपहारयोः पुंसि बलिः' इत्यमरः । **भृतिं** वेतनादिकम् ।। २६ ।।

**पार्थिवाः पृथिवीपाला यस्यासन् वशवर्तिनः ।**
**स वशे(ऽ)विवशो राजा परेषामद्य वर्तते ।। २७ ।।**

**पार्थिवाः यस्य वशवर्तिनः** । स्वयं त्वविवशः स तादृशः ।। २७ ।।

---

१. हृदयस्य द्रवीभावोऽनुकम्पेति कथ्यते ।
उपकारं कर्तुमिच्छां कृपेत्याहुर्मनीषिणः ।। - इति भागवततात्पर्ये (४/७/४८)।

**प्रताप्य पृथिवीं सर्वां [१]रश्मिवानिव तेजसा ।**
**सोऽयं राज्ञो विराटस्य सभास्तारो युधिष्ठिरः ॥ २८ ॥**

**रश्मिवान्** । 'मादुपधायाः'[२] इति वत्वम् ॥ २८ ॥

**यमुपासन्त राजानः सभायामृषिभिः सह ।**
**तमुपासीनमद्यान्यं पश्य पाण्डव पाण्डवम् ॥ २९ ॥**

**अन्यं** भिन्नम् । आन्यं स्वचेष्ट्यमित्यप्यर्थः । 'ऋहलोर्ण्यत्'[३] इति यत् ॥ २९ ॥

**सदस्यं समुपासीनं परस्य प्रियवादिनम् ।**
**दृष्ट्वा युधिष्ठिरं कोपो वर्धते मामसंशयम् ॥ ३० ॥**

**सदस्यम्** सभास्तारम् । **प्रियवादिनम्** । 'तत् तस्य कैङ्कर्यमुपागतान् नो विग्लापयत्यङ्ग यदुग्रसेनम् । तिष्ठन्निषण्णं परमेष्ठिधिष्ण्ये न्यबोधयद्देव विधारयेति'[४] इतिवत् । **दृष्ट्वा** स्थितायाः **मां** मम । युधिष्ठिरं दृष्ट्वा मां च दृष्ट्वा कोपो वर्धते इति वाऽन्वयः ॥३०॥

**अतदर्हं महाप्राज्ञं जीवितार्थेऽभिसंस्थितम् ।**
**दृष्ट्वा कस्य न दुःखं स्याद्धर्मात्मानं युधिष्ठिरम् ॥ ३१ ॥**

**अभिसंस्थितम्** अवज्ञया स्थितम् । अभिप्रेयस इति काठकखण्डार्थे[५] अभिरवज्ञान इत्युक्तेः **कस्य** इति सामान्योक्तिः ॥ ३१ ॥

---

१. 'रश्मिमानिव' इति गी.पाठः ।

२. मादुपधायाश्च मतोर्वोऽयवादिभ्यः । पा.सू. (८/२/९)

३. पा.सू. (३/१/१२४)

४. भागवते (३/२/२२)

५. अभि = निपातानामनेकार्थत्वादवज्ञायेत्यर्थः

- इति श्रीराघवेन्द्रतीर्थकृतकाठकोपनिषत्खण्डार्थे (१/२/२)

**उपास्ते स्म सभायां यं कृत्स्ना वीर वसुन्धरा ।**
**तमुपासीनमप्यन्यं पश्य भारत भारतम् ॥ ३२ ॥**

हे **वीर वसुन्धरा** तत्स्थो जनः । मां प्रत्येव कुतो वदसीत्यत आह– **भारतभारेति** ॥ भारतानां धर्मादीनां भारो यस्मिन् स तत्सम्बुद्धिः । 'भीमसेन त्वयि भारः समाहितः'[1] इत्यादेः । तं पश्येत्यन्वयः ॥ ३२ ॥

**एवं बहुविधैर्दुःखैः पीड्यमानामनाथवत् ।**
**शोकसागरमध्यस्थां किं मां भीम न पश्यसि ॥ ३३ ॥**

**॥ इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि अष्टादशोऽध्यायः ॥**

**अनाथवत्** । 'सामान्ये नपुंसकम्'[2] इत्युपपत्तिः । यद्वा 'तेन तुल्यं क्रिया चेद्वतिः'[3] इति वति अनाथेन तुल्यानाथवत् ॥ ३३ ॥

**॥ इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां अष्टादशोऽध्यायः ॥**

*****

# १९. एकोनविंशोऽध्यायः

**( भीमसेनस्य सम्मुखे द्रौपद्या विलापः )**

**द्रौपद्युवाच -**

**इदं तु मे महद्दुःखं यत्प्रवक्ष्यामि भारत ।**
**न मेऽभ्यसूया कर्तव्या दुःखादेतद्ब्रवीम्यहम् ॥ १ ॥**

---

१. महाभारते । B. O. R. I. पाठे (उद्योग. ७५/१८)

२. वार्तिकम् ।

३. पा.सू. (५/१/११५)

महत् इति भिन्नं पदम् । **दुःखं** दुःखकरम् । **मे** चतुर्थी । असूया भूयो भयः किं प्रलपसीति ।। १ ।।

**सूदकर्मणि हीने त्वमसमे भरतर्षभ ।**
**ब्रुवन् बल्लवजातीयः कस्य शोकं न वर्धयेः ।। २ ।।**

**असमे** कर्तुमयोग्ये । **कस्य** गतम् ।। २ ।।

**सूपकारं विराटस्य बल्लवं त्वं विदुर्जनाः ।**
**प्रेष्यत्वं समनुप्राप्तं ततो दुःखतरं नु किम् ।। ३ ।।**

**प्रेष्यत्वं** दासत्वं **समनुप्राप्तं बल्लवं त्वां विदुः** ।। ३ ।।

**यदा महानसे सिद्धे विराटमुपतिष्ठसि ।**
**ब्रुवाणो बल्लवः सूदस्तदा सीदति मे मनः ।। ४ ।।**

**महानसे** तत्रत्यपदार्थे **सिद्धे** निष्पन्ने । हे महाराज सूदो **बल्लवो**ऽहं विज्ञापयामि पाकः सिद्ध इति **ब्रुवाणः** सन् **यदा उपतिष्ठसि** ।। ४ ।।

**यदा प्रहृष्टः सम्राड् त्वां संयोधयति कुञ्जरैः ।**
**हसन्त्यन्तःपुरे नार्यो मम तूद्विजते मनः ।। ५ ।।**

**शार्दूलैर्महिषैः सिंहैरागारे योद्ध्यसे यदा ।**
**कैकेय्याः प्रेक्ष्यमाणायास्तदा मे कश्मलो भवेत् ।। ६ ।।**

**आगारे** मन्दिरे । 'भवनागारमन्दिरम्' इत्यमरः । अगार इति **पाठे**ऽप्ययमेवार्थः । 'विद्यादगारमागारम्' इति द्विरूपकोशः । स **कश्मलः** कश्मलम् । 'मूर्च्छा तु कश्मलं मोहः' इत्यमरः ।। ६ ।।

**तत उत्थाय कैकेयी सर्वास्ताः प्रत्यभाषत ।**
**प्रेष्याः समुत्थिताश्चापि कैकेयीं ताः स्त्रियोऽवदन् ।।७।।**

**स्त्रियश्च** परस्परम् **अवदन्** ।। ७ ।।

**प्रेक्ष्य मामनवद्याङ्गीं कश्मलोपहतामिव ।**
**स्नेहात् संवासजाद्धर्मात् सूदमेषा शुचिस्मिता ।। ८ ।।**

**कश्मलोपहतामिव** मूर्च्छितामिव **मां प्रेक्ष्य** इति ब्रुवाणेत्युत्तरेणान्वयः । **संवासजात्** स्नेहात् । **धर्मात्** साधर्म्यात् । उक्तं च-

भीमसेनसधर्मार्थं शूद्रा सैरन्ध्रिकाऽभवत् ।
द्रौपदी भर्तृसाधर्म्यं स्त्रीणां धर्मो यतः सदा' ।। इति[1] । ।। ८ ।।

**योद्ध्यमानं महावीर्यमियं समनुशोचति ।**
**कल्याणरूपा सैरन्ध्री बल्लवश्चापि सुन्दरः ।। ९ ।।**

**एषा** कल्याणरूपा सैरन्ध्री । इयमिति पदे यं सूदं महावीर्यैरित्याश्चर्यं 'यथा तथा विस्मये' इत्युक्तेः । **योद्ध्यमानमनुशोचति** । स **बल्लवश्चापि सुन्दरः** । अतो नेयं एषेत्यनयोरेकत-रातिरेकः ।। ९ ।।

**स्त्रीणां वृत्तं तु दुर्ज्ञेयं युक्तरूपौ च मे मतौ ।**
**सैरन्ध्री प्रियसंवासान्नित्यं करुणवादिनी ।। १० ।।**

'नास्मि लभ्या विराटेन न चान्येन कदाचन' इति पूर्वमुक्त्वाऽपि स्त्रीस्वभावस्य दुर्ज्ञेयत्वं स्मरन्त्याह– **स्त्रीणामिति** ।। **वृत्तं** चरित्रम् । 'वृत्तं चरित्रछन्दसोरपि' इति विश्वः । युक्तं शोभनम् । युक्तशब्दः शोभनपर्यायः । यथाह भिक्षुः- 'बालक्रीडा वासुदेवस्य युक्ता' इति कर्मनिर्णयटीकाद्युक्तेः । युक्तरूपा च युक्तरूपश्च तौ । **प्रियसंवासात्** । प्रियेण स्वेष्टेन संवासः । प्रियसंवासस्तस्मात् । **करुणवादिनी** दीनवचना । सूदविषये ।। १० ।।

---

१. इति महाभारततात्पर्यनिर्णये । (२३/१०)

अस्मिन् राजकुले चेमौ तुल्यकालनिवासिनौ ।
इति ब्रुवाणा वाक्यानि सा मां नित्यमतर्जयत् ।। ११ ।।

**राजकुले** गृहे । **नित्यं ब्रुवाणा** उच्चारयन्ती ।। ११ ।।

क्रुद्ध्यन्ती मां च सम्प्रेक्ष्य समशङ्कत मां त्वयि ।
तस्यां तथा ब्रुवन्त्यां तु दुःखं मां महदाविशत् ।। १२ ।।

त्वन्निन्दया **क्रुद्ध्यन्ती** क्रोधसूचकभ्रुकुट्यादिमती । **महत् दुःखम्** ।। १२ ।।

त्वय्येवं निरयं प्राप्ते भीमे भीमपराक्रमे ।
शोके यौधिष्ठिरे मग्ना नाहं जीवितुमुत्सहे ।। १३ ।।

**निरयं** दुःखम् । **यौधिष्ठिरे** तन्निमित्ते ।। १३ ।।

यः स देवान् मनुष्यांश्च सर्वांश्चैकरथोऽजयत् ।
सोऽयं राज्ञो विराटस्य कन्यानां नर्तको युवा ।। १४ ।।

योऽतर्पयदमेयात्मा खाण्डवे जातवेदसम् ।
सोऽन्तःपुरगतः पार्थः कूपेऽग्निरिव संवृतः ।। १५ ।।

**कूपे** निरुदके । **संवृत** आच्छादितः ।। १५ ।।

यस्माद्भयममित्राणां सदैव पुरुषर्षभात् ।
स लोकपरिभूतेन वेषेणास्ते धनञ्जयः ।। १६ ।।

**परिभूतेन** निन्दितेन ।। १६ ।।

यस्य व्याक्षेपकठिनौ[१] बाहू परिघसन्निभौ ।
स शङ्खपरिपूर्णाभ्यां शोचन्नास्ते धनञ्जयः ।। १७ ।।

१. ज्याक्षेपकठिनौ । (इति गी. पाठः)

**व्याक्षेपो** व्याकर्षः तेन **कठिनौ** सकिणत्वात् । सव्यसाचित्वादुभयग्रहणम् । शङ्खा वलयाः गतं । तेन करणेन **शोचन्नास्ते** ।। १७ ।।

**यस्य ज्यातलनिर्घोषात् समकम्पन्त शत्रवः ।**
**स्त्रियो गीतस्वनं तस्य मुदिताः पर्युपासते ।। १८ ।।**

**पर्युपासते** सेवन्ते । शृण्वन्तीति यावत् ।। १८ ।।

**किरीटं सूर्यसङ्काशं यस्य मूर्धन्यशोभत ।**
**वेणीविकृतकेशान्तः सोऽयमद्य धनञ्जयः ।। १९ ।।**

वेणीत्वेन विकृतः केशान्तो यस्य सः ।। १९ ।।

**तं वेणीकृतकेशान्तं भीमधन्वानमर्जुनम् ।**
**कन्यापरिवृतं दृष्ट्वा भीम सीदति मे मनः ।। २० ।।**

**यस्मिन्नस्त्राणि दिव्यानि समस्तानि महात्मनि ।**
**आधारः सर्वविद्यानां सा धारयति कुण्डले ।। २१ ।।**

**कुण्डले** ताटङ्के ।। २० ।।

**यस्य राजसहस्राणि तेजसाऽप्रतिमानि वै ।**
**समरे नाभ्यवर्तन्त वेलामिव महार्णवः ।। २२ ।।**

**अप्रतिमानि** असदृशानि । यस्य यम् ।। २२ ।।

**सोऽयं राज्ञो विराटस्य कन्यानां नर्तको युवा ।**
**आस्ते वेषप्रतिच्छन्नः कन्यानां परिचारकः ।। २३ ।।**

[१]**कन्यानां** दीप्तिमतीनाम् । **परिचारकः** सेवकः ।। २३ ।।

**यस्य स्म रथघोषेण समकम्पन्त मेदिनी ।**
**सपर्वतवना भीम सहस्थावरजङ्गमा ।। २४ ।।**

**यस्मिन् जाते महाभागे कुन्त्याः शोको व्यनश्यत ।**
**स शोकयति मामद्य भीमसेन तवानुजः ।। २५ ।।**

**शोकयति** नामधातुः ।। २५ ।।

**भूषितं तमलङ्कारैः कुण्डलैः परिहाटकैः ।**
**कम्बुपाणिनमायान्तं दृष्ट्वा सीदति मे मनः ।। २६ ।।**

**पाणी** अस्य स्त इति पाणी । व्रीह्यादीनि । **कम्बूनां** पाणी **कम्बुपाणी** । कम्बुपदार्थस्य पाणिनि पदार्थैकदेशेऽन्वयः ।। २६ ।।

**यस्य नास्ति समो वीर्ये कश्चिदुर्व्यां धनुर्धरः ।**
**सोऽद्य कन्यापरिवृतो गायन्नास्ते धनञ्जयः ।। २७ ।।**

**यस्य वीर्ये समो नास्ति** यस्य समः कश्चिद्धनुर्धरः । धरतीति धरः धनुषो धरः धनुर्धरः नास्ति ।। २७ ।।

**धर्मे शौर्ये च सत्ये च जीवलोकस्य सम्मतम् ।**
**स्त्रीवेषविकृतं पार्थं दृष्ट्वा सीदति मे मनः ।। २८ ।।**

**जीवलोकस्य** जीवज्जनस्य । अथवा जीवेन बृहस्पतिना सहितो लोकः तस्य । 'जीवः प्राणिनि गीष्पतौ' इति विश्वः ।। २८ ।।

**यदा ह्येनं परिवृतं कन्याभिर्देवरूपिणम् ।**
**प्रभिन्नमिव मातङ्गं परिकीर्णं करेणुभिः ।। २९ ।।**

---

१. कमु कान्तौ ।; कनी दीप्तौ ।; कनी दीप्तिकान्तिगतिषु । इति धातुपाठात् ।; कनति कन्यते वा ।

**मातङ्गं** मतङ्गात् पर्वताद्भवतीति तथा तम् । **प्रभिन्नं** मत्तगजम् ।। २९ ।।

**मत्स्यमर्थपतिं पार्थं विराटं समुपस्थितम् ।**
**पश्यामि सूर्यमध्यस्थं दिशो नश्यन्ति मे सदा ।। ३० ।।**

**अर्थपतिं** धनस्वामिनं **मत्स्यं विराटं समुपस्थितं पार्थम्** । यदा **पश्यामि** तदा **दिशो नश्यन्ति** अदर्शनं गच्छन्ति । दिङ्मोहो भवतीति यावत् ।। ३० ।।

**नूनमार्या न जानाति कृच्छ्रप्राप्तं धनञ्जयम् ।**
**अजातशत्रुं कौरव्यं मग्नं दुर्द्यूतदेविनम् ।। ३१ ।।**

**आर्या** श्वश्रूः । **दुर्द्यूतदेविनम्** इदानीम् ।। ३१ ।।

**तथा दृष्ट्वा यवीयांसं सहदेवं गवां पतिम् ।**
**गोषु गोवेषमायान्तं पाण्डुभूताऽस्मि भारत ।। ३२ ।।**

'कृशा पाण्डुश्च दृश्यसे' (१७/१८) इत्येतदुत्तरयति – **तथेति** ।। **गोवेषं** गवां वेषोऽलक्तकादिनाऽलङ्करणं येन स तथा तम् ।। ३२ ।।

**सहदेवस्य वृत्तानि चिन्तयन्ती पुनःपुनः ।**
**न निद्रामधिगच्छामि भीमसेन कुतो रतिम् ।। ३३ ।।**

**वृत्तानि** चरितानि । **रतिं** सुखम् ।। ३३ ।।

**न विन्दामि महाबाहो सहदेवस्य दुष्कृतम् ।**
**यस्मिन्नेवंविधं दुःखं प्राप्नुयात् सत्यविक्रमः ।। ३४ ।।**

**दुष्कृतं** दुर्व्यापारम् । **न विन्दामि** न जानामि । **यस्मिन्** दुष्कृतनिमित्तभूते सति ।। ३४ ।।

**दूयामि भरतश्रेष्ठ दृष्ट्वा ते भ्रातरं प्रियम् ।**
**गोषु गोवृषसङ्काशं मत्स्येनाभिनिवेशितम् ।। ३५ ।।**

गोवृषो महोक्षाः । तत्संकाशं **दृष्ट्वा दूयामि** दूये उपतप्यामि । **अभिनिवेशितं** अधिकृतम् ।। ३५ ।।

**संरब्धं रक्तनेपथ्यं गोपालानां पुरोगमम् ।**
**विराटमभिनन्दन्तमथ मे भवति ज्वरः ।। ३६ ।।**

**रक्तनेपथ्यं** रक्तगैरिकाद्यलङ्कारोपेतम् । 'आकल्पवेषौ नेपथ्यम्' इत्यमरः । **अभिनन्दन्तं** नन्दयन्तं **विराटम्** । **अभि** अभिमुखेन नन्दन्तं वा ।। ३६ ।।

**सहदेवं हि मे वीरं नित्यमार्या प्रशंसति ।**
**महाभिजनसम्पन्नः शीलवान् वृत्तवानिति ।। ३७ ।।**

**वीरं** पतिम् ।। ३७ ।।

**ह्रीनिषेवो मधुरवाक् धार्मिकश्च प्रियश्च मे ।**
**स तेऽरण्येषु वोढव्यो याज्ञसेनि क्षपास्वपि ।। ३८ ।।**

अकार्यकरणे **ह्रीनिषेवो** लज्जावान् । **वोढव्यः** भर्तव्यः ।। ३८ ।।

**सुकुमारश्च शूरश्च राजानं चाप्यनुव्रतः ।**
**ज्येष्ठापचायिनं वीरं स्वयं पाञ्चालि भोजयेः ।। ३९ ।।**

**ज्येष्ठापचायिनम्** आर्यपूजासक्तम् । **भोजयेः** भोजनं कारय ।। ३९ ।।

**इत्युवाच हि मां कुन्ती रुदती पुत्रगृद्धिनी ।**
**प्रव्रजन्तं महारण्यं तं परिष्वज्य तिष्ठती ।। ४० ।।**

**पुत्रगृद्धिनी** पुत्रवत्सला । **तिष्ठती** तिष्ठन्ती ।। ४० ।।

**तं दृष्ट्वा व्यापृतं गोष्ठं वत्सचर्मक्षपाशयम् ।**
**सहदेवं युधां श्रेष्ठं किन्नु जीवामि पाण्डव ।। ४१ ।।**

वत्सस्य चर्मणि क्षपायां शेते इति तथा । 'अधिकरणे शेतेः'[१] इति अच्प्रत्ययः । मार्दवादिगुणेन वा स्थलविस्तृत्यभावेनाकुञ्चनेन शयनार्थं वा वत्सचर्म-ग्रहणम् ।। ४१ ।।

**यस्त्रिभिर्नित्यसम्पन्नो रूपेणास्त्रेण मेधया ।**
**सोऽश्वबन्धो विराटस्य पश्य कालस्य पर्ययम् ।। ४२ ।।**

**त्रिभिर्मेधया** श्रेष्ठेन रूपेणेति त्रिभिः ।। ४२ ।।

**अभ्यकीर्यन्त वृन्दानि दामग्रन्थिमुदीक्ष्य तम् ।**
**विनयन्तं जवेनाश्वान् महाराजस्य पश्यतः ।। ४३ ।।**

**अभ्यकीर्यन्त वृन्दानि** । अवलोकयितृजनसमूहाः । **दामग्रन्थिं** तन्नामकं नकुलम् । **जवेन विनयन्तं** विशेषेण नयन्तम् । प्रवणयन्तमिति यावत् ।। ४३ ।।

**अपश्यमेवं श्रीमन्तं मत्स्यं भ्राजिष्णुमुत्तमम् ।**
**विराटमुपतिष्ठन्तं दर्शयन्तं च वाजिनः ।। ४४ ।।**

**किन्नु मां मन्यसे पार्थ सुखिनीति परन्तप ।**
**एवं दुःखशताविष्टा युधिष्ठिरनिमित्ततः ।। ४५ ।।**

सुखं वा यदि वा दुःखमित्येतदुत्तरयति – **किमिति** ।। ४५ ।।

**अतः प्रतिविशिष्टानि दुःखान्यन्यानि भारत ।**
**वर्तते मयि कौन्तेय वक्ष्यामि शृणु तान्यपि ।। ४६ ।।**

**अतः** दुःखात् **प्रतिविशिष्टानि** अधिकानि ।। ४६ ।।

---

१. अधिकरणे शेतेः । पा.सू. (३/२/१५)

**युष्मासु ध्रियमाणेषु दुःखानि विविधान्युत ।**
**शोषयन्ति शरीरं मे किन्नु दुःखमतः परम् ॥ ४७ ॥**

**॥ इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि एकोनविंशोऽध्यायः ॥**

**ध्रियमाणेषु** जीवत्सु ॥ ४७ ॥

**॥ इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां एकोनविंशोऽध्यायः ॥**

*****

# २०. विंशोऽध्यायः

**( द्रौपद्या भीमसेनं प्रति स्वकीयदुःखनिवेदनम् । )**

**द्रौपद्युवाच -**

**अहं सैरन्ध्रिवेषेण चरन्ती राजवेश्मनि ।**
**शौचदाऽस्मि सुदेष्णाया अक्षधूर्तस्य कारणात् ॥ १ ॥**

**शौचदा** पादक्षालनाद्यर्थं जलादिदात्री । **अक्षधूर्तस्य** युधिष्ठिरस्य ॥ १ ॥

**विक्रियां पश्य मे तीव्रां राजपुत्र्याः परन्तप ।**
**आत्मकालमुदीक्षन्ती सर्वं दुःखं किलान्तवत् ॥ २ ॥**

**विक्रियां** विकारम् । **राजपुत्र्याः** । राज्ञः दुहिता राजपुत्री । 'सूतोऽग्रभोजराजमेरुकुलेभ्यो दुहितुः पुत्रड्वा'[1] इति वार्तिकात् पुत्रडादेश इति केचित् । तन्न, केवलं पुत्रीति निर्वाहार्थमङ्गीकार्येण शार्ङ्गरवादिगणपाठेनैव राजपुत्रीत्यादिरूपसिद्धेर्नेदं वार्तिकमर्थवदिति मनोरमाद्युक्तेः । **सर्वं दुःखं अन्तवद्** इति **आत्मकालं** स्वभाग्योदयकालम् । **उदीक्षन्ती** उदीक्षमाणा ॥ २ ॥

---

१. वार्तिकम् ।

**अनित्यौ किल मर्त्यानामर्थसिद्धिर्जयाजयौ ।**
**इति कृत्वा प्रतीक्षामि भर्तृणामुदयं पुनः ॥ ३ ॥**

**अर्थसिद्धिः** प्रयोजननिष्पत्तिः । **जयाजयौ** अपि **अनित्यौ** । **प्रतीक्षामि** प्रतीक्षे । **उदयं** भाग्योदयम् ॥ ३ ॥

**चक्रवत् परिवर्तन्ते ह्यर्थाश्च व्यसनानि च ।**
**इति कृत्वा प्रतीक्षामि भर्तृणामुदयं पुनः ॥ ४ ॥**

**चक्रवत् परिवर्तन्ते** ॥ ४ ॥

**य एव हेतुर्भवति पुरुषस्य जयावहः ।**
**पराजयाय हेतुश्च स इति प्रतिपालये ।**
**किं मानं प्रतिजानीषे भीमसेन मृतामिव ॥ ५ ॥**

**पुरुषस्य** दुर्योधनादेः । **स** एवेश्वरः । **प्रतिपालये** कालं निरीक्षे ॥ ५ ॥

**दत्वा याचन्ति पुरुषा हत्वा वध्यन्ति चापरे ।**
**पातयित्वा च पात्यन्तं परैरिति च मे श्रुतम् ॥ ६ ॥**

स कालः कीदृश इत्यतस्तन्महिमानमाह– **दत्वेति** ॥ **दत्वा** स्वसम्पत्काले । **याचन्ति** तदपगमेऽन्यान् । **हत्वा** वैरिणः **वध्यन्ति** वध्यन्ते स्वयम् । **श्रुतमित्यनेन** न स्वमनीषोत्थवचनमिदमिति सूचयति ॥ ६ ॥

**न दैवस्यातिभारोऽस्ति न चैवास्यातिवर्तनम् ।**
**इति चाप्यागमं भूयो दैवस्य प्रतिपालये ॥ ७ ॥**

**अतिभारः** दुःसाध्यम् । **अतिवर्तनम्** उल्लङ्घनम् । **आगमं** आगतिम् । **प्रतिपालये** प्रतीक्षे ॥ ७ ॥

**स्थितं पूर्वं जलं यत्र पुनस्तत्रैव गच्छति ।**
**इति पर्यायमिच्छन्ती प्रतीक्षे उदयं पुनः ॥ ८ ॥**

**यत्र** तटाकादौ **पूर्वं जलं स्थितं** रश्मिद्वारा सूर्येण गृहीतमपि पुनर्वर्षाकाले **तत्रैव गच्छति । पर्यायं** वैपरीत्यम् ॥ ८ ॥

**दैवेन किल यस्यार्थः सुनीतोऽपि विपद्यते ।**
**दैवस्य चागमो यत्नस्तेन कार्यो विजानता ॥ ९ ॥**

**सुनीतोऽपि** प्रायोपपन्नोऽपि **विपद्यते** नष्टो भवति । **यत्नः** देवब्राह्मणाराधनादि-रूपः ॥ ९ ॥

**यत् तु मे वचनस्यास्य कथितस्य प्रयोजनम् ।**
**पृच्छ मां दुःखितां तत्त्वं पृष्टा चात्र ब्रवीमि ते ॥ १० ॥**

**अस्य वचनस्य** त्वत्पुरतो निगदितस्य **यत्** प्रयोजनम् । तत् **मां पृष्टा** चाहं **तत्त्वं** यथार्थं **ब्रवीमि** ॥ १० ॥

**महिषी पाण्डुपुत्राणां दुहिता द्रुपदस्य च ।**
**इमामवस्थां सम्प्राप्ता मदन्या का जिजीविषेत् ॥ ११ ॥**

एतादृश्यप्यहं दृषद्धृदयत्वाज्जीवामि । **मदन्या का जिजीविषेत्** जीवितुमिच्छां वा कुर्यात् ॥ ११ ॥

**पाण्डवेयांश्च सम्प्राप्तो मम क्लेशो ह्यरिन्दम ।**
**कुरून् परिभवेत् सर्वान् पाञ्चालानपि भारत ॥ १२ ॥**

**मम क्लेशो** युष्मान् **पाण्डवेयान्** पाण्डोरियं पाण्डवी कुन्ती तस्या अपत्यानि पाण्डवेयाः तान् । **पाञ्चालांश्च यदि सम्प्राप्तो भवेत्,** मत्क्लेशः यदि

युष्मत्पाञ्चालहृदयलग्ना भवेदिति यावत्, तर्हि **सर्वान् कुरून् परिभवेत्** तिरस्कुर्यात् ।। १२ ।।

**भ्रातृभिः श्वशुरैः पुत्रैर्बहुभिः परिवारिता ।**
**एवं समुदिता नारी का त्वन्या दुःखिता भवेत् ।। १३ ।।**

एवं **समुदिता** अभ्युदयवती ।। १३ ।।

**नूनं हि बालया धातुर्मया वै विप्रियं कृतम् ।**
**यस्य प्रसादाद्दुर्नीतं प्राप्ताऽस्मि भरतर्षभ ।। १४ ।।**

**बालया** अज्ञानिन्या । 'यस्य धातुः प्रसादाद्' इति मृदूक्तिः । कोपादिति यावत् । यद्वा मत्कृतप्रियफलवितरणालम्बुद्धेः । उक्तं च भागवततात्पर्ये[1] – **'अतोषोऽनलम्बुद्धिः । ... अप्रसादोऽपि स एव । कः प्रसन्नो भवेद्दिव्यां कथां शृण्वन् हरेः पराम् ।** इति च' इति । **दुर्नीतं** दुःखस्थं दुरः 'षत्वणत्वयोः प्रतिषेधो वक्तव्यः'[2] इति वार्तिके 'दुरोऽ- नुपसर्गत्वादुपसर्गादसमासः'[3] इति न णत्वम् । यद्वा प्रसादात् मद्रूपविषयात् प्राप्तः । उक्तं च गीताभाष्ये – 'प्रसादो नाम स्वतः प्रायो विषयागतिः'[4] इति । अत्र प्रगतः सादः प्रादिसमासः ।। १४ ।।

**वर्णावकाशमपि मे पश्य पाण्डव यादृशम् ।**
**तादृशो मे न तन्नासीद्दुःखे परमके तदा ।। १५ ।।**

**वर्णावकाशं** कान्तिसङ्कोचम् । **परमके** दुःखे सभां प्रति दुःशासनेनानयनसमयेति ।। १५ ।।

---

१. १/४/२५,२६
२. वार्तिकम् ।
३. दुन्योरनुपसर्गे । - पा.सू. (३/१/१४२)
४. गीताभाष्ये । (२/६५)

त्वमेव भीम जानीषे यन्मे पार्थ सुखं पुरा ।
साऽहं दासीत्वमापन्ना न शान्तिमवशा लभे ॥ १६ ॥

**पुरा** इन्द्रप्रस्थावासकाले ॥ १६ ॥

नादैविकमिदं मन्ये यत्र पार्थो धनञ्जयः ।
भीमधन्वा महाबाहुरास्ते च्छन्न इवानलः ॥ १७ ॥

अशक्या वेदितुं पार्थ प्राणिनां वै गतिर्नरैः ।
विनिपातमिदं मन्ये युष्माकं ह्यविचिन्तितम् ॥ १८ ॥

**गतिः** अवस्था । **इदमविचिन्तितं** मदनुभूतं सर्वं **विनिपातं** दैवादिव्यसनरूपं **मन्ये** । 'विनिपाते निपाते स्याद्दैवादिव्यसनेऽपि च' इति विश्वः ॥ १८ ॥

यस्या मम [१]मुखप्रेक्ष्या यूयमिन्द्रसमाः सदा ।
सा प्रेक्षे मुखमन्यासामवराणां वरा सती ॥ १९ ॥

मुखं प्रेक्ष्यं यैस्ते **मुखप्रेक्ष्याः** ॥ १९ ॥

पश्य पाण्डव मेऽवस्थां यथा नार्हामि वै तथा ।
युष्मासु ध्रियमाणेषु पश्य कालस्य पर्ययम् ॥ २० ॥

यस्य सागरपर्यन्ता पृथिवी वशवर्तिनी ।
आसीत् साऽद्य सुदेष्णाया भीताऽहं वशवर्तिनी ॥ २१ ॥

**सुदेष्णायाः** पञ्चमी ॥ २१ ॥

यस्याः पुरःसरा आसन् पृष्ठतश्चानुजीविनः[२] ।
साऽहमद्य सुदेष्णायाः पुरः पश्चाच्च गामिनी ॥ २२ ॥

१. मुखप्रेक्षा (इति गी. पाठ)

२. पृष्ठतश्चारुगामिनः । (इति गी. पाठः)

**पुरः पश्चाच्च** कदाचित्कदाचित् ।। २२ ।।

**इदं तु दुःखं कौन्तेय ममासह्यं निबोधय ।**
**या न जातु स्वयं पिंषे गात्रोद्वर्तनमात्मतः ।**
**अन्यत्र कुन्त्या भद्रं ते सा पिनष्म्यद्य चन्दनम् ।। २३ ।।**

उद्वर्तनं अङ्गनिर्मलीकरणसाधनसुगन्धद्रव्यं **न पिंषे** न पिनष्मि । उद्वर्तनोत्सादने द्वे समे इत्यर्थः । **कुन्त्या अन्यत्र** कुन्तीव्यतिरिक्तस्थले ।। २३ ।।

**पश्य कौन्तेय पाणी मे नैवंभूतौ पुरा मम ।**
**इत्यस्मै दर्शयामास किणवन्तौ करावुभौ ।। २४ ।।**

नैवम्भूतां । 'किणः स्वमांसग्रन्थिः' इति मेदिनी ।। २४ ।।

**बिभेमि कुन्त्या या नाहं युष्माकं वा कदाचन ।**
**साऽद्याग्रतो विराटस्य भीता तिष्ठामि किङ्करी ।। २५ ।।**

**युष्माकमग्रतः** ।। २५ ।।

**किन्नु वक्ष्यति सम्राण्मां वर्णकः सुकृतो न वा ।**
**नान्यपिष्टं हि मत्स्यस्य चन्दनं किल रोचते ।। २६ ।।**

**वर्णकः** चन्दनं **सुकृतो वा नवा** सम्राट् किन्नु वक्ष्यति वेति भीता । **तिष्ठामि** । 'वर्णकश्चारणे स्त्री तु चन्दने च विलेपने' इति मेदिनी । 'वर्णकं स्याद्विलेपनम्' इत्यमरः ।। २६ ।।

**वैशम्पायन उवाच -**

**सा कीर्तयन्ती दुःखानि भीमसेनस्य भामिनी ।**
**रुरोद शनकैः कृष्णा भीमसेनमुदीक्षती ।। २७ ।।**

**शनकैः** प्राकट्यभिया । **उदीक्षती** उदीक्षन्ती उदीक्षमाणा ।। २७ ।।

**स बाष्पकलया वाचा निःश्वसन्ती पुनःपुनः ।**
**हृदयं भीमसेनस्य घट्टयन्तीदमब्रवीत् ।। २८ ।।**

**घट्टयन्ती** चालयन्ती । घटयन्तीति **पाठे – भीमसेनस्य हृदयं** मनः घटयन्ती । स्वानुकूलतया कुर्वन्ती ।। २८ ।।

**द्रौपद्युवाच -**

**नाल्पं कृतं मया भीम देवानां किल्बिषं पुरा ।**
**अभाग्या यत्र जीवामि कर्तव्ये सति पाण्डव ।। २९ ।।**

**देवानां किल्बिषं** द्रोहरूपं पापम् । 'पापं किल्बिषकल्मषम्' इत्यमरः । **कर्तव्ये** मर्तव्ये मरणयोग्ये । **यत्र** काले **जीवामि** तस्मात् **नाल्पं कृतम्** ।। २९ ।।

**वैशम्पायन उवाच -**

**ततस्तस्याः करौ सूक्ष्मौ किणवन्तौ वृकोदरः ।**
**मुखमानीय वै पत्न्या रुरोद परवीरहा ।। ३० ।।**

**सूक्ष्मौ** कोमलौ । **मुखमानीय** स्वमुखप्रमुखे निधाय **रुरोद** । एतादृश्यां दुर्दशायां लोकैरित्थं कर्तव्यमिति विडम्बनमिदमिति ज्ञेयम् । **परवीरहा** । गतम् ।। ३० ।।

**तौ गृहीत्वा च कौन्तेयो बाष्पमुत्सृज्य वीर्यवान् ।**
**ततः परमदुःखार्त इदं वचनमब्रवीत् ।। ३१ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि विंशोऽध्यायः ।।**

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां विंशोऽध्यायः ।।**

*****

# २१. एकविंशोऽध्यायः

( भीमद्रौपदीसंवादः )

**भीमसेन उवाच -**

**धिगस्तु मे बाहुबलं गाण्डीवं फाल्गुनस्य च ।**
**यत् ते रक्तौ पुरा भूत्वा पाणी कृतकिणाविमौ ।। १ ।।**

**बाहुबलं धिगस्तु** । 'बलस्य निन्द्यता' इत्यर्थः । **गाण्डीवं** धिगस्तु । **यत्** यस्मात् **ते पाणी कृतकिणौ** धिगिति पूर्वेणान्वयः ।। १ ।।

**सभायां किं विराटस्य करोमि कदनं महत् ।**
**तच्च मेऽकारणं भाति कौन्तेयोऽयं प्रतीक्षते ।। २ ।।**

हे द्रौपदि अहमिदानीमेव **विराटस्य सभायां कदनं करोमि किं** किं करोमि, तच्च कदनं **अकारणं** क्रियत इति । कारणं कर्मणि ल्युट् मुखनासिकावचनः । 'राजभोजनाः शालयः' इतिवत् । अकार्यमित्यर्थः । कुतः यद्यस्मात् **कौन्तेयो** युधिष्ठिरः । **प्रतीक्षते** निवारणार्थं मामेव पश्यतीत्यर्थः ।। २ ।।

**अथवा कीचकस्याहं पोथयामि पदा शिरः ।**
**ऐश्वर्यमदमत्तस्य क्रीडन्निव महाद्विषः ।। ३ ।।**

**पोथयामि** चूर्णयामि । **महाद्विषः शिरः** पर्वतशिखरमिव । 'शिरः प्रधाने सेनाग्रे शिखरे मस्तकेऽपि च' इति विश्वः ।। ३ ।।

**अपश्यं त्वां यदा कृष्णे कीचकेन पदा हताम् ।**
**तदैवाहं चिकीर्षामि मत्स्यानां कदनं महत् ।। ४ ।।**

**चिकीर्षामि** कर्तुमिच्छावानभवम् ।। ४ ।।

**तत्र मां धर्मराजस्तु कटाक्षेण न्यवारयत् ।**
**तदहं तस्य विज्ञाय स्थित एवास्मि भामिनि ॥ ५ ॥**

**यच्च राष्ट्रात् प्रच्यवनं कुरूणामधिपश्च यः ।**
**सुयोधनस्य कर्णस्य शकुनेः सौबलस्य च ॥ ६ ॥**

**राष्ट्रात्** इन्द्रप्रस्थसाम्राज्यात् । यत् **प्रच्यवनम्** । **कुरूणां यः अधिपः** तस्य **सुयोधनस्य कर्णस्य शकुनेः** ॥ ६ ॥

**दुःशासनस्य पापस्य [१]मयेदं नाहृतं शिरः ।**
**तन्मे दहति गात्राणि हृदि शल्यमिवार्पितम् ।**
**मा धर्मं जहि सुश्रोणि क्रोधं जहि महामते ॥ ७ ॥**

दुःशासनस्य च **मया शिरो** नापहृतमिति यत् । **तच्च हृद्यर्पितं शल्यं** शङ्कुरिव दहति । 'वा पुंसि शल्यं शङ्कुर्ना' इत्यमरः । **धर्मं** प्रतिज्ञापालनरूपम् । **मा जहि** । न त्यज **मयां इदं** तदिच्छाम् । इं तदिच्छाम् द्यति खण्डयतीति इदः तम् । लिङ्गं सर्वनामेति अन्तरङ्गत्वात् नपुंसकता वा ॥ ७ ॥

**इमं तु समुपालम्भं त्वत्तो राजा युधिष्ठिरः ।**
**शृणुयाद्वाऽपि कल्याणि कृत्स्नं जह्यात् स जीवितम् ॥८॥**

**कृत्स्नंसमुपालम्भंत्वयि**महाराजेजीवतिकिंममोचितेयंदर्शेत्यादिगुणवर्णनपूर्वक-मगुणवर्णनम् । **शृणुयाद्वाऽपि** । यदि शृणुयादित्यर्थः । तर्हि **जीवितं जह्यात्** ॥ ८ ॥

**धनञ्जयो वा सुश्रोणि यमौ वा तनुमध्यमे ।**
**लोकान्तरगतेष्वेषु नाहं शक्ष्यामि जीवितुम् ॥ ९ ॥**

---

१. यन्मया (इति गी. पाठः)

पुरा सुकन्या भार्या च भार्गवं च्यवनं वने ।
वल्मीकभूतं शाम्यन्तमन्वपद्यत भामिनी ॥ १० ॥

**सुकन्या**[१] तन्नाम्नी शर्यातिपुत्री । **भार्या** भार्या सती **शाम्यन्तं** मरणोन्मुखवद्धि-द्यमानम् । **अन्वपद्यत** अनुससार ॥ १० ॥

[२]नालायनी[३] चेन्द्रसेना रूपेण यदि ते श्रुता ।
पतिमन्वचरत् वृद्धं पुरा वर्षसहस्रिणम् ॥ ११ ॥

**यदि ते श्रुता** भवेत् । तर्हि नैवं वदेः ॥ ११ ॥

दुहिता जनकस्यापि वैदेही यदि ते श्रुता ।
पतिमन्वचरत् सीता महारण्यनिवासिनम् ॥ १२ ॥

रक्षसा निग्रहं प्राप्य रामस्य महिषी प्रिया ।
क्लिश्यमानाऽपि सुश्रोणी राममेवान्वपद्यत ॥ १३ ॥

**निग्रहं** निरोधम् ॥ १३ ॥

लोपामुद्रा तथा भीरु वयोरूपसमन्विता ।
अगस्तिमन्वगाद्धित्वा कामान् सर्वानमानुषान् ॥ १४ ॥

द्युमत्सेनसुतं वीरं सत्यवन्तमनिन्दिता ।
सावित्र्यनुचचारैका यमलोकं मनस्विनी ॥ १५ ॥

**यमलोकं** यमेन लोक्यते इति तथा तेन नीयमानमिति यावत् ॥ १५ ॥

---

१. सुकन्याकथा श्रीमद्भागवतादवगन्तव्या (९/४) ।

२. नारायणीति इति गी. पाठः प्रामादिकः

३. नालायनीकथा श्रीमन्महाभारते व्यक्ता । नालायनीरूपं द्रौपद्याः पूर्वरूपम् । तदपि पार्वत्यादि चतुर्देवीतनुः इति महाभारततात्पर्यनिर्णयात् ज्ञायते ।

**यथैताः कीर्तिता नार्यो रूपवत्यः पतिव्रताः ।**
**तथा त्वमपि कल्याणि सर्वैः समुदिता गुणैः ॥ १६ ॥**

**समुदिता** उत्कृष्टा ॥ १६ ॥

**मा दीर्घं क्षम कालं त्वं मासमर्धं च सम्मितम् ।**
**पूर्णे त्रयोदशे वर्षे राज्ञां राज्ञी भविष्यति ॥ १७ ॥**

**क्षम** क्षमस्व । **मासमर्धं** मासार्धं **सम्मितम्** अस्मत्सङ्केतितसङ्ख्योपेतम् । **राज्ञी** महिषी ॥ १७ ॥

**द्रौपद्युवाच -**

**आर्तयैतन्मया भीम कृतं बाष्पप्रमोचनम् ।**
**अपारयन्त्या दुःखानि न राजानमुपालभे ॥ १८ ॥**

युधिष्ठिरादयो यदि शृणुयुस्तर्हि जीवितं जह्युरित्यस्योत्तरमाह – **आर्तयेति** ॥ **अपारयन्त्या** तत्प्रान्तमगच्छन्त्या । इतरेषां तदधीनत्वाद्राजानमित्युक्तिः । **उपालभे** गतम् ॥ १८ ॥

**किमुक्तेन व्यतीतेन भीमसेन महाबल ।**
**प्रत्युपस्थितकालस्य कार्यस्यानन्तरो भव ॥ १९ ॥**

**व्यतीतेन** अतीतकालिकेन उक्तेन वचनेन किं प्रयोजनम् । प्रत्युपस्थितः कालो यस्य तस्य । **कार्यस्य अनन्तरो भव** अनवसरो भव । कालविलम्बं न कुर्विति यावत् । 'अन्तरं तु पराधीनं भेदे रन्ध्रावकाशयोः' इति विश्वः ॥ १९ ॥

**ममेह भीम कैकयी रूपाभिभवशङ्कया ।**
**नित्यमुद्विजते राजा कथं नेयादिमामिति ॥ २० ॥**

**कैकेयी** सुदेष्णा **रूपाभिभवशङ्कया** । रूपेण मदीयेन । योऽभिभवः स्वतिरस्कारः तच्छङ्कया **राजा** इमां **कथं नेयादित्युद्विजते** भीता भवति ॥ २० ॥

तस्या विदित्वा तं भावं स्वयं चानृतदर्शनः ।
कीचकोऽयं सुदुष्टात्मा सदा प्रार्थयते हि माम् ।। २१ ।।

**तस्याः** सुदेष्णायाः **तं भावम्** । इयमन्यगा चेन्मम क्षेमो भविष्यतीत्यभिप्रायम् । **अनृतदर्शनः** यत्ने कृते इयं मयि मद्वशा भवेदिति मिथ्याज्ञानी ।। २१ ।।

तमहं कुपिता भीम पुनः कोपं नियम्य च ।
अब्रुवं कामसम्मूढमात्मानं रक्ष कीचकम् ।। २२ ।।

**आत्मानं** स्वं **रक्ष** इति **तम् अब्रुवम्** ।। २२ ।।

गन्धर्वाणामहं भार्या पञ्चानां महिषी प्रिया ।
ते त्वां निहन्युर्दुर्धर्षा शूराः साहसकारिणः ।। २३ ।।

किमान्ध्यं मद्रक्षणे के मत्परिभावका इत्यत आह– **गन्धर्वाणामिति** ।। यतः **प्रिया महिषी** अतो **भार्या** भरणीया । इदं ञरुण्यो रूपं 'क्यत्युभरतेरेव' इत्युक्तेः । **साहसकारिणः** शिक्षाकर्तारः । 'साहसं तु बलात्कारः कृतकार्ये दमेऽपि च' इति विश्वः ।। २३ ।।

एवमुक्तः स दुष्टात्मा कीचकः प्रत्युवाच ह ।
नाहं बिभेमि सैरन्ध्रि गन्धर्वाणां शुचिस्मिते ।। २४ ।।

**गन्धर्वाणां** सकाशात् । **गन्धर्वाणांशुचिस्मित** इत्येकं वा पदम् । 'षष्ठ्या आक्रोशे'[१] इत्यलुक् ।। २४ ।।

शतं शतसहस्राणि गन्धर्वाणामहं रणे ।
समागतं हनिष्यामि त्वं भीरु कुरु मे क्षणम् ।। २५ ।।

---

१. पा.सू. (६/३/२१)

**मे** मद्विषये **क्षणम्** । तूष्णीमवस्थानं कुरु । गन्धर्वाणामीक्षणं प्रतीक्षणं मा कुर्विति वा । हे **भीरु त्वं** मेक्षणं स्पर्शं कुर्विति वा । [१]मिहधातोः छान्दसं रूपम् । मेक्षेति धात्वन्तरस्य वा रूपम् । 'या शङ्क्षे' इति ऋग्भाष्ये, 'स्पर्शो मे क्षणमुच्यते' इत्युक्तेः । 'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' इत्यमरः । 'क्षणो व्यापारशून्यत्व-मुहूर्तोत्सवपर्वसु' इति भानूदाहृतरुद्रः ।। २५ ।।

**इत्युक्ते चाब्रुवं मूढं कामातुरमहं पुनः ।**
**न त्वं प्रतिबलस्तेषां गन्धर्वाणां यशस्विनाम् ।। २६ ।।**

**प्रतिबलः** समबलः ।। २६ ।।

**धर्मे स्थिताऽस्मि सततं कुलशीलसमन्विता ।**
**नेच्छामि कश्चिद्वध्यं तं तेन जीवसि कीचक ।। २७ ।।**

तं चोरं **कश्चिद्** कमपि **वध्यं नेच्छामि** । 'तकारः कीर्तितश्चोरे' इति नानार्थध्वनिपद-मञ्जरी । **तेन** इच्छानुदयेन । त्वं **जीवसि** ।। २७ ।।

**एवमुक्तः स दुष्टात्मा प्राहसत् स्वनवत् तदा ।**
**अथ मां तत्र कैकेयी प्रैषयत् प्रणयेन तु ।। २८ ।।**

**प्रैषयत्** प्रेषयामास ।। २८ ।।

**तेनैव देशिता पूर्वं भ्रातुः प्रियचिकीर्षया ।**
**सुरामानय कल्याणि कीचकस्य निवेशनात् ।। २९ ।।**

**तेनैव** कीचकेनैव **देशिता** । देश उपदेशः सञ्जात अस्या इति तथा उपदिष्टेति यावत् । इति प्रेषयामासेति पूर्वेणान्वयः ।। २९ ।।

---

१. मिहि सेचने - इति धातुपाठः ।

**सूतपुत्रस्तु मां दृष्ट्वा महत् सान्त्वमवर्तयत् ।**
**सान्त्वे प्रतिहते क्रुद्धः परामर्शमना भवत् ॥ ३० ॥**

**परामर्शमना** बलात्कारेण स्पर्शकामो **भवत्** अभवत् । **परामर्शम् अन अभवदिति** च्छेदः । अन हे भीम मत्कले करमिदं परामर्शपरामृष्टमभवदिति[१] वा ॥ ३० ॥

**विदित्वा तस्य सङ्कल्पं कीचकस्य दुरात्मनः ।**
**तथाऽहं राजशरणं जवेनैव प्रधाविता ॥ ३१ ॥**

**प्रधाविता** कृती च्छेदन इतीदित्करणाज्ज्ञापकाद् 'यस्य विभाषा'[२] इत्यस्यानित्यत्वादिडागमः । पलायितेत्यर्थः ॥ ३१ ॥

**सन्दर्शने तु मां राज्ञः सूतपुत्रः परामृशत् ।**
**पातयित्वा स दुष्टात्मा पदाऽहं तेन ताडिता ॥ ३२ ॥**

**स दुष्टात्मा** सूतपुत्रः सन्दर्शने समक्षं **पातयित्वा पदा तेनाहं ताडिता** ॥ ३२ ॥

**प्रेक्षते स्म विराटस्तु कङ्कस्तु बहवो जनाः ।**
**रथिनः पीठमर्दाश्च हस्त्यारोहाश्च नैगमाः ॥ ३३ ॥**

**प्रेक्षते स्म** प्रैक्षत । 'लट् स्मे'[३] इति भूते लट् । **पीठमर्दाः** राजप्रियाः 'पीठमर्दीति धृष्टे स्यान्नायकस्य प्रियेऽपि च' इति मेदिनी । निगमाः वणिजा नागराः । 'नैगमो नागरो वणिक्' इत्यमरः । 'नैगमः स्यादुपनिषद्वणिजोर्नागरेऽपि च' इति विश्वः ॥ ३३ ॥

---

१. अस्पष्टमिदम् ।

२. यस्य विभाषा । पा.सू. (७/२/१५)

३. पा.सू (३/२/११८)

**उपालब्धो मया राजा कङ्कश्चापि पुनःपुनः ।**
**ततो न वारितो राज्ञा न तस्याविनयः कृतः ॥ ३४ ॥**

**उपालब्धः** गतम् । **विनयः** शिक्षा । 'विनयं प्रणते प्राहुः शिक्षायां विनयः पुनः' इति विश्वः । **कङ्कश्चापि न वारितः** वार्भिरितो नेत्रयोरिति वारितास्तादृशो नाभूदित्यपि कटाक्षितोऽर्थः ॥ ३४ ॥

**योऽयं राज्ञो विराटस्य कीचको नाम सारथिः ।**
**त्यक्तधर्मा नृशंसश्च तरस्वी सम्मतः प्रियः ॥ ३५ ॥**

**सारथिः** सहायः । **त्यक्तधर्मा** त्यक्तो धर्मो येन स तथा । धर्मादनिच्[१] केवलात् इत्यनिजन्तः । **तरस्वी** बली वेगवान् वा । 'तरो बले च वेगे च' इति विश्वः ॥ ३५ ॥

**शूरोऽभिमानी पापात्मा सर्वार्थेषु च मुग्धवान् ।**
**दारामर्शी महाभाग लभतेऽर्थान् बहूनपि ॥ ३६ ॥**

शूर इत्यनेन विराटस्य तच्छिक्षादक्षतां कटाक्षयति । मुग्धवान् क्तवतुप्रत्ययान्तः । मूढ इत्यर्थः । **दारामर्शी** परदाराभिमर्शी ॥ ३६ ॥

**आहरेदपि वित्तानि परेषां क्रोशतामपि ।**
**न तिष्ठति स्म सन्मार्गे न च धर्मं बुभूषति ॥ ३७ ॥**

**अर्थान् बहून् लभत** इत्युक्तं विशदयति – **आहरेदिति** ॥ **क्रोशतां** रुदताम् । **न बुभूषति** प्राप्नोति ॥ ३७ ॥

**पापात्मा पापभावश्च कामबाणवशोऽनुगः[२] ।**
**अविनीतश्च दुष्टात्मा प्रत्याख्यातः पुनःपुनः ॥ ३८ ॥**

---

१. पा.सू. ५/४/१२४ ।
२. कामबाणवशानुगः । (इति गी. पाठः)

**पापात्मा** प्राक्तनदुष्कृतपरिपाकदेहवान् । **पापभावः** पापचेष्टः । 'भावः स्वभावाभिप्रायचेष्टासत्तात्मजन्तुषु' इति विश्वः । **कामबाणवशः** सन् **अनुगः** मदनुगामी **प्रत्याख्यातः** मया निषिद्धः ।। ३८ ।।

**दर्शने दर्शने हन्याद्यदि जह्यां च जीवितम् ।**
**तद्धर्मे यतमानानां महान् धर्मो नशिष्यति ।। ३९ ।।**

**दर्शने** दर्शने प्रतिदर्शनं **यदि** मां **हन्यात्** स्वानधीनेति । तदा युष्मद्**धर्मो नशिष्यति** यदि तद्भयादहमेव जीवितं हन्याम्, तदपि **धर्मे यतमानानां** भवतां महान् धर्मः शत्रुनिबर्हणादिरूपो नशिष्यति । 'सधादिभ्यश्च' इति वेट् । **नशिष्यति** नक्ष्यन्तीति रूपे ।। ३९ ।।

**समयं रक्षमाणानां भार्या वो न भविष्यति ।**
**भार्यायां रक्षमाणायां प्रजा भवति रक्षिता ।। ४० ।।**

**समयं** वत्सरपरिपूर्तिरूपम् । तद्रक्षणे फलमाह – **भार्येति** ।। **प्रजा** अपत्यम् ।।४०।।

**प्रजायां रक्षमाणायामात्मा भवति रक्षितः ।**
**आत्मा हि जायते तस्यां तेन जायां विदुर्बुधाः ।। ४१ ।।**

कथमात्मा रक्षित इत्यत आह । **आत्मा** स्वयमेव । **बुधाः** वेदादिद्रष्टारः । तथाहि श्रुतिः- 'तज्जाया जाया भवति । यदि स्यां जायते पुनरपि जायायास्तद्धि जायात्वं यदस्यां जायते पतिः'[१] इति ।। ४१ ।।

**भर्ता हि भार्यया रक्ष्यः कथं जायान्ममोदरे ।**
**वदतां वर्णधर्मांश्च ब्राह्मणानामिति श्रुतम् ।। ४२ ।।**

---

१. ऐतरेयब्राह्मणम् ।

कथं जाया जायेतेति **भार्यया रक्ष्यः** । इति **वर्णधर्मान् वदतां ब्राह्मणानां** सकाशात् **श्रुतम्** । शत्रुनिबर्हणादन्यो धर्मो नास्तीत्यपि श्रुतम् ।। ४२ ।।

**क्षत्रियस्य सदा धर्मो नान्यः शत्रुनिबर्हणात् ।**
**पश्यतो धर्मराजस्य कीचको मां पदाऽवधीत् ।। ४३ ।।**

**तव चैव समक्षं वै भीमसेन महाबल ।**
**त्वयाऽप्यहं परित्राता तस्माद्धोराज्जटासुरात् ।। ४४ ।।**

**समक्षं** 'प्रतिपरसमनुभ्योऽक्ष्णः'[१] इति टच् । किञ्चित् स्मारयित्वा तं प्रोत्साहयति– **त्वयेति** ।। **जटासुरात् परित्राता** । तत्कथा तु **वनपर्वणि** । सौगन्धिकहरणानन्तरं जटासुरस्य तु शिरो भीमसेनबलात् हृतं पपातेत्यन्तेन ज्ञेया[२] ।। ४४ ।।

**जयद्रथं तथैव त्वमजैषीर्भ्रातृभिः सह ।**
**जहीममपि पापिष्ठं योऽयं मामवमन्यते ।। ४५ ।।**

**जयद्रथं तथैव त्वमजैषीः** । इयमपि कथा तत्रैव वनपर्वणि 'तस्मिन् बहुमृगेऽरण्ये'[३] इत्यारभ्य 'पाण्डवाश्च वने तस्मिन्न्यवसन् काम्यके तथा'[४] इत्यन्तेन ज्ञेया ।।४५।।

**कीचको राजवाल्लभ्याच्छोककृन्मम भारत ।**
**तमेवं कामसम्मत्तं भिन्धि कुम्भमिवाश्मनि ।। ४६ ।।**

**राजवाल्लभ्यात्** तत्प्रियत्वात् ।। ४६ ।।

---

१. वार्तिकम् । (१६५)
२. जटासुरकथानिर्णयः म.भा.ता.निर्णये (२४/६-८) व्यक्तः ।
३. वन. २६४/१
४. वन. २७२/८१

**योनिमित्तमनर्थानां बहूनां मम भारत ।**
**तं चेज्जीवन्तमादित्यः प्रातरभ्युदयिष्यति ।**
**विषमालोड्य पास्यामि मा कीचकवशं गमम् ।। ४७ ।।**

**जीवन्तं तं आदित्यः अभ्युदयिष्यति** । अभ्युत्पूर्वादयतेर्लृटि रूपम् । आर्षत्वात् परस्मैपदम् । सूर्योदयकाले स जीवति चेदिति फलितो अर्थः । **मा कीचकवशं गमम्** कीचकवशं मा गमम् ।। ४७ ।।

**श्रेयो हि मरणं मह्यं भीमसेन तवाग्रतः ।**

**वैशम्पायन उवाच -**

**इत्युक्त्वा प्रारुदत् कृष्णा भीमस्योरुं समाश्रिता ।। ४८ ।।**

**मह्यं** मम ।। ४८ ।।

**भीमश्च तां परिष्वज्य महत् सान्त्वं प्रयुज्य च ।**
**आश्वासयित्वा बहुशो भृशमार्तां सुमध्यमाम् ।। ४९ ।।**

**सान्त्वं प्रयुज्य । आश्वासयित्वा** स्वात्मानं समाहितमनस्कं कृत्वेत्यर्थः ।। ४९ ।।

**हेतुतत्त्वार्थसंयुक्तैर्वचोभिर्द्रुपदात्मजाम् ।**
**प्रमृज्य वदनं तस्याः पाणिनाऽश्रुसमाकुलम् ।। ५० ।।**

तां हेतवश्च तत्त्वार्थाः परमार्थाश्च तैः संयुक्तैः प्रतिपादकतया सहितैर्वचोभिराश्वासयित्वा ।। ५० ।।

**कीचकं मनसाऽगच्छत् सृक्किणी परिसंलिहन् ।**
**उवाच चैनां दुःखार्तां भीमः क्रोधसमन्वितः ।। ५१ ।।**

**।। इति मन्महाभारते विराटपर्वणि कीचकवधपर्वणि एकविंशोऽध्यायः ।।**

**सृक्किणी** ओष्ठप्रान्तभागौ । 'प्रान्ता ओष्ठस्य सृक्किणी' इत्यमरः । **मनसाऽगच्छत्** संहार्यत्वेनानुसन्दधे ।। ५१ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां एकविंशोऽध्यायः ।।**

*****

# २२. द्वाविंशोऽध्यायः

**( भीमसेनकीचकयोः सङ्ग्रामे भीमसेनकर्तृककीचकवधः )**

**भीमसेन उवाच -**

**तथा भद्रे करिष्यामि यथा त्वं भीरु भाषसे ।**
**अद्य तं सूदयिष्यामि कीचकं सहबान्धवम् ।। १ ।।**

**अद्य**शब्देनातीताया रात्र्याः पश्चार्धेनागामिन्याः पूर्वार्धेन च सहितो दिवस उच्यते । अत्र च भीमवचनसमयस्यातीतरात्रिपश्चार्धत्वात् । तद्दिवसरात्रिपूर्वार्ध एव संहारात् अद्येति सम्भवति । भीमस्य ऐष्यज्ज्ञत्वं सूचयति– **सहबान्धवमित्यनेन** ।। बान्धवं राजबान्धवमपि **सूदयिष्यामि** तावत् त्वं सहेति वा । तत्परस्मैपदता तु आधृषीयत्वेन णिचो वैकल्पिकत्वेनोपपन्ना । अत एव, 'स एवायं नागः सहति कलभेभ्यः परिभवम्'[1] इत्यादिप्रयोगः । अनेन 'तं चेज्जीवन्तमादित्यम्'[2] इत्याद्युक्तवत्या त्वयैतावान् विलम्बोऽवलम्बनीयः[3] इति सूचयति ।। १ ।।

---

१. नदीवप्रान् भित्वा किसलयवदुत्पाट्य च तरून् मदोन्मत्तान् जित्वा करचरणदन्तैः प्रतिगजान् । जरां प्राप्यानार्यां तरुणजनविद्वेषजननीं **स एवायं नागः सहति कलभेभ्यः परिभवम्** ।। - इति अस्य सूक्तेः पूर्णः पाठः ।

२. २१/४७

३. इत्यसूचि । इति क्वचित् ।

**अस्याः प्रदोषे शर्वर्याः कुरुष्वानेन सङ्गतम् ।**
**दुःखं शोकं च निर्धूय याज्ञसेनि शुचिस्मिते ॥ २ ॥**

**अस्याः शर्वर्याः प्रदोषे**ऽहर्मुखे । **अनेन** कीचकेन **सङ्गतं** एकस्थाननिवाससम्भाषण-रूपं स्नेहप्रदर्शनम् । **दुःख**मान्तरं **शोकं** तदेव नेत्रजलादिजनकं चेद् भवति । **निर्धूय विधूय** अप्रकाश्य ॥ २ ॥

**यैषा नर्तनशालेयं मत्स्यराजेन कारिता ।**
**दिवाऽत्र कन्या नृत्यन्ति रात्रौ यान्ति यथागृहम् ॥ ३ ॥**

**एषा** वधस्थानत्वेन मदिच्छाविषयीभूता । कर्मणि घञन्तोऽयम् । येयं नर्तनशाला यथा गृहं स्वस्वगृहमनतिक्रम्य । क्वचित् **तथा गृह**मित्यपि **पाठः** ॥ ३ ॥

**तत्रास्ति शयनं दिव्यं दृढाङ्गं सुप्रतिष्ठितम् ।**
**तत्रास्य दर्शयिष्यामि पूर्वप्रेतान् पितामहान् ॥ ४ ॥**

**शयनं** मञ्चः । 'शयनं मञ्चपर्यङ्के' इत्यमरः । **दृढाङ्गं** लोहादिबद्धम् । **सुप्रतिष्ठितम्** समभूलग्नम् । **अस्य** । एनं वधिष्यामीति यावत् ॥ ४ ॥

**यथा च त्वां न पश्येयुः कुर्वाणां तेन संविदम् ।**
**कुर्यास्तथा त्वं कल्याणि यथा सन्निहितो भवेत् ॥ ५ ॥**

**न पश्येयुः** जनाः **संविदं** सङ्केतं । 'संविद् ज्ञाने प्रतिज्ञायां सङ्केताचारनामसु' इति विश्वः । **यथा** येन प्रकारेण **सन्निहितः** कीचको **भवेत् तथा कुर्याश्च** ॥ ५ ॥

**वैशम्पायन उवाच -**

**तथा तौ कथयित्वा तु बाष्पमुत्सृज्य दुःखितौ ।**
**रात्रिशेषं तमत्युग्रं धारयामासतुर्हृदि ॥ ६ ॥**

**रात्रिशेषमपि अत्युग्रं** कल्पसमं **धारयामासतुः** । धारयाम् आसतुरिति द्वे पदे । धारयामित्यामन्तमव्ययम् । अनुप्रयोगस्तु नियतः ।। ६ ।।

**तस्यां रात्र्यां व्यतीतायां प्रातरुत्थाय कीचकः ।**
**गत्वा राजकुलायैव द्रौपदीमिदमब्रवीत् ।। ७ ।।**

इतः परम् 'अथ ज्ञात्वा विराटोऽपि कृष्णासक्तं तु कीचकम्' इत्यारभ्य 'संयोगकामःसैरन्ध्र्याहृषितःकीचकाधमः' इत्यन्ताःकीचकविराटसंवादरूपाः कतिपयश्लोकाः प्रक्षिप्ताः बहुकोशेष्वदर्शनान् न व्याख्याताः । **कुलाय** गृहाय गतम् । 'गत्यर्थकर्मणि'[1] इति चतुर्थी ।। ७ ।।

**सभायां पश्यतो राज्ञः पातयित्वा पदाऽहनम् ।**
**न चैवालभसे त्राणमभिपन्ना बलीयसा ।। ८ ।।**

**पश्यतो राज्ञः** तमनादृत्य **अहनम्** ताडितवान् । **त्राणं** रक्षकं **न लभसे** नालभाः । **बलीयसा** मया **अभिपन्ना** वशीकृता ।। ८ ।।

**प्रवादेन च मत्स्यानां राजा नाम्नाऽयमुच्यते ।**
**अहमेव हि मत्स्यानां राजा वै वाहिनीपतिः ।। ९ ।।**

**प्रवादेन** लोकप्रवादेन । **अयं** विराटः ।। ९ ।।

**मां सुखं प्रतिपद्यस्व दासो भीरु भवामि ते ।**
**अह्नाय तव सुश्रोणि शतं निष्कान् ददाम्यहम् ।। १० ।।**

**सुखं** यथा भवति तथा । **प्रतिपद्यस्व** प्राप्नुहि । **अह्नाय** शीघ्रम् । 'स्रागृझडित्यञ्जसाऽह्नायद्राङ्मंक्षुसपदि द्रुते' इत्यमरः । **निष्कान्** गतम् ।। १० ।।

---

१. गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि । - पा.सू. (२/३/१२)

दासीशतं च ते दद्यां दासानामपि चापरम् ।
रथं चाश्वतरीयुक्तमस्तु नौ भीरु सङ्गमः ॥ ११ ॥

**अपरं** शतम् । **नौ** आवयोः ॥ ११ ॥

द्रौपद्युवाच -

एवं मे समयं त्वद्य प्रतिपद्यस्व कीचक ।
न त्वां सखा वा भ्राता वा जानीयात् सङ्गतं मया ॥१२॥

**समयं** सङ्केतं । **प्रतिपद्यस्व** जानीहि ॥ १२ ॥

अनुप्रवादाद्भीताऽस्मि गन्धर्वाणां यशस्विनाम् ।
एवं मे प्रतिजानीहि ततोऽहं वशगा तव ॥ १३ ॥

**अनुप्रवादात्** नीचोक्तेः । **प्रतिजानीहि** प्रतिज्ञां कुरु ॥ १३ ॥

कीचक उवाच -

एवमेतत् करिष्यामि यथा सुश्रोणि भाषसे ।
एको भद्रे गमिष्यामि शून्यमावसथं तव ॥ १४ ॥

**गमिष्यामि** । आगमिष्यामि ॥ १४ ॥

समागमार्थं रम्भोरु त्वया मदनमोहितः ।
यथा त्वां नैव पश्येयुर्गन्धर्वाः सूर्यवर्चसः ॥ १५ ॥

**त्वया समागमार्थम्** ॥ १५ ॥

द्रौपद्युवाच -

यदेतन्नर्तनागारं मत्स्यराजेन कारितम् ।
दिवाऽत्र कन्या नृत्यन्ति रात्रौ यान्ति यथागृहम् ॥१६॥

**तमिस्रे तत्र गच्छेथा गन्धर्वास्तन्न जानते ।**
**तत्र दोषः परिहृतो भविष्यति न संशयः ।। १७ ।।**

**तमिस्रे** अन्धकारे । **तत्** नर्तनागारम् । **दोषः** अनुप्रवादरूपः । इदमेव मूलीकृत्य लौकिकगाथा अस्मदपभ्रष्टभाषया 'निन्न पाप हरितु'[१] इति ।। १७ ।।

**वैशम्पायन उवाच -**

**तमर्थं प्रतिजल्पन्त्याः कृष्णायाः कीचकेन ह ।**
**दिवसार्धं समभवन्मासेनैव समं नृप ।। १८ ।।**

**तमर्थं** भीमोपदिष्टं । **दिवसार्धं** अर्धदिवसं अवशिष्टमहः मासेन सममभवत् । अधुनाऽपि न हत इति चिन्तया । अत्र **दिवसार्धं** इति उत्तरत्र च समो **नृपेति** च सुपठम् । तत्पक्षेऽसमांशकत्वस्य स्थितेऽर्धपुल्लिङ्गता ।। १८ ।।

**ततः स भीमसेनस्य तमर्थं प्रत्यवेदयत्[२] ।**
**कीचकोऽथ गृहं गत्वा भृशं हर्षपरिप्लुतः ।**
**सैरन्ध्रीरूपिणं मूढो मृत्युं तं नावबुद्धवान् ।। १९ ।।**

**नावबुद्धवान्** न ज्ञातवान् ।। १९ ।।

**गन्धाभरणमाल्येषु व्यासक्तः स विशेषतः ।**
**अलञ्चक्रे तदाऽऽत्मानं सत्वरः काममोहितः ।। २० ।।**

**तस्य तत्कुर्वतः कर्म कालो दीर्घ इवाभवत्[३] ।**
**अनुचिन्तयतश्चापि तामेवायतलोचनाम् ।। २१ ।।**

---

१. 'ನಿನ್ನ ಪಾಪ ಹರಿತು'

२. अयं श्लोकार्धः गी. पाठे न दृश्यते ।'

३. अहस्तु मासशब्दोक्तं यत्र चिन्तायुतं व्रजेत् ।
एवं वत्सरभाद्यश्च विपरीते विपर्ययः ।। - इति भागवततात्पर्ये । (१/१३/२)

**तत्कर्म** अलङ्करणरूपम् ।। २१ ।।

**आसीदभ्यधिका चास्य श्रीः श्रियं प्रमुमुक्षतः ।**
**निर्वाणकाले दीपस्य वर्तीमिव दिधक्षतः ।। २२ ।।**

**प्रमुमुक्षतः** मोक्तृत्वेन सम्भावितस्य । आशङ्कायां सन् । **निर्वाणकाले** गमनकाले । **वर्तीं** दशां **दिधक्षतः** गौणोऽत्र सनर्थः । दहत इत्यर्थः ।। २२ ।।

**कृतः सम्प्रत्ययस्तस्याः कीचकः काममोहितः ।**
**नाजानाद्दिवसं यान्तं चिन्तयानः समागमम् ।। २३ ।।**

**सम्प्रत्ययः** विश्वासः **तस्याः** विषये ।। २३ ।।

**ततस्तु द्रौपदी गत्वा तदा भीमं महानसे ।**
**उपातिष्ठत कल्याणी कौरव्यं पतिमन्तिकम् ।। २४ ।।**

**कौरव्यं** 'कुर्वादिभ्यो ण्यः'[१] इति ण्यः ।। २४ ।।

**तमुवाच सुकेशान्ता कीचकस्य मया कृतः ।**
**सङ्गमो नर्तनागारे यथाऽवोचः परन्तप ।। २५ ।।**

**सङ्गमो** घटना ।। २५ ।।

**शून्यं स नर्तनागारमागमिष्यति कीचकः ।**
**एको निशि महाबाहो कीचकं तं निषूदय ।। २६ ।।**

**तं सूतपुत्रं कौन्तेय कीचकं मददर्पितम् ।**
**गत्वा त्वं नर्तनागारं निर्जीवं कुरु पाण्डव ।। २७ ।।**

**मददर्पितम्** । मदेन दर्पितो मददर्पितः तम् ।। २७ ।।

---

१. पा.सू. । (४/१/१५१)

**दर्पाच्च सूतपुत्रोऽसौ गन्धर्वानवमन्यते ।**
**तं त्वं प्रहरतां श्रेष्ठ ह्रदान्नागमिवोद्धर ।। २८ ।।**

**ह्रदान्नागं** गरुड इव । **उद्धर** उत्क्रान्तप्राणं कुरु ।। २८ ।।

**अश्रु दुःखाभिभूताया मम मार्जस्व भारत ।**
**आत्मनश्चैव भद्रं ते कुरु मानं कुलस्य वै ।। २९ ।।**

**ममाश्रु मार्जस्व** 'मृजू शौचालङ्करणयोः' इत्याधृषीयस्य णिजभावे रूपम् । स्वप्रमार्जितं कुरु ।। २९ ।।

**भीमसेन उवाच -**

**स्वागतं ते वरारोहे यन्मां वेदयसे प्रियम् ।**
**न ह्यन्यं कञ्चिदिच्छामि सहायं वरवर्णिनी ।। ३० ।।**

**सहायं** कीचकहनने ।। ३० ।।

**या मे प्रीतिस्त्वयाऽऽख्याता कीचकस्य समागमे ।**
**हत्वा हिडिम्बं सा प्रीतिर्ममासीद्वरवर्णिनी ।। ३१ ।।**

**कीचकस्य मे** मम **समागमे** विषये या **प्रीतिः** हर्षः **त्वयाऽऽख्याता** अनुभूता **सा** तादृशी **प्रीतिर्हिडिम्बं हत्वा** स्थितस्य **ममासी**दित्यन्वयः । 'मुत्प्रीतिः प्रमदो हर्षः' इत्यमरः ।। ३१ ।।

**सत्यं भ्रातॄंश्च धर्मं च पुरस्कृत्य ब्रवीमि ते ।**
**कीचकं निहनिष्यामि वृत्रं देवपतिर्यथा ।। ३२ ।।**

**सत्यं** ब्रवीमि । **धर्मं** सुकृतम् । **भ्रातॄन्** धर्मादीन् । **पुरस्कृत्य** तच्छपथपूर्वकमित्यर्थः ।।३२।।

तं गह्वरे प्रकाशे वा पोथयिष्यामि कीचकम् ।
अथ चेदपि योत्स्यन्ति हिंस्ये मत्स्यानपि ध्रुवम् ॥३३॥

**गह्वरे** गुहादिगुप्तस्थाने । 'देवखातबिले गुहा गह्वरम्' इत्यमरः । **हिंस्ये** हिंसिष्ये ॥ ३३ ॥

ततो दुर्योधनं हत्वा प्रतिपत्स्ये वसुन्धराम् ।
कामं मत्स्यमुपास्तां हि कुन्तीपुत्रो युधिष्ठिरः ॥ ३४ ॥

**प्रतिपत्स्ये** शपथम् । 'सत्यं च शपथे तथ्ये' इति विश्वः ॥ ३४ ॥

द्रौपद्युवाच -

यथा न सन्त्यजेथास्त्वं सत्यं वै मत्कृते विभो ।
निगूढस्त्वं तथा पार्थ कीचकं तं निषूदय ॥ ३५ ॥

**न सन्त्यजेथाः** न त्यजसि । तथा **निगूढस्त्वं कीचकं निषूदय** ॥ ३५ ॥

भीमसेन उवाच -

एवमेतत् करिष्यामि यथा त्वं भीरु भाषसे ।
अद्य तं सूदयिष्यामि कीचकं सह बान्धवैः ॥ ३६ ॥

अदृश्यमानस्तस्याथ तमस्विन्यामनिन्दिते ।
नागो बिल्वमिवाक्रम्य पोथयिष्याम्यहं शिरः ।
अलभ्यामिच्छतस्तस्य कीचकस्य दुरात्मनः ॥ ३७ ॥

**अदृश्यमानः** तेन । तस्य कीचकस्य शिर इत्यन्वयः । तमस्विन्यां रात्रौ । 'विभावरी तमस्विन्यौ रजनी यामिनी तमी' इत्यमरः । **आक्रम्य** पदा । **अलभ्यां** त्वाम् । **नागो** गजः । **बिल्वं** बिल्वफलम् ॥ ३७ ॥

**वैशम्पायन उवाच -**

**भीमोऽथ प्रथमं गत्वा रात्रौ च्छन्न उपाविशत् ।**
**मृगं हरिरिवादृश्यः प्रत्याकाङ्क्षत कीचकम् ।। ३८ ।।**

**गत्वा** नर्तनागारं । **च्छन्नो** निलीनः सन् **उपाविशत्** । **हरिः** सिंहो **मृगं** यथाऽवमत्या काङ्क्षति तथा **प्रत्याकाङ्क्षत** ।। ३८ ।।

**कीचकश्चाप्यलङ्कृत्य यथाकाममुपागमत् ।**
**तां वेलां नर्तनागारं पाञ्चालीसङ्गमाशया ।। ३९ ।।**

**यथाकामम् अलङ्कृत्य तां वेलां** तदुक्तकालोऽयमेवेति मन्यमानः ।। ३९ ।।

**मन्यमानः स सङ्केतमागारं प्राविशच्च तत् ।**
**प्रविश्य च स तद्वेश्म तमसा संवृतं महत् ।। ४० ।।**

**सङ्केतं च मन्यमानः** ।। ४० ।।

**पूर्वागतं ततस्तत्र भीममप्रतिमौजसम् ।**
**एकान्तावस्थितं चैनमाससाद स दुर्मतिः ।। ४१ ।।**

**ततः** द्रौपदीप्रतिज्ञायाः । **पूर्वागतम्** । एवं सिंहमिव ।। ४१ ।।

**शयानं शयने तत्र सूतपुत्रः परामृशत् ।**
**जाज्वल्यमानं कोपेन कृष्णाधर्षणजेन ह ।। ४२ ।।**

त्वं अन्यं वैरिणमिति यावदिति वा । **परामृशत्** हस्तेन पस्पर्श । कृष्णाविषये तद्धर्षणं बलात्कारस्पर्शस्तज्जेन ।। ४२ ।।

**उपसङ्गम्य चैवैनं कीचकः काममोहितः ।**
**हर्षोन्मथितचित्तात्मा स्मयमानोऽभ्यभाषत ।। ४३ ।।**

हर्षेणोन्मथितौ चित्तमात्मा देहश्चेत्येतौ यस्य स तथा । **स्मयमानः** हृष्य-माणः ।।४३।।

**प्रापितं ते मया वित्तं बहुरूपमनन्तकम् ।**
**यत् कृतं धनरत्नाढ्यं दासीशतपरिच्छदम् ।। ४४ ।।**

**बहुरूपं** नानाविधं स्वर्णात्मकं वा । 'बहुरूपं च पुरटम्'[१] इत्यादेः । **अनन्तकं** अक्षय्यम् । त्वामुद्दिश्य **यत्कृतं** गृहं तदपि ते प्रापितमेव । दासीशतरूपः परिच्छदः परिकरो यस्य तत् ।। ४४ ।।

**रूपलावण्ययुक्ताभिर्युवतीभिरलङ्कृतम् ।**
**गृहं चान्तःपुरं सुभ्रु क्रीडारतिविराजितम् ।**
**तत्सर्वं त्वां समुद्दिश्य सहसाऽहमुपागतः ।। ४५ ।।**

**क्रीडारतिविराजितम्** क्रीडया रत्या च विराजितं तत्सर्वं प्रापितमेव । तर्हि आनेतव्यं कुतो नानीतमित्यत आह– **सहसेति** ।। त्वरयेत्यर्थः । त्वामुद्दिश्य कृतं सर्वमर्पितमतः **सहसा** सहासा त्वं भव । किमपि न दत्तवानिति मतिदौर्मुख्यं न भजेति भाव इति वा ।। ४५ ।।

**अकस्मान्मां प्रशंसन्ति सदा गृहगताः स्त्रियः ।**
**सुवासा दर्शनीयश्च नान्योऽस्ति त्वादृशः पुमान् ।।४६।।**

मम त्वल्लाभ इव तव मल्लाभोऽपि श्रेयानित्यर्थाल्लोकस्तुतिव्याजेन सूचयति- **अकस्मादिति** ।। मत्प्रशंसाप्रस्तावरहितकालेऽपीत्यर्थः । प्रशंसाप्रकारमाह– **सुवासा इति** ।।४६ ।।

---

१. इति काठकोपनिषद्भाष्ये ।

**भीमसेन उवाच -**

**दिष्ट्या त्वं दर्शनीयोऽथ दिष्ट्याऽऽत्मानं प्रशंससि ।**
**ईदृशस्तु त्वया स्पर्शः स्पृष्टपूर्वो न कर्हिचित् ।। ४७ ।।**

**त्वं दर्शनीयः** इति दिष्ट्या सुखं तथा **आत्मानं** प्रशंससीत्यपि **दिष्ट्या** सुखम् । स्पृशत इति स्पर्शो देहः । पूर्वं स्पृष्टः **स्पृष्टपूर्वः** । स नेत्यर्थः ।। ४७ ।।

**स्पर्शं वेत्सि विदग्धस्त्वं कामधर्मविचक्षणः ।**
**स्त्रीणां प्रीतिकरो नान्यस्त्वत्समः पुरुषस्त्विह ।। ४८ ।।**

**विदग्धः** कुशल इत्यपहासः । **कामधर्मविचक्षणः** तत्कालाभिज्ञः । **प्रीतिकरो** हर्षजनकः ।। ४८ ।।

**वैशम्पायन उवाच -**

**इत्युक्त्वा तं महाबाहुर्भीमो भीमपराक्रमः ।**
**सहसोत्पत्य कौन्तेयः प्रहस्येदमुवाच ह ।। ४९ ।।**

**सहसा** त्वरया **प्रहस्य** स्वस्मिन् काममोहेन स्प्रष्टुं प्राप्त इति ।। ४९ ।।

**अद्य त्वां भगिनी पापं कृष्यमाणं मया भुवि ।**
**द्रक्ष्यतेऽद्रिप्रतीकाशं सिंहेनेव महागजम् ।। ५० ।।**

**निराबाधा त्वयि हते सैरन्ध्री विचरिष्यति ।**
**सुखमेव चरिष्यन्ति सैरन्ध्र्याः पतयः सदा ।। ५१ ।।**

**निराबाधा** निष्पीडा । **सुखं** यथा तथा **चरिष्यन्ति** । भार्यापीडापरिहारात् ।।५१।।

**ततो जग्राह केशेषु माल्यवत्सु महाबलः ।**
**सकेशेषु परामृष्टो बलेन बलिनां वरः ।। ५२ ।।**

**माल्यवत्सु** पुष्पवत्सु । मालावत्सु वा । 'माल्यं मालाप्रसूनयोः' इत्यमरः ।।५२।।

**आक्षिप्य केशान् वेगेन बाह्वोर्जग्राह पाण्डवम् ।**
**बाहुयुद्धं तयोरासीत् क्रुद्धयोर्नरसिंहयोः ।। ५३ ।।**

**आक्षिप्य** मोचयित्वा **बाह्वोः** सप्तमीयम् ।। ५३ ।।

**वसन्ते वासिताहेतोर्बलवद्गजयोरिव ।**
**कीचकानां तु मुख्यस्य नराणामुत्तमस्य च ।। ५४ ।।**

**वासिता** करिणी । गतम् ।। ५४ ।।

**वालिसुग्रीवयोर्भ्रात्रोः पुरेव कपिसिंहयोः ।**
**अन्योन्यमभिसंरब्धौ[1] परस्परजयैषिणौ ।। ५५ ।।**

मृतमरिष्यमाणयोर्दृष्टान्तदार्ष्टान्तिकभावसूचनार्थं कीचकसमतया प्रबलोऽपि वाली पूर्वं गृहीतः । **पुरा** त्रेतायुगे । बाहुयुद्धमासीदिति पूर्वेणान्वयः । **अभिसंरब्धौ** कुपितौ ।। ५५ ।।

**ततः समुद्यम्य भुजौ पञ्चशीर्षाविवोरगौ ।**
**नखदंष्ट्राभिरन्योन्यं घ्नतः क्रोधविषोद्धतौ ।। ५६ ।।**

**पञ्चशीर्षोरगौ** इव विद्यमानौ **भुजौ उद्यम्य घ्नतः** हतः ।। ५६ ।।

**वेगेनाभिहतो भीमः कीचकेन बलीयसा ।**
**स्थिरप्रतिज्ञः स रणे पदान्न चलितः पदम् ।। ५७ ।।**

**स्थिरप्रतिज्ञः** न चलेयं पदात् पदमिति स्थिरा प्रतिज्ञा यस्य सः । हेतुगर्भविशेषणम् । **स रणे** अपसरणे विषये **पदान्न चलित** इति वा ।। ५७ ।।

---

१. अन्योन्यमपि संरब्धौ । (इति गी. पाठः)

**तावन्योन्यं समाश्लिष्य प्रकर्षन्तौ परस्परम् ।**
**उभावपि प्रकाशेते प्रवृद्धौ वृषभाविव ॥ ५८ ॥**

**प्रवृद्धौ** बलेन ॥ ५८ ॥

**तयोर्ह्यासीत् सुतुमुलः सम्प्रहारः सुदारुणः ।**
**नखदंष्ट्रायुधवतोर्व्याघ्रयोरिव दृप्तयोः ॥ ५९ ॥**

**सुतुमलः** ग्लानिजनकः 'तमू ग्लानौ' । लिङ्गमशिष्यम् । 'तुमुलं रणसङ्कुले' इत्यमरमेदिनीविश्वाः ॥ ५९ ॥

**अभिपत्याथ बाहुभ्यां प्रत्यगृह्णादमर्षितः ।**
**मातङ्ग इव मातङ्गं प्रभिन्नकरटामुखम् ॥ ६० ॥**

**प्रत्यगृह्णात्** भीम इति शेषः । ग्रहणमात्रे दृष्टान्तः । **प्रभिन्नकरटामुखम्** इति विपरिणतं सत् इति मातङ्गविशेषणमपि । 'करटो गजगण्डे स्यात् कुसुम्भे निन्द्यजीविते । एकादशाहादिश्राद्धे दुर्दुरूढेऽपि वायसे । करटो वाद्यभेदे स्यात्' इति मेदिनी ॥६०॥

**स चाप्येनं तदा भीमः प्रतिजग्राह वीर्यवान् ।**
**समाक्षिपत्[१] कीचकोऽथ बलेन बलिनां वरः ॥ ६१ ॥**

**सः कीचकः प्रतिजग्राह** । अनन्तरं **समाक्षिपत्** च ॥ ६१ ॥

**तयोर्भुजविनिष्पेषादुभयोर्बलिनोस्तदा ।**
**शब्दः समभवद् घोरो वेणुस्फोटसमो युधि ॥ ६२ ॥**

**विनिष्पेषात्** सङ्घर्षात् । **वेणुस्फोटसमो** वेणुविदारणजशब्दसमः ॥ ६२ ॥

---

१. तमाक्षिपत् । (इति गी पाठः)

**अथैनमाक्षिप्य बलाद्गृहमध्ये वृकोदरः ।**
**धूनयामास वेगेन वायुश्चण्ड इव द्रुमम् ॥ ६३ ॥**

**आक्षिप्य** प्रक्षिप्य **धूनयामास** कम्पयामास । **चण्डो वायुर्द्रुममिव** धूञो णिचि नुकि लिटि रूपम् । पदद्वयम् ॥ ६३ ॥

**भीमेन च परामृष्टो दुर्बलो बलिना रणे ।**
**व्यस्पन्दत यथाप्राणं विचकर्ष च पाण्डवम् ॥ ६४ ॥**

**परामृष्टः** गृहीतः । **व्यस्पन्दत** किञ्चिदचेष्टत । **यथाप्राणं** यथाबलम् ॥ ६४ ॥

**ईषदाकलितं चापि क्रोधाद्द्रुतपदं स्थितम् ।**
**कीचको बलवान् भीमं जानुभ्यामाक्षिपद् भुवि ॥ ६५ ॥**

**ईषदाकलितं** ईषत्स्वाधीनवद्विद्यमानम् । **द्रुतपदं** किञ्चिच्चलत्पदं तथापि **स्थितम्** । **जानुभ्यां आक्षिपत्** पातयामास ॥ ६५ ॥

**पातितो भुवि भीमस्तु कीचकेन बलीयसा ।**
**उत्पपाताथ वेगेन दण्डपाणिरिवान्तकः ॥ ६६ ॥**

**दण्डपाणि**रित्यनेनोत्तरोत्तेजनं नास्तीति सूच्यते ॥ ६६ ॥

**स्पर्धया च बलोन्मत्तौ तावुभौ सूतपाण्डवौ ।**
**निशीथे पर्यकर्षेतां बलिनौ निर्जने स्थले ॥ ६७ ॥**

निशीथगोपीथेति... [१]इति निपातितः । निपातितः शब्दः । अर्धरात्रे रात्रिमात्रे वा 'निशीथस्तु पुमानर्धरात्रे स्याद्रात्रिमात्रके' इति भानुः । 'अर्धरात्रं निशीथौ द्वौ' इत्यमरः । **बलिनौ** परिवर्तमानौ ॥ ६७ ॥

---

१. उणादिसूत्रं (१७४)

**ततस्तद्भवनं श्रेष्ठं प्राकम्पत मुहुर्मुहुः ।**
**बलवच्चापि सङ्क्रुद्धावन्योन्यं प्रति गर्जतः ॥ ६८ ॥**

**बलवन्तौ** गतिमन्तौ **सङ्क्रुद्धौ** यतो **विगर्जताम्** गर्जताम् । ततस्तस्माद्धेतोः **तद्भवनं श्रेष्ठं प्राकम्पत** ॥ ६८ ॥

**तलाभ्यां स तु भीमेन वक्षस्यभिहतो बली ।**
**कीचको रोषसन्तप्तः पदान्न चलितः पदम् ॥ ६९ ॥**

**पदान्न चलितः पदं** गतम् ॥ ६९ ॥

**मुहूर्तं तु स तं वेगं सहित्वा भुवि दुःसहम् ।**
**बलादहीयत तदा सूतो भीमबलार्दितः ॥ ७० ॥**

**सहित्वा** 'तीषसह....'[१] इति वैट्, सोढ्वा । **अहीयत** क्षीणोऽभूत् ॥ ७० ॥

**तं हीयमानं विज्ञाय भीमसेनो महाबलः ।**
**वक्षस्यानीय वेगेन ममर्दैनं विचेतनम् ॥ ७१ ॥**

**वक्षस्यानीय** भुग्नशिरसं कृत्वा वक्षसि स्थापयित्वा **ममर्द विचेतनं** विसञ्ज्ञम् ॥ ७१ ॥

**क्रोधाविष्टो विनिश्वस्य पुनश्चैनं वृकोदरः ।**
**जग्राह जयतां श्रेष्ठः केशेष्वेव तदा भृशम् ॥ ७२ ॥**

**गृहीत्वा कीचकं भीमो विरराज महाबलः ।**
**शार्दूलः पिशिताकाङ्क्षी गृहीत्वेव महामृगम् ॥ ७३ ॥**

**तत एनं परिश्रान्तमुपलभ्य वृकोदरः ।**
**योजयामास बाहुभ्यां पशुं रशनया यथा ॥ ७४ ॥**

---

१. तीषसहलुभरुषरिषः । पा.सू. (७/२/४८)

**योजयामास** सम्बद्धमकरोत् । **रशनया** रज्ज्वा ।। ७४ ।।

**नदन्तं च महानादं भिन्नभेरीसमस्वनम् ।**
**भ्रामयामास सुचिरं विस्फुरन्तमचेतसम् ।। ७५ ।।**

**महानादं** पूर्वं इदानीं भिन्नकांस्यभेरीसमस्वनम् । अत एव नदन्तं समुद्रवद्वरुणवदाचरन्तम् । 'विनर्दि साम्न' इति प्रक्रम्य 'तान् सर्वानेव सेवेत वारुणं त्वेव वर्जयेद्'[१] इति छान्दोग्योक्तेः । तद्भाष्यादावपि, 'वरुणस्य तु विस्वरः' । भिन्नकांस्यध्वनिवत् इति वचनात् । **विस्फुरन्तं** इतस्तत उद्गच्छन्तम् ।। ७५ ।।

**प्रगृह्य तरसा दोर्भ्यां कण्ठं तस्य वृकोदरः ।**
**अपीडयत कृष्णायास्तदा कोपोपशान्तये ।। ७६ ।।**

**अथ तं भग्नसर्वाङ्गं व्याविद्धनयनाम्बरम् ।**
**आक्रम्य स कटीदेशे जानुना कीचकाधमम् ।**
**अपीडयत बाहुभ्यां पशुमारममारयत् ।। ७७ ।।**

व्याविद्धानि विपर्यस्तानि नयने अम्बरं वस्त्रं च यस्य तम् । **कटीदेशे** श्रोणीप्रदेशे । 'कटीरश्च कटी चापि कटिश्चेति निगद्यते' इति द्विरूपकोशात् । **पशुमारममारयत्** । 'उपमाने कर्मणि च'[२] इति णमूलम् । पशुं यथा मारयन्ति तथाऽमारदित्यर्थः ।।७७।।

**तं विषीदन्तमाज्ञाय कीचकं पाण्डुनन्दनः ।**
**भूतले भ्रामयामास वाक्यं चेदमुवाच ह ।। ७८ ।।**

**अद्याहमनृणो भूत्वा भ्रातुर्भार्यापहारिणम् ।**
**शान्तिं लब्धास्मि परमां हत्वा सैरन्ध्रि कण्टकम् ।।७९।।**

---

१. छान्दोग्यभाष्ये ।

२. पा.सू. (३/४/४५)

हे **सैरन्ध्रि कण्टकं** । **भ्रातुर्भार्यापहारिणम्** । ज्येष्ठत्वात् धर्मस्य तद्भार्येत्युक्तिः । तदपहारिणं तदिच्छुम् । **शान्तिं निर्वृतिं लब्धास्मि** ॥ ७९ ॥

**इत्येवमुक्त्वा पुरुषप्रवीरस्तं कीचकं क्रोधसरागनेत्रः ।**
**आस्रस्तवस्त्राभरणं स्फुरन्तमुद्भ्रान्तनेत्रं व्यसुमुत्ससर्ज ॥८०॥**

क्रोधेन सरागे नेत्रे यस्य सः । आस्रस्तानि वस्त्राभरणानि यस्य तम् । **स्फुरन्तं** अनन्तरं **उद्भ्रान्ते** व्यत्यस्ते नेत्रे यस्य तम् । **व्यसुं** विगता असवो यस्मात् तं **उत्ससर्ज** ॥ ८० ॥

**निष्पिष्य पाणिना पाणिं सन्दष्टौष्ठपुटो बली ।**
**समाक्रम्य च सङ्क्रुद्धो बलेन बलिनां वरः ॥ ८१ ॥**

**निष्पिष्य** पीडयित्वा । **समाक्रम्य** गृहीत्वा ॥ ८१ ॥

**तस्य पादौ च पाणी च शिरो ग्रीवां च सर्वशः ।**
**काये प्रवेशयामास पशोरिव पिनाकधृक् ॥ ८२ ॥**

**काये** मध्यदेहे । गुदद्वारेण पशोः तरक्षोर्वा गजस्य वा **पिनाकधृक्** अजगवधारी रुद्रः ॥ ८२ ॥

**तं सम्मथितसर्वाङ्गं मांसपिण्डोपमं कृतम् ।**
**[1]कृष्णायै दर्शयामास भीमसेनो महाबलः ॥ ८३ ॥**

**मांसपिण्डोपमं कृतं** मांसपिण्डोपमत्वेन कृतम् । **कृष्णायै** कृष्णाम् ॥ ८३ ॥

**उवाच च महातेजा द्रौपदीं योषितां वराम् ।**
**पश्यैनमेहि पाञ्चालि कामुकोऽयं यथा कृतः ॥ ८४ ॥**

---

१. कृष्णाया । (इति गी. पाठः)

एवमुक्त्वा महाराज भीमो भीमपराक्रमः ।
पादेन पीडयामास तस्य कायं दुरात्मनः ॥ ८५ ॥

**पीडयामास** लोलयामास ॥ ८५ ॥

ततोऽग्निं तत्र प्रज्वाल्य दर्शयित्वा तु कीचकम् ।
पाञ्चालीं स तदा वीर इदं वचनमब्रवीत् ॥ ८६ ॥

**तत्र प्रज्वाल्येत्यत्र** प्रह्नेत्यादिपिङ्गलनागसूत्रात् संयुक्ते प्रे परतः त्रौ लघुः पठनीयः । ज्वलनं ज्वालः तत्करोतीति णिच् । ततो धातुत्वादुपसर्गेण समासः । तेन प्रज्वाल्येतिशङ्कानवकाशः ॥ ८६ ॥

प्रार्थयन्ति सुकेशान्ते ये त्वां शीलगुणान्विताम् ।
एवं ते भीरु वद्ध्यन्ते कीचकः शोभते यथा ॥ ८७ ॥

**प्रार्थयन्ति** प्रार्थयन्ते गतं **शोभत** इत्युपहासः ॥ ८७ ॥

तत् कृत्वा दुष्करं कर्म कृष्णायाः प्रियमुत्तमम् ।
तथा स कीचकं हत्वा गत्वा रोषस्य वै शमम् ॥ ८८ ॥

**दुष्करं कर्म** बलिना कीचकेन युद्धरूपम् । **तथा** तं **हत्वा** च **रोषस्य शमं गत्वा** ॥ ८८ ॥

आमन्त्र्य द्रौपदीं कृष्णां क्षिप्रमायान्महानसम् ।
कीचकं घातयित्वा तु द्रौपदी योषितां वरा ।
प्रहृष्टा गतसन्तापा सभापालानुवाच ह ॥ ८९ ॥

**आमन्त्र्य** तव च प्रयोजनं जातं गच्छामीत्युक्त्वा । सभापालान् ईषद्दूरे स्थितान् ॥८९॥

कीचकोऽयं हतः शेते गन्धर्वैः पतिभिर्मम ।
परस्त्रीकामसम्मत्तस्तत्रागच्छत पश्यत ॥ ९० ॥

**तच्छ्रुत्वा भाषितं तस्या नर्तनागाररक्षिणः ।**
**सहसैव समाजग्मुरादायोल्काः सहस्रशः ॥ ९१ ॥**

**उल्काः** उल्मुका परिभ्रमणेन प्रकाशिका इति तदानयनोपयोगः । 'उल्का स्यान्निर्गतज्वाला' इत्यमरः ॥ ९१ ॥

**ततो गत्वाऽथ तद् वेश्म कीचकं विनिपातितम् ।**
**गतासुं ददृशुर्भूमौ रुधिरेण समुक्षितम् ॥ ९२ ॥**

**समुक्षितं** सिक्तम् ॥ ९२ ॥

**पाणिपादविहीनं तु दृष्ट्वा च व्यथिता भवन् ।**
**निरीक्षन्ति ततः सर्वे परं विस्मयमागताः ॥ ९३ ॥**

**भवन्** अभवन् ॥ ९३ ॥

**अमानुषं कृतं कर्म तं दृष्ट्वा विनिपातितम् ।**
**क्वास्य ग्रीवा क्व चरणौ क्व पाणी क्व शिरस्तथा ।**
**इति तां पर्यपृच्छन्त गन्धर्वेण हतं तदा ॥ ९४ ॥**

**॥ इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि द्वाविंशोऽध्यायः ॥**

**अमानुषं कृतं कर्म** मांसपिण्डीकरणरूपं निरैक्षत । ततः परं विस्मयमागताः सन्तः निपातितं दृष्ट्वा पर्यपृच्छन्तेत्यन्वयः ॥ ९४ ॥

**॥ इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां द्वाविंशोऽध्यायः ॥**

*****

# २३. त्रयोविंशोऽध्यायः

( भीमसेनकर्तृकोपकीचकानां वधः । )

**वैशम्पायन उवाच -**

**तस्मिन् काले समागम्य सर्वे तत्रास्य बान्धवाः ।**
**रुरुदुः कीचकं दृष्ट्वा परिवार्य समन्ततः ॥ १ ॥**

**अस्य** कीचकस्य ॥ १ ॥

**सर्वे संहृष्टरोमाणः सन्त्रस्ताः प्रेक्ष्य कीचकम् ।**
**तथा सम्भिन्नसर्वाङ्गं कूर्मं स्थल इवोद्धृतम् ॥ २ ॥**

**सम्भिन्नसर्वाङ्गं** सङ्कोचितसर्वावयवम् । **उद्धृतं** नीरात् । स्थितं कूर्ममिव तस्यापि तादृशावयवत्वात् ॥ २ ॥

**पोथितं भीमसेनेन तमिन्द्रेणेव दानवम् ।**
**संस्कारयितुमिच्छन्तो बहिर्नेतुं प्रचक्रमुः ॥ ३ ॥**

**प्रचक्रमुः** प्रचक्रमिरे ॥ ३ ॥

**ददृशुस्ते ततः कृष्णां सूतपुत्राः समागताः ।**
**अदूरादनवद्याङ्गीं स्तम्भमालिङ्ग्य तिष्ठतीम् ॥ ४ ॥**

**तिष्ठतीं** तिष्ठन्तीम् । **स्तम्भमालिङ्ग्य** इत्यनेन युष्माकमप्यैतज्जातीयमेव वधसाधनमिति दर्शयतीति ध्वन्यते ॥ ४ ॥

**समवेतेषु सर्वेषु तामूचुरुपकीचकाः ।**
**हन्यतां शीघ्रमसती यत्कृते कीचको हतः ॥ ५ ॥**

**समवेतेषु** मिलितेषु । तामुद्दिश्यान्यान् प्रत्यूचुः ॥ ५ ॥

**अथवा नैव हन्तव्या दह्यतां कामिना सह ।**
**मृतस्यापि प्रियं कार्यं सूतपुत्रस्य सर्वथा ॥ ६ ॥**

**कामिना** एतदभिलाषवता । **प्रियम्** । एतत्संयोजनरूपम् ॥ ६ ॥

**ततो विराटमूचुस्ते कीचकोऽस्याः कृते हतः ।**
**सहानेनाद्य दह्येत तदनुज्ञातुमर्हसि ॥ ७ ॥**

एतत् **कार्यं** न राज्ञः आज्ञां विना कर्तव्यमिति तत्प्रार्थयन्तो **तत इति** ॥ ७ ॥

**पराक्रमं तु सूतानां मत्वा राजाऽन्वमोदत ।**
**सैरन्ध्र्याः सूतपुत्रेण सह दाहं विशाम्पतिः ॥ ८ ॥**

**पराक्रमं** परमत्यन्तमक्रमः पराक्रमः तम् । **सह दाहं मत्वा** अपि **राजा पराक्रमं** ज्ञात्वा **अन्वमोदत** । हरवरप्राप्तम् । 'सर्वे वराच्छङ्करस्य ह्यवध्याः'[1] इति श्रीमन्महाभारततात्पर्यनिर्णयोक्तेः ॥ ८ ॥

**तां समासाद्य वित्रस्तां कृष्णां कमललोचनाम् ।**
**मोमुह्यमानां ते तत्र जगृहुः कीचका भृशम् ॥ ९ ॥**

स्वभावतः कमललोचनापि कृष्णेदानीं कमलं जलं लोचनयोर्यस्याः सेति तथा ताम् । 'सलिलं कमलं जलम्' इत्यमरः । **मोमुह्यमानां** पुनर्मोहं प्राप्नुवतीम् ॥९॥

**ततस्तु तां समारोप्य निबद्ध्य च सुमध्यमाम् ।**
**जग्मुरुद्यम्य ते सर्वे श्मशानाभिमुखास्तदा ॥ १० ॥**

**उद्यम्य** उद्धृत्य ॥ १० ॥

---

१. म.भा.ता.नि (२३/२७)

**ह्रियमाणा तु सा राजन् सूतपुत्रैरनिन्दिता ।**
**प्राक्रोशन्नाथमिच्छन्ती कृष्णा नाथवती सती ।। ११ ।।**

येन नाथेन **नाथवती** तं नाथम् ।। ११ ।।

**द्रौपद्युवाच -**

**जयो जयन्तो विजयो जयत्सेनो जयद्बलः ।**
**ते मे वाचं विजानन्तु सूतपुत्रा नयन्ति माम् ।। १२ ।।**

जयादिपञ्चानामपि ग्रहणम् । गन्धर्वाः पतयो ममेति स्वोक्तपतिपञ्चकज्ञापनार्थम् । वस्तुतस्तु भीमं प्रत्येवेयमुक्तिः । नाथमिच्छन्तीति पूर्वमुक्तेः ।। १२ ।।

**येषां ज्यातलनिर्घोषो विस्फूर्जितमिवाशनेः ।**
**व्यश्रूयत महायुद्धे भीमघोषस्तरस्विनाम् ।। १३ ।।**

**येषां ज्यातलनिर्घोषः** स्फूर्जितमिव पर्वतोपरि पतितवज्रघोष इव । अशनेः भीमघोष इव च व्यश्रूयत । 'टुवो स्फूर्जा वज्रनिघोष' इति धातुव्याख्यानात् । भीमे भीमघोष इति वदन्ती । हे भीमेति सम्बोधितवतीति ज्ञेयम् । इत्यान्तरङ्गिको भावोऽवसेयः ।। १३ ।।

**रथघोषश्च बलवान् गन्धर्वाणां तरस्विनाम् ।**
**ते मे वाचं विजानन्तु सूतपुत्रा नयन्ति माम् ।। १४ ।।**

**वैशम्पायन उवाच -**

**तस्यास्ताः कृपणा वाचः कृष्णायाः परिदेवितम् ।**
**श्रुत्वैवाभ्यापतद्भीमः शयनादविचारयन् ।। १५ ।।**

**वाचः** त्वं मे वाचं विजानन्त्वित्युक्ताः । **परिदेवितं** च श्रुत्वा । **अभ्यपतत्** उत्पपात ।। १५ ।।

**भीमसेन उवाच -**

**अहं शृणोमि ते वाचं त्वया सैरन्ध्रि भाषिताम् ।**
**तस्मात् ते सूतपुत्रेभ्यो भयं भीरु न विद्यते ।। १६ ।।**

**अहं ते वाचं** त्वद्विषयिणीं त्वयाभाषितां वाचं **शृणोमि** । **ते** मे **वाचम्** । विजानन्त्वि-त्यस्यैकदेशप्रतीकग्रहणं ते वाचमिति वा । 'वाक्ये वाक्यैकदेशं प्रयुञ्जानाश्च दृश्यन्ते यथा प्रविश पिण्डीं भक्षय' इति महाभाष्योक्तेः । **तस्मात्** तद्वचनस्य मया श्रुत-त्वात् । त्वं **न विद्** अज्ञासि । अहं **यते** । तर्हि प्रकाशः स्यादित्यतोऽप्याह – **नेति** ।। वित् ज्ञानं यथा न भवेत् तथा यत इति ।। १६ ।।

**वैशम्पायन उवाच -**

**इत्युक्त्वा स महाबाहुर्विजजृम्भे जिघांसया ।**
**ततः स व्यायतं कृत्वा वेषं विपरिवर्त्य च ।। १७ ।।**

**विजजृम्भे** गात्रविनामं कृतवान् । **व्यायतं** अतिशयितं यथा भवति तथा । **वेषं परिवर्त्य** सूदं वेषं परित्यज्य इत्यर्थः । 'व्यायतं व्यापृते दीर्घे दृढे चातिशयेऽन्यवत्' इति विश्वः ।। १७ ।।

**अद्वारेणाभ्यवस्कन्द्य निर्जगाम बहिस्तदा ।**
**स भीमसेनः प्राकारादारुह्य तरसा द्रुमम् ।। १८ ।।**

**अद्वारेण** द्वारं विना बहिर्निर्जगाम । प्राकारात्किञ्चिद्द्रुममारुह्य ततोऽवस्कन्धं निपात्य ।। १८ ।।

**श्मशानाभिमुखः प्रायाद्यत्र ते कीचका गताः ।**
**स लङ्घयित्वा प्राकारं निःसृत्य च परोत्तमात् ।**
**जवेन पतितो भीमः सूतानामग्रतस्तदा ।। १९ ।।**

**चितासमीपे गत्वा स तत्रापश्यद्वनस्पतिम् ।**
**तालमात्रं महास्कन्धं मूर्धशुष्कं विशाम्पते ॥ २० ॥**

तालः प्रमाणमस्य **तालमात्रं** तालवृक्षपरिमितम् । 'मात्रश्च' इत्यव्ययः । **मूर्धशुष्कं** इत्यनेन पत्रशातनप्रयासो नास्तीति सूचयति ॥ २० ॥

**तं नागवदुपक्रम्य बाहुभ्यां परिरभ्य च ।**
**स्कन्धमारोपयामास दशव्यामं परन्तपः ॥ २१ ॥**

**नागो** गजः । **बाहुभ्यां परिरभ्य** अनन्तरम् । **उपक्रम्य** उत्पाद्य ॥ २१ ॥

**स तं वृक्षं दशव्यामं सस्कन्धविटपं बली ।**
**प्रगृह्याभ्यद्रवत् सूतान् दण्डपाणिरिवान्तकः ॥ २२ ॥**

**दश व्यामाः** हस्तचतुष्टयात्मकपरिमाणविशेषा यस्य तम् । 'व्यामो बाह्वोः सकरयोस्तिर्यगन्तरम्' इत्यमरः ॥ २२ ॥

**ऊरुवेगेन तस्याथ न्यग्रोधाश्वत्थकिंशुकाः ।**
**भूमौ निपतिता वृक्षाः संहतास्तत्र[१] शेरते ॥ २३ ॥**

**निपातिताः** सन्तः **संहताः** मिलिताश्च सन्तः **तत्र** भूमौ **शेरते** सुषुपुरिव ॥२३॥

**तं सिंहमिव सङ्क्रुद्धं दृष्ट्वा गन्धर्वमागतम् ।**
**वित्रेसुः सर्वतः सूता विषादभयकम्पिताः ॥ २४ ॥**

भीमं **गन्धर्वं** दृष्ट्वा तत्त्वेन मत्वा **सर्वतः** सर्वे **वित्रेसुः** अतिशयेन भीताः । वाजृ इति एत्वाभ्यां लोपौ । पूर्वमेव **विषादभयकम्पिताः** । भ्रातृमरणनिमित्तविषादः क्लेशः भयं गन्धर्वागमनसम्भावनाजन्यम् । ताभ्यां कम्पिताः ॥ २४ ॥

---

१. वृक्षाः सङ्घशस्तत्र (इति गी. पाठः)

[१]तमन्तकमिवायान्तं गन्धर्वं प्रेक्ष्य ते तदा ।
दिधक्षन्तस्तदा ज्येष्ठभ्रातरं ह्युपकीचकाः ।
परस्परमथोचुस्ते विषादभयकम्पिताः ।। २५ ।।

**गन्धर्वं** प्रेक्ष्य गतम् । **दिधक्षन्तः** दग्धुमिच्छन्तः ।। २५ ।।

गन्धर्वो बलवानेति क्रुद्ध उद्यम्य पादपम् ।
सैरन्ध्री मुच्यतां शीघ्रं यतो नो भयमागतम् ।। २६ ।।

ते तु दृष्ट्वा तदाऽऽविद्धं भीमसेनेन पादपम् ।
विमुच्य द्रौपदीं तत्र प्राद्रवन्नगरं प्रति ।। २७ ।।

**यतः** यदानयनात् । **आविद्धं** भ्रामितम् । **तत्र** चितासमीपे ।। २७ ।।

द्रवतस्तांस्तु सम्प्रेक्ष्य स वज्री दानवानिव ।
शतपञ्चाधिकं भीमः प्राहिणोद्यमसादनम् ।। २८ ।।

**सः भीम** इत्यन्वयः ।। २८ ।।

वृक्षेणैतेन राजेन्द्र प्रभञ्जनसुतो बली ।
तत आश्वासयत् कृष्णां स विमुच्य विशाम्पते ।। २९ ।।

**प्रभञ्जनो**[२] वायुः । **विमुच्य** मोचयित्वा ।। २९ ।।

उवाच च महाबाहुः पाञ्चालीं तत्र द्रौपदीम् ।
अश्रुपूर्णमुखीं दीनां दुर्धर्षः स वृकोदरः ।। ३० ।।

**तत्र द्रौपदीम्** इत्यत्र वृत्ताविच्छित्यै त्रो लघुः पठनीयः ।। ३० ।।

---

१. अयं श्लोकः गी. पाठे न पठ्यते ।

२. नभस्वद्वातपवनपवमानप्रभञ्जनाः । - इत्यमरः ।

**एवं ते भीरु वद्ध्यन्ते ये त्वां क्लिश्यन्त्यनागसम् ।**
**प्रैहि त्वं नगरं कृष्णे न भयं विद्यते तव ॥ ३१ ॥**

भीरुशब्दोऽयमुकारान्तः । **क्लिश्यन्ति** क्लेशयन्ति । **अनागसं** निरपराधम् । **प्रैहि** गच्छ ॥ ३१ ॥

**अन्येनाहं गमिष्यामि विराटस्य महानसम् ।**
**जगाम नगरं भूयः सिंहो हत्वा मृगानिव ॥ ३२ ॥**

**अन्येन** पथा ॥ ३२ ॥

**वैशम्पायन उवाच -**

**पञ्चाधिकं शतं यच्च निहतं तत्र भारत ।**
**महावनमिव च्छिन्नं शिश्ये विगलितद्रुमम् ॥ ३३ ॥**

**छिन्नं** अत एव **विगलितद्रुमं महावनमिव** शिश्ये ॥ ३३ ॥

**एवं ते निहता राजन् शतं पञ्च च कीचकाः ।**
**स च सेनापतिः पूर्वमित्येतत् सूतषट्शतम् ॥ ३४ ॥**

**सेनापतिः स** कीचकः **षट्शतं** षडधिकशतम् । **निहताः** ॥ ३४ ॥

**तद्दृष्ट्वा महदाश्चर्यं नरा नार्यश्च सङ्गताः ।**
**विस्मयं परमं गत्वा नोचुः किञ्चन भारत ॥ ३५ ॥**

**॥ इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि त्रयोविंशोऽध्यायः ॥**

**विस्मयं** गर्वराहित्यम् । 'स्मयो गर्वेऽद्भुते' इति विश्वः ॥ ३५ ॥

**॥ इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां त्रयोविंशोऽध्यायः ॥**

*****

# २४. चतुर्विंशोऽध्यायः

( द्रौपद्या बृहन्नलया सुदेष्णया च सह वार्तालापः )

**वैशम्पायन उवाच -**

**ते दृष्ट्वा निहतान् सूतान् राज्ञे गत्वा न्यवेदयन् ।**
**गन्धर्वैर्निहता राजन् सूतपुत्रा महाबलाः ॥ १ ॥**

भीत्या एकद्वित्रादिविवेकाभावाद् **गन्धर्वैर्निहतान्** इत्युक्तिः ॥ १ ॥

**यथा वज्रेण वै दीर्णं पर्वतस्य महच्छिरः ।**
**व्यतिकीर्णाः प्रदृश्यन्ते तथा सूता महीतले ॥ २ ॥**

**दीर्णं** विदारितम् । **व्यतिकीर्णाः** विप्रकीर्णाः ॥ २ ॥

**सैरन्ध्री च विमुक्ताऽसौ पुनरायाति ते गृहम् ।**
**सर्वं संशयितं राजन् नगरं ते भविष्यति ॥ ३ ॥**

**सर्वं** नगरं तत्स्थो जनः । **संशयितम्** । उक्तावनुक्तौ वा किं भवेदिति संशय-ग्रस्तम् ॥ ३ ॥

**यथारूपा च सैरन्ध्री गन्धर्वाश्च महाबलाः ।**
**पुंसामिष्टश्च विषयो मैथुनाय न संशयः ॥ ४ ॥**

**यथा** सम्यग्**रूपा** यस्याः सा तथा । 'निवृत्तिमार्गः कथित आदौ भगवता यथा'[१] इति श्रीमद्भागवतोक्तेः । **विषयः** स्त्र्यात्मकः ॥ ४ ॥

**यथा सैरन्ध्रिदोषेण न ते राजन्निदं पुरम् ।**
**विनाशमेति वै क्षिप्रं तथा नीतिर्विधीयताम् ॥ ५ ॥**

---

१. श्रीमद्भागवते (६/१/१)

**यथा** विनाशं नैति तथा **क्षिप्रं** विधीयताम् ।। ५ ।।

**तेषां तद्वचनं श्रुत्वा विराटो वाहिनीपतिः ।**
**अब्रवीत् क्रियतामेषां सूतानां परमक्रिया ।। ६ ।।**

**क्रिया** संस्कारः ।। ६ ।।

**एकस्मिन्नेव ते सर्वे सुसमिद्धे हुताशने ।**
**दह्यतां कीचका शीघ्रं रत्नैर्गन्धैश्च सर्वशः ।। ७ ।।**

ननु कथमेकस्मिन्नग्नौ बहूनां दाह इत्यतः **सुसमिद्ध इत्युक्तम्** । अत्यन्तदीप्त इत्यर्थः । यद्यप्येकस्मिन्नग्नौ सर्वेषां दाहो निषिद्धः । तथाऽपि तेषां सर्वेषां परदारप्रसक्तिदोषेण हतत्वादात्मघातित्वेन पतितत्वात् पतितानां च यत्र क्व वा नदीतोये प्रक्षेपः कार्यस्तदभावादेकस्मिन्नेवाग्नौ प्रक्षिप्ता इति ज्ञेयम् । अत एवोक्तं ब्रह्मपुराणे-

नागानां विप्रियं कुर्वन् दग्धश्चाप्यथ विद्युता ।
निगृहीतः स्वयं राज्ञा चौर्यदोषेण कुत्रचित् ।
परदारानुमन्तुश्च दोषात् तत्पतिभिर्हताः ।। – इत्यारभ्य,
'महापातकिनो ये च पतितास्ते च कीर्तिताः'[१] इति ।। ७ ।।

**सुदेष्णामब्रवीद्राजा महिषीं जातसाध्वसः ।**
**सैरन्ध्रीमागतां ब्रूया ममैव वचनादिदम् ।। ८ ।।**

**जातसाध्वसः** उत्पन्नभीतिः ।। ८ ।।

**गच्छ सैरन्ध्रि भद्रं ते यथाकामं वरानने ।**
**बिभेति राजा सुश्रोणि गन्धर्वेभ्यः पराभवात् ।। ९ ।।**

---

१. बृहन्नारदीयेऽपि (४७/८५-९०) पठ्यते ।

इदमिति प्रपञ्चयति– **गच्छेति** ।। ९ ।।

**नहि त्वामुत्सहे वक्तुं स्वयं गन्धर्वरक्षिताम् ।**
**स्त्रियास्त्वदोषस्तां वक्तुमतस्त्वां प्रब्रवीम्यहम् ।। १० ।।**

**हि त्वां** हातुं योग्याम् । 'कृत्यार्थे तवैकेन्केन्यत्वनः'[१] इति त्वन् । जहातेश्चेति दित्वम् आर्षम् । एतादृशीमपि **वक्तुं नोत्सहे** यतो **गन्धर्वरक्षिताम्** । तर्हि स दोषो ममापि - स्यादत आह–**स्त्रिया इति** ।। **अदोषः** स्त्रीत्वादेव सम्भाषणे दोषाभावः । **त्वाम्** अन्यां त्वद्भिन्नां यादृशतादृशयोषिद्व्यक्तिमपि **वक्तुं नोत्सहे,** किमु स्वयं **गन्धर्वरक्षिताम्** इति वा । 'त्वांत्वावन्यपर्यायौ । इत्युक्तेः' । 'ब्रह्मा त्वो वदति जातविद्याम्'[२] इत्यादेः ।। १० ।।

**वैशम्पायन उवाच -**

**अथ मुक्ता भयात् कृष्णा सूतपुत्रान् निरस्य च ।**
**मोक्षिता भीमसेनेन जगाम नगरं प्रति ।। ११ ।।**

**निरस्य** मारयित्वा ।। ११ ।।

**त्रासितेव मृगी बाला शार्दूलेन मनस्विनी ।**
**गात्राणि वाससी चैव प्रक्षाल्य सलिलेन सा ।। १२ ।।**

त्रासितमृगीव विद्यमाना **मनस्विनी** पीडापरिहारात् प्रशस्तचित्ता । **गात्राणि** अवयवान् । **प्रक्षाल्य** स्थिताऽभूत् ।। १२ ।।

**तां दृष्ट्वा पुरुषा राजन् प्राद्रवन्त दिशो दश ।**
**गन्धर्वाणां भयत्रस्ताः केचिद्दृष्ट्वा न्यमीलयन् ।। १३ ।।**

---

१. पा.सू. (३/४/१४) ।
२. ऋग्वेदे (१०/७१/११)

**प्राद्रवन्त** दुद्रुवुः । **गन्धर्वाणां भयत्रस्ताः** गन्धर्वसम्बन्धिभयसाधनाद्भीताः **न्यमीलयन्** लोचनानि ।। १३ ।।

**ततो महानसद्वारि भीमसेनमवस्थितम् ।**
**ददर्श राजन् पाञ्चाली यथा मत्तं महाद्विपम् ।। १४ ।।**

**तं विस्मयन्ती शनकैः सञ्ज्ञाभिरिदमब्रवीत् ।**
**गन्धर्वराजाय नमो येनास्मि परिमोचिता ।। १५ ।।**

**विस्मयन्ती** विस्मयमाना **सञ्ज्ञाभिः** सङ्केतैः **अस्मि** अहम् ।। १५ ।।

**भीमसेन उवाच -**

**ये पुरा विहरन्तीह पुरुषा वशवर्तिनः ।**
**तस्यास्ते वचनं श्रुत्वा अनृणा विहरन्त्वतः ।। १६ ।।**

**ये पुरुषा** यस्यास्तव **वशवर्तिनो** भूत्वा **इह विहरन्ति पुरा** विजह्रुः ते **तस्यास्ते वचनं** गन्धर्वराजाय नम इत्येतद्रूपं **श्रुत्वा अनृणाः** कृतत्वत्कार्यत्वेन न ऋणरहिताः सन्तः **अतः** परं **विहरन्तु** ।। १६ ।।

**वैशम्पायन उवाच -**

**ततः सा नर्तनागारे धनञ्जयमपश्यत ।**
**राज्ञः कन्या विराटस्य नर्तयानं महाभुजम् ।। १७ ।।**

**विराटस्य राज्ञः** ।। १७ ।।

**ततस्ता नर्तनागाराद्विनिष्क्रम्य सहार्जुनाः ।**
**कन्या ददृशुरायान्तीं क्लिष्टां कृष्णमनागसम् ।। १८ ।।**

ताः **कन्या** इत्यन्वयः । **क्लिष्टां** कीचकैः क्लेशिताम् ।। १८ ।।

**कन्या ऊचुः -**

**दिष्ट्या सैरन्ध्रि मुक्तासि दिष्ट्यासि पुनरागता ।**
**दिष्ट्या विनिहताः सूता ये त्वां क्लिश्यन्त्यनागसम् ॥१९॥**

**बृहन्नलोवाच -**

**कथं सैरन्ध्रि मुक्तासि कथं पापाश्च ते हताः ।**
**इच्छामि वै तव श्रोतुं सर्वमेतद्यथातथम् ॥ २० ॥**

**तव** त्वत्तः । **यथातथं** याथातथ्येन ॥ २० ॥

**सैरन्ध्र्युवाच -**

**बृहन्नले किं नु तव सैरन्ध्र्या कार्यमद्य वै ।**
**या त्वं वससि कल्याणि सदा कन्यापुरे सुखम् ॥ २१ ॥**

**अद्य** सद्यः यस्मात् त्वं कन्यापुरे सुखं यथा तथा **वससि** तस्मात् तस्यास्तव **सैरन्ध्र्या किं नु** कार्यमित्यन्वयः ॥ २१ ॥

**नहि दुःखं समाप्नोषि सैरन्ध्री यदुपाश्नुते ।**
**तेन मां दुःखितामेवं पृच्छसि प्रहसन्निव ॥ २२ ॥**

**यदुपाश्नुते** अनुभवति । तद् **दुःखं न हि समाप्नोषि** जानासि । **तेन** अज्ञानेन । **प्रहसन्निव** इति पुल्लिङ्गनिर्देशोऽभ्यासपाटवेन तदभिव्यक्तिदिनस्याल्पीयस्त्वेन वेति ज्ञेयम् । एवमुत्तरत्रार्जुनवचनेऽपि ॥ २२ ॥

**बृहन्नलोवाच -**

**बृहन्नलाऽपि कल्याणि दुःखमाप्नोत्यनुत्तमम् ।**
**तिर्यग्योनिगता बाले न चैनामवबुद्ध्यसे ॥ २३ ॥**

**अनुत्तमं** असदृशम् । **तिर्यग्योनिगता** तद्वत् । **एनां नावबुद्ध्यसे** तद्दुःखं न जानासीति भावः ।। २३ ।।

**त्वया सहोषिता चास्मि त्वं च सर्वैः सहोषिता ।**
**क्लिश्यन्त्यां त्वयि सुश्रोणि को नु दुःखं न चिन्तयेत् ।।२४।।**

सहोषितायां पाण्डवगृहे **सर्वैः** कङ्कादिभिः । **को नु** गतम् ।। २४ ।।

**नतु केनचिदत्यन्तं कस्यचिद्धृदयं क्वचित् ।**
**वेदितुं शक्यते नूनं तेन मां नावबुद्ध्यसे ।। २५ ।।**

**केनचित्** इति सामान्योक्तिः पुरुषेण । **कस्यचित्** पुरुषस्य **हृदयं** मनः । **तेन** कारणेन ।। २५ ।।

**वैशम्पायन उवाच -**

**ततः सहैव कन्याभिर्द्रौपदी राजवेश्म तत् ।**
**प्रविवेश सुदेष्णायाः समीपमुपगामिनी ।। २६ ।।**

**उपगामिनी** सती **राजवेश्म प्रविवेश** ।। २६ ।।

**तामब्रवीद्राजपुत्री विराटवचनादिदम् ।**
**सैरन्ध्रि गम्यतां शीघ्रं यत्र कामयसे गतिम् ।। २७ ।।**

**राजपुत्री** गतम् । कैकेयी **गतिं** गमनम् ।। २७ ।।

**राजा बिभेति ते भद्रे गन्धर्वेभ्यः पराभवात् ।**
**त्वं चापि तरुणी सुभ्रु रूपेणाप्रतिमा भुवि ।**
**पुंसामिष्टश्च विषयो गन्धर्वाश्चातिकोपनाः ।। २८ ।।**

**ते** त्वत्तः । ते त्वदीयेभ्यो **गन्धर्वेभ्यः** । तरुणी । 'नञ्स्नञी..'[१] इत्यादिभ्यो ङीप् । **विषयः** स्त्रीरूपः ।। २८ ।।

**सैरन्ध्र्युवाच -**

**त्रयोदशाहमात्रं मे राजा क्षमतु भामिनि ।**
**कृतकृत्या भविष्यन्ति गन्धर्वास्ते न संशयः ।। २९ ।।**

त्रयोदशानां अह्नां समाहारस्त्रयोदशाहः । स एव तन्मात्रं अत एव 'अह्नोऽह्न...'[२] इति नाह्नादेशः । **क्षमतु** क्षमताम् ।। २९ ।।

**ततो मामुपनेष्यन्ति करिष्यन्ति च ते प्रियम् ।**
**ध्रुवं च श्रेयसा राजा योक्ष्यते सह बान्धवैः ।। ३० ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि कीचकवधपर्वणि चतुर्विंशोऽध्यायः ।।**

**योक्ष्यते** एष्यत्कालिकश्रेयःपात्रं भविष्यतीत्यर्थः ।। ३० ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां चतुर्विंशोऽध्यायः ।।**

## ।। इति कीचकवधपर्व ।।

*****

---

१. नञ्स्नञीककूख्युंस्तरुणतलुनानामुपसङ्ख्यानम् । वार्तिकम् ।

२. अह्नोऽह्न एतेभ्यः । - पा.सू. (५/४/८८)

# ४. गोहरणपर्व

## २५. पञ्चविंशोऽध्यायः

( दुर्योधनदूतैः तस्य संनिधौ कीचकवधवृत्तान्तादिश्रावणम् । )

**वैशम्पायन उवाच -**

**कीचकस्य तु घातेन सानुजस्य विशाम्पते ।**
**अत्याहितं चिन्तयित्वा व्यस्मयन्त पृथग्जनाः ॥ १ ॥**

**अत्याहितं** महाभीतिं एष्यन्तीं **चिन्तयित्वा** । 'अत्याहितं महाभीतिः कर्म जीवानपेक्षि च' इत्यमरः । एवमेव विश्वः । **पृथग्जनाः** मूर्खाः 'पृथग्जनः स्मृतौ नीचे मूर्खे च' इति विश्वः ॥ १ ॥

**तस्मिन् पुरे जनपदे सञ्जल्पोऽभूच्च सङ्घशः ।**
**शौर्याद्धि वल्लभो राज्ञो महासत्त्वः स कीचकः ॥ २ ॥**

**सङ्घशः** सङ्घे सङ्घे । वीप्सायां शस् । **सञ्जल्पो** जल्पनम् ॥ २ ॥

**आसीत् प्रहर्ता सैन्यानां दारामर्षी च दुर्मतिः ।**
**स हतः खलु पापात्मा गन्धर्वैर्दुष्टपूरुषः ॥ ३ ॥**

**सैन्यानां प्रहर्ता** तृजन्तः । गतम् । **दारामर्षी** परेति पूरणीयम् ॥ ३ ॥

**इत्यजल्पन् महाराज परानीकविनाशनम् ।**
**देशे देशे मनुष्याश्च कीचकं दुष्प्रधर्षणम् ॥ ४ ॥**

एतादृशं **कीचकम्** । उद्दिश्य **इति** पूर्वोक्तप्रकारेणाजल्पत् ॥ ४ ॥

**अथ वै धार्तराष्ट्रेण प्रयुक्ता ये बहिश्चराः ।**
**मृगयित्वा बहून् ग्रामान् राष्ट्राणि नगराणि च ॥ ५ ॥**

**धार्तराष्ट्रेण प्रयुक्ता ये बहिश्चराः** इत्यनुवादेन वादोऽप्यूह्यः । **ग्रामान्** विप्रप्रधानावसथान्। 'समौ संवसथग्रामौ' इत्यमरः । **राष्ट्राणि** देशान् । **नगराणि** पत्तनानि ॥५॥

**संविधाय यथादृष्टं यथा देशप्रदर्शनम् ।**
**कृतकृत्या न्यवर्तन्त ते चरा नगरं प्रति ॥ ६ ॥**

**यथादिष्टं** स्वस्वामिना यथाऽऽज्ञप्तम् । **तथा देशप्रदर्शनं संविधाय** कृत्वा **कृतकृत्याः** आज्ञप्तदेशमध्ये मार्गणीयस्थलान्तराभावादिति भावः । **नगरं** नागपुरं **प्रति न्यवर्तन्त** ॥ ६ ॥

**तत्र दृष्ट्वा तु राजानं कौरव्यं धृतराष्ट्रजम् ।**
**द्रोणकर्णकृपैः सार्धं भीष्मेण च महात्मना ॥ ७ ॥**

**सङ्गतं भ्रातृभिश्चापि त्रिगर्तैश्च महारथैः ।**
**दुर्योधनं सभामध्ये आसीनमिदमब्रुवन् ॥ ८ ॥**

**सङ्गतं** मिलितम् ॥ ८ ॥

**चरा ऊचुः -**

**कृतोऽस्माभिः परो यत्नस्तेषामन्वेषणे सदा ।**
**पाण्डवानां मनुष्येन्द्र तस्मिन् महति कानने ॥ ९ ॥**

**महति कानने तेषामन्वेषणे परो यत्नः कृतः** ॥ ९ ॥

**निर्जने मृगसङ्कीर्णे नानाद्रुमलताकुले ।**
**लताप्रतानबहुले नानागुल्मसमावृते ॥ १० ॥**

**निर्जने** जनरहिते। यद्यपि सभापर्वणि द्वितीयवारं द्यूतप्रस्तावे 'त्रयोदशं च सजने'[१] वसध्वं इति जनसङ्कुलप्रदेश एवाज्ञातवाससमयबन्धात् निर्जने तदन्वेषणमनर्थकमिति। तथापि तत्पदन्यासाद्यन्वेषणपूर्वकं तन्निवासान्वेषणस्य कर्तव्यत्वाद् विजने तदन्वेषणं नानुपपन्नम्। यद् वक्ष्यति 'मार्गमाणाः पदन्यासम्' (२५/११) इति। **लताप्रतानबहुले**। लतानां प्रतानोऽत्र विस्तारः स बहुलो यस्मिन् तस्मिन्। गुल्मः स्तम्बः 'अप्रकाण्डे स्तम्बगुल्मौ' इत्यमरः ।। १० ।।

**नच विद्मो गता येन पार्था सुदृढविक्रमाः।**
**मार्गमाणाः पदन्यासं तेषु तेषु तथा तथा ।। ११ ।।**

**येन** मार्गेण **पार्थाः** पृथासम्बन्धिनः पुत्रा इति यावत्। **तेषु तेषु** देशेषु। **तथा तथा** त्वदुक्तव्यत्यासेन ।। ११ ।।

**गिरिकूटेषु तुङ्गेषु नानाजनपदेषु च।**
**जनाकीर्णेषु देशेषु कटकेषु[२] पुरेषु च ।। १२ ।।**

**गिरिकूटेषु** तच्छृङ्गेषु **कटकेषु** परराजधानीषु। 'कटकं राजधानीनितम्बयोः' इति विश्वः। 'कटकोऽस्त्री' इति मेदिनी ।। १२ ।।

**नरेन्द्र बहुशोऽन्विष्टा नैव विद्मश्च पाण्डवान्।**
**अत्यन्तं वा विनष्टास्ते भद्रं तुभ्यं नरर्षभ ।। १३ ।।**

**अन्विष्टाः** अन्वेषिताः। वाशब्दोऽवधारणे। **अत्यन्तं विनष्टाः** मृता एव। 'चतुर्थी चाशिषि....'[३] इति भद्रशब्दयोगे तुभ्यमिति चतुर्थी ।। १३ ।।

---

१. म.भा. सभापर्वणि (७६/१३)

२. खर्वटेषु। (इति गी. पाठः)

३. चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः। - पा.सू. (२/३/७३)

**वर्त्मन्यन्वेष्यमाणे वै रथिनां रथिसत्तम ।**
**नहि विद्मो गतिं तेषां वासं हि नरसत्तम ॥ १४ ॥**

**रथिनां** पाण्डवानां **वर्त्मनि अन्वेष्यमाणे** सति । **गतिं** एतन्नगरं प्रति गता इति तद्गमनं निवासं वा ॥ १४ ॥

**किञ्चित् काले मनुष्येन्द्र सूतानामनुगा वयम् ।**
**मृगयित्वा यथान्यायं विदितार्थाः स्म तत्त्वतः ॥ १५ ॥**

किञ्चिदित्यखण्डमव्ययं कालविशेषणम् । **सूतानां** पाण्डवसूतानामिन्द्रसेनादीनाम् । **अनुगाः** अनुसृत्य गताः । **विदितार्थाः** अन्तरङ्गतया विदिततदभिप्रायाः ॥ १५ ॥

**प्राप्ता द्वारवतीं सूता विना पार्थैः परन्तप ।**
**न तत्र कृष्णा राजेन्द्र पाण्डवाश्च महाव्रताः ॥ १६ ॥**

**विना पार्थैः** । 'पृथग्विना...'[१] इति तृतीया । **तत्र** द्वारवत्याम् । महान्ति व्रतानि येषां ते **महाव्रताः** प्राक् । अधुना तु दुर्योधनादिबोधनविडम्बनमात्रमिदमिति विग्रहो युक्त इति ध्येयम् । महतां व्रतं येषां ते महाव्रताः । 'महदात्वे घासकर...'[२] इत्यादि वार्तिकोक्तघासाद्यन्यतमत्वाभावेऽपि वैय्यधिकरण्येऽपि 'श्रुतिर्निरूचे' इत्यात्वं ज्ञेयम् । तथाहि - 'सा तन्महाव्रतस्य महाव्रतत्वं महव्रतो व्रतम्' इतीति प्रथमाष्टकपराय द्वितीयपादीय...... ॥ १६ ॥

**सर्वथा विप्रणष्टास्ते नमस्ते भरतर्षभ ।**
**नहि विद्मो गतिं तेषां वासं वाऽपि महात्मनाम् ॥ १७ ॥**

---

१. पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम् । पा.सू. (२/३/३२)

२. महदात्वे घासकरविशिष्टेषूपसङ्ख्यानं पुंवद्भावश्च - वार्तिकम् ।

**नमस्ते** 'नमः स्वस्ति....'[१] इति चतुर्थी ॥ १७ ॥

**पाण्डवानां प्रवृत्तिं च विद्मः कर्मापि वा कृतम् ।**
**स नः शाधि मनुष्येन्द्र अत ऊर्ध्वं विशाम्पते ॥ १८ ॥**

**स** त्वम् ॥ १८ ॥

**अन्वेषणे पाण्डवानां भूयः किं करवामहे ।**
**इमां च नः प्रियां वीर वाचं भद्रवतीं शृणु ॥ १९ ॥**

**भद्रवतीं** मङ्गलवतीम् ॥ १९ ॥

**येन त्रिगर्ता निहता बलेन महता नृप ।**
**सूतेन राज्ञो मत्स्यस्य कीचकेन बलीयसा ॥ २० ॥**

**मत्स्यस्य** राज्ञः तत्सम्बन्धिना तच्छ्यालेनेति यावत् । **बलीयसा** कीचकेन वा **महता बलेन** सैन्येन सहिता अपि **त्रिगर्ता निहताः** ॥ २० ॥

**स हतः पतितः शेते गन्धर्वैर्निशि भारत ।**
**अदृश्यमानैर्दुष्टात्मा भ्रातृभिः सह सोदरैः ॥ २१ ॥**

**अदृश्यमानैः** जनैः **दुष्टात्मा** कीचकः **भ्रातृभिः** उपकीचकैः । पितृव्यपुत्रत्व॰ यावृत्तये **सोदरैः** इत्युक्तिः । अपत्यसामान्यप्रतिपत्तिनिरासाय **भ्रातृभिः** इति । सोदरैः गन्धर्वा अस्मानपि निहनिष्यन्ति वा किमिति ससंशयैः । 'उदरं संशयः प्रोक्तः परिनिष्ठा तु निश्चयः' [२]इति तात्पर्योक्तेः ॥ २१ ॥

**प्रियमेतदुपश्रुत्य शत्रूणां च पराभवम् ।**
**कृतकृत्यश्च कौरव्य विधत्स्व यदनन्तरम् ॥ २२ ॥**

**॥ इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि पञ्चविंशोऽध्यायः ॥**

---

१. नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च । - पा.सू. (२/३/१६)

२. भागवततात्पर्ये (२/१/९)

**शत्रूणां** कीचकानाम् । **अनन्तरं यत्** कार्यं तद् **विधत्स्व** कुरु ।। २२ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां पञ्चविंशोऽध्यायः ।।**

*****

# २६. षड्विंशोऽध्यायः

**( दुर्योधनेन सदस्यैः सह परमार्शस्तत्र कर्णदुःशासनयोरभिप्रायः )**

**वैशम्पायन उवाच -**

**ततो दुर्योधनो राजा ज्ञात्वा तेषां वचस्तदा ।**
**चिरमन्तर्मना भूत्वा प्रत्युवाच सभासदः ।। १ ।।**

**चिरम्** अन्तरेव मनो यस्य ध्यानपर इत्यर्थः । यद्वा **अन्तर्मना** दुर्मना इत्यर्थः । 'दुर्मना विमना अन्तर्मनाः स्याद्' इत्यमरः ।। १ ।।

**सुदुःखा खलु कार्याणां गतिर्विज्ञातुमन्ततः ।**
**तस्मात् सर्वे निरीक्षध्वं क नु ते पाण्डवा गताः ।। २ ।।**

**सु** अत्यन्तं **दुःखं** यया सा । **गतिः** स्थितिः **अन्ततः** निश्चयेन । **निरीक्षध्वं** आलोचयत ।। २ ।।

**अल्पावशिष्टं कालस्य गतभूयिष्ठमन्ततः ।**
**तेषामज्ञातचर्यायामस्मिन् वर्षे त्रयोदशे ।। ३ ।।**

**अस्मिन् त्रयोदशे वर्षे** या अज्ञातचर्या तस्यां सङ्कल्पितोऽयं **कालः** तस्य **अल्पावशिष्टः** भावे क्तः । अल्पोऽवशेषोऽस्ति । **गतभूयिष्ठं** गतम् । स्वार्थे इष्टन् ।

'बहोर्लोपो भू च वहोः'[१] इति भूरादेशः । 'इष्ठस्य यिट् च'[२] इतीडागमः । 'पुरुहं पुरु भूयिष्ठम्' इत्यमरः । 'अल्पावशेषः कालोऽयं गतभूयिष्ठ एव च' इत्यपि ललितपाठः ।। ३ ।।

**अस्य वर्षस्य शेषं चेद्व्यतीयुरिह पाण्डवाः ।**
**निवृत्तसमयास्ते हि सत्यव्रतपरायणाः ।। ४ ।।**

यदि **व्यतीयुः** अतिक्रमेयुः । **समयः** सङ्केतः ।। ४ ।।

**क्षरन्त इव नागेन्द्राः सर्वे ह्याशीविषोपमाः ।**
**दुःखा भवेयुः संरब्धाः कौरवान् प्रति ते ध्रुवम् ।। ५ ।।**

**क्षरन्तः** दानोदकम् । दुःखयन्तीति **दुःखाः** पीडाकराः । **काले** अस्मिन्नेव समये ।। ५ ।।

**सर्वे कालस्य वेत्तारः कृच्छ्ररूपधराः स्थिताः ।**
**प्रविशेयुर्जितक्रोधास्तावदेव पुनर्वनम् ।। ६ ।।**

**कृच्छ्ररूपधराः** दुःखरूपधराः । **जितक्रोधाः** समयानतिवृत्तेः । **तावदेव** द्वादशवर्षात्मकम् ।। ६ ।।

**तस्मात् क्षिप्रं बभूषध्वं यथा तेऽत्यन्तमव्ययम् ।**
**राज्यं निर्द्वन्द्वमव्यग्रं निःसपत्नं चिरं भवेत् ।। ७ ।।**

**बुभूषध्वं** प्राप्तुमिच्छत । **यथा** येन प्रकारेण **राज्यं** मम **चिरं भवेत्** तथा **ते** यूयं **क्षिप्रं** बभूषध्वम् ।। ७ ।।

---

१. पा.सू. (६/४/१५८)
२. पा.सू. (६/४/१५९)

**अथाब्रवीत् ततः कर्णः क्षिप्रं गच्छन्तु भारत ।**
**अन्ये धूर्ततरा दक्षा निभृताः साधुकारिणः ॥ ८ ॥**

**धूर्ततराः** अत्यन्तवञ्चकाः । **निभृताः** दत्तवेतनाः । **साधुकारिणः** समीचीनकार्यकर्तारः ॥ ८ ॥

**चरन्तु देशान् संवीताः स्फीताञ्जनपदाकुलान् ।**
**यत्ता[१] गोष्ठीषु रम्यासु सिद्धप्रव्रजितेषु च ॥ ९ ॥**

**संवीता** च्छन्नाः । **स्फीतान्** अभिवृद्धान् **जनपदाकुलान्** जनसङ्कुलान् । 'भजेज्जनपदो जानपादोऽपि जनदेशयोः' इति मेदिनी । **यत्ताः** सन्नद्धाः । सावधाना इति यावत् । **रम्यासु गोष्ठीषु** धर्माद्याश्रितकथावत्परिषत्सु । सिद्धाः प्रव्रजिताः येषु तेषु ह्याश्रमेषु ॥ ९ ॥

**परिचारेषु तीर्थेषु विविधेष्वाकरेषु च ।**
**विज्ञातव्या मनुष्यैस्तैस्तर्कया सुविनीतया ॥ १० ॥**

परिवर्जितश्चारश्चरणं येभ्यस्तेषु **तीर्थेषु आकरेषु** खनिषु । **तर्कया** तर्केण ऊहेन लिङ्गमशिष्यम् । 'अध्याहारस्तर्क ऊहः । तर्कः काङ्क्षा वितर्के हि हेतुशब्देषु कीर्त्यते । तर्कः काङ्क्षाऽतितर्कोऽहचर्मभेदेषु' इत्यमरमेदिनीविश्वाः । **सुविनीतया** अव्यभिचारिण्या ॥ १० ॥

**विविधैस्तत्परैः सम्यक् तत्त्वज्ञैर्नयसंवृतैः[२] ।**
**अन्वेष्टव्याः सुनिपुणैः पाण्डवाश्छन्नवासिनः ॥ ११ ॥**

---

१. तत्र । (इति गी. पाठः)

२. तज्ज्ञैर्निपुणसंवृतैः । (इति गी. पाठः)

**विविधैः** नानावेषधारिभिः **सम्यक् तत्परैः** पाण्डवान्वेषणासक्तैः पूतैः तत्परैः पाण्डवीयैरिन्द्रसेनादिभिः **नयसंवृतैः** नीत्या च्छन्नैः । च्छन्नं वसन्तीति **च्छन्नवासिनः** ॥ ११ ॥

**नदीकुञ्जेषु तीर्थेषु ग्रामेषु नगरेषु च ।**
**आश्रमेषु च रम्येषु पर्वतेषु गुहासु च ॥ १२ ॥**

**नदीकुञ्जेषु** नदीप्रान्तं गतलतादिपिहितस्थाने 'निकुञ्जकुञ्जौ वा क्लीबे लतादिपिहितोदरे'। **तीर्थेषु** अवतारदेशेषु । 'तीर्थं अवतारर्षिजुष्टाम्बु' इति विश्वः ॥ १२ ॥

**अथाग्रजानन्तरजः पापभावेऽनुरागवान् ।**
**ज्येष्ठं दुःशासनस्तत्र भ्राता भ्रातरमब्रवीत् ॥ १३ ॥**

**अथ** कर्णवचनानन्तरम् । **अग्रजानन्तरजः** । दुर्योधनाव्यवहितानुजः । **पापभावे** पापाभिप्राये अनुरागोऽस्यास्तीति । तथा **दुःशासनः ज्येष्ठं भ्रातरं अब्रवीत्** ॥ १३ ॥

**येषु नः प्रत्ययो राजंश्चारेषु मनुजाधिप ।**
**ते यान्तु दत्तदेया वै भूयस्तान् परिमार्गितुम् ॥ १४ ॥**

**प्रत्ययो** विश्वासः **दत्तदेयाः** दत्तपाथेयाः ॥ १४ ॥

**एतच्च कर्णो यत् प्राह सर्वमिच्छामहे तथा ।**
**यथोद्दिष्टं चराः सर्वे मृगयन्तु यतस्ततः ॥ १५ ॥**

**यत्कर्णः प्राह, एतत्सर्वं** वयमपि **इच्छामहे** इच्छामः । तदेव विशदयति– **यथेति** ॥ **उद्दिष्टं** आज्ञप्तम् । **यतो** यत्र वर्तन्ते **ततः** तत्र **मृगयन्तु** ॥ १५ ॥

**एते चान्ये च भूयांसो देशाद्देशं यथाविधि ।**
**नतु तेषां गतिर्वासः प्रवृत्तिश्चोपलभ्यते ।। १६ ।।**

**एते** पुरःस्थिताः **देशद्देशं** प्रतिदेशं **तेषां** पाण्डवानाम् ।। १६ ।।

**अत्यन्तं वा निगूढास्ते पारं चोर्मिमतो गताः ।**
**व्यालैश्चापि महारण्ये भक्षिताः शूरमानिनः ।। १७ ।।**

**ऊर्मिमतः** समुद्रस्य । यवादित्वात् 'मादुपधायाः' [1] इति नवत्वम् । **व्यालैः** सर्पैः । अजगरैः दुर्दन्तिभिः श्वापदैर्वा । 'व्यालो भुजङ्गमे क्रूरे श्वापदे दुष्टदन्तिनि' इति विश्वः । सिंहैर्वा 'व्यालः श्वापदसिंहयोः' इति मेदिनी । शूरा इति मानो गर्वो येषामस्तीति णिनिः ।। १७ ।।

**अथवा विषमं प्राप्य विनष्टाः शाश्वतीः समाः ।**
**तस्मान्मानसमव्यग्रं कृत्वा त्वं कुरुनन्दन ।**
**कुरु कार्यं महोत्साहं मन्यसे यन्नराधिप ।। १८ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि षड्विंशोऽध्यायः ।।**

**विषमं** स्थानं कालं वा **प्राप्य विनष्टाः** । **अव्यग्रं** सावधानम् । **शाश्वतीः समाः** बहुसंवत्सरान् । **कार्यं कुरु** । **यत्** कर्तुं **मन्यसे** ।। १८ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां षड्विंशोऽध्यायः ।।**

*****

---

१. मादुपधायाश्च मतोर्वोऽयवादिभ्यः । - पा.सू. (८/२/९)

# २७. सप्तविंशोऽध्यायः

( द्रोणाचार्यकर्तृकस्वाभिप्रायकथनम् )

**वैशम्पायन उवाच -**

**अथाब्रवीन्महावीर्यो द्रोणस्तत्त्वार्थदर्शिवान् ।**
**न तादृशा विनश्यन्ति न प्रयान्ति पराभवम् ॥ १ ॥**

तत्त्वार्थं दर्शयतीति **तत्त्वार्थदर्शिवान्** । दृशेर्णिजन्ताद् कसुप्रत्ययः । द्वित्वाभाव आर्षः ॥ १ ॥

**शूराश्च कृतविद्याश्च बुद्धिमन्तो जितेन्द्रियाः ।**
**धर्मज्ञाश्च कृतज्ञाश्च धर्मराजमनुव्रताः ॥ २ ॥**

**कृतविद्याः** शिक्षितविद्याः ॥ २ ॥

**नतधर्मार्थतत्त्वज्ञं पितृवच्च समाहितम् ।**
**धर्मे स्थितं सत्यधृतिं ज्येष्ठं ज्येष्ठानुयायिनः ॥ ३ ॥**

पित्रा तुल्यं **पितृवत्** । **समाहितं** स्थितम् । **ज्येष्ठानुयायिनः** वृद्धसेविनः । 'ज्येष्ठः श्रेष्ठे च वृद्धे च' इति विश्वः । ज्येष्ठभ्रातरमित्यन्वयः ॥ ३ ॥

**अनुव्रता महात्मानं भ्रातरं भ्रातरो नृप ।**
**अजातशत्रुं श्रीमन्तं सर्वभ्रातॄननुव्रतम् ॥ ४ ॥**

**अनुव्रतं** वात्सल्येन तदनुकूलम् ॥ ४ ॥

**तेषां तथा विधेयानां निभृतानां महात्मनाम् ।**
**किमर्थं नीतिमान् पार्थः श्रेयो नैषां करिष्यति ॥ ५ ॥**

तेषामन्तःकलहेनास्मदभीष्टसिद्धिः स्यादित्याह– **तेषामिति** ।। **विधेयानां** वचने स्थितानाम् । **निभृतानां** रक्षितानाम् । एषां चतुर्णां श्रेयः किमर्थं न करिष्यति । तत्र हेतुः– **नीतिमानिति** ।। ५ ।।

**तस्माद् यत्नात् प्रतीक्षन्ते कालस्योदयमागतम् ।**
**न हि ते नाशमृच्छेयुरिति पश्याम्यहं धिया ।। ६ ।।**

**आगतं** आगच्छन्तम् । आगतम् । **नाशं न ऋ च्छेयुः** न प्राप्नुयुः इति वा **पश्यामि** आलोचयामि ।। ६ ।।

**साम्प्रतं चैव यत् कार्यं तच्च क्षिप्रमकालिकम् ।**
**क्रियतां साधु सञ्चिन्त्य वासश्चैषां प्रचिन्त्यताम् ।। ७ ।।**

**साम्प्रतम्** इदानीं **यत्कार्यं तच्चाकालिकम्** । काले दीर्घे भवं **कालिकं** त्वरितं यथा भवति तथा **साधु सञ्चिन्त्य क्षिप्रं क्रियताम्** । **प्रचिन्त्यतां** विचार्यताम् ।। ७ ।।

**यथावत् पाण्डुपुत्राणां सर्वार्थेषु धृतात्मनाम् ।**
**दुर्ज्ञेयाः खलु शूरास्ते दुरापास्तपसा वृताः ।। ८ ।।**

**पाण्डुपुत्राणां** निवास इत्यन्वयः । दुर्ज्ञेयत्वादयो गुणा सर्वसाधारणाः ।। ८ ।।

**शुद्धात्मा गुणवान् पार्थः सत्यवान् नीतिमांच्छुचिः ।**
**तेजोराशिरसङ्ख्येयो गृह्णीयादपि चक्षुषा ।। ९ ।।**

तत्र धर्मराजगुणजातमाह– **शुद्धेति** ।। **'तेजोराशिरसङ्ख्येयः'** इत्यत्रासङ्ख्येयत्वम् । 'विशेष्ये बाधितं **सद्विशेषणे**' । 'तेजस्यन्वेति नित्यं' 'सर्वगतः स्थाणुः'[१] 'दीप्ता-

१. भगवद्गीता (२/२४)

नलार्कद्युतिमप्रमेयम्'[१] इत्यत्र यथा नित्यत्वं सर्वगतत्वे विशेषणम्, अप्रमेयत्वं द्युतिविशेषणम्, तद्वत् । यद्वा यः युधिष्ठिरः असङ्घत्ये युद्धाभावे चक्षुषा **गृह्णीयात्** स्वप्रभया तिरस्कुर्यादिति फलितोऽर्थः ।। ९ ।।

**विज्ञाय क्रियतां तस्माद्भूयश्च मृगयामहे ।**

**ब्राह्मणैश्चारकैः सिद्धैर्ये चान्ये तद्विदो जनाः ।। १० ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि सप्तविंशोऽध्यायः ।।**

**विज्ञाय** फलपर्यवसायीदमिति । विनिश्चित्य कार्यं **क्रियताम्** । तदेवाह– **भूय** इति ।। १० ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां सप्तविंशोऽध्यायः ।।**

*****

# २८. अष्टाविंशोऽध्यायः

**( पाण्डवानुसन्धानविषये भीष्मेण स्वाभिप्रायकथनम् )**

**वैशम्पायन उवाच -**

**ततः शान्तनवो(ऽ)भीष्मो भरतानां पितामहः ।**

**श्रुतवान् देशकालज्ञस्तत्त्वज्ञः सर्वधर्मवित् ।। १ ।।**

**अभीष्मः** सौम्यः भीष्म इत्युत्तरेणान्वयः । 'दारुणं भीषणं भीष्मम्' इत्यमरः । **श्रुतवान्** कृतागमश्रवणः । **तत्त्वज्ञः**[२] ब्रह्मस्वरूपज्ञः ।। १ ।।

---

१. भगवद्गीता (११/१७)

२. 'तत्त्वं तत्त्वविदेकात्मा' इति, 'ब्रह्मण्यो ब्रह्मकृद्ब्रह्मा ब्रह्म ब्रह्मविवर्धनः' इति च विष्णुसहस्रनामसु ।

**आचार्यवाक्योपरमे तद्वाक्यममभिसन्दधत् ।**
**हितार्थं समुवाचैनां भारतीं भारतान् प्रति ।। २ ।।**

**आचार्यवाक्योपरमे** द्रोणवाक्यसमाप्तौ । **तद्वाक्यम्** । द्रोणवाक्यं **अभिसन्दधत्** तद-र्थानुसन्धानेनानुकूलयन् । **भारतीं** भरतवंशीयं पाण्डवसम्बन्धिनीम् । 'वदत् तत्र गिरं' इत्युत्तरेणान्वयः । **भारतान्** दुर्योधनादीन् ।। २ ।।

**युधिष्ठिरे समायुक्तां[1] धर्मज्ञे धर्मसंवृताम् ।**
**असत्सु दुर्लभां नित्यं सतां चाभिमतां सदा ।। ३ ।।**

**युधिष्ठिरे** तद्विषये । **समायुक्ताम्** अत्यन्तयोग्याम् । **धर्मसंवृतां** तदुपबृंहिताम् । **नित्यमसत्सु दुर्लभाम्** ।। ३ ।।

**भीष्मः समं वदत् तत्र गिरं साधुभिरर्चिताम् ।**
**यश्चैष ब्राह्मणः प्राह द्रोणः सर्वार्थतत्त्ववित् ।। ४ ।।**

**समं** उभयोरपि समं यथा भवति तथा उवाचेत्यन्वयः । **वदत् तत्र गिरम्** । वद वदाचरन्तीति वदतः क्लीबता गच्छता । वदन्तश्च ते ते च वदते वदत् तान् । त्रायत इतिवत् अत्रासा च सा गीश्च तम् । सूक्तिरहितदुर्योधनादिप्राणहेतुभूतामित्यर्थः । 'वदो वदावदो वक्ता' इत्यमरः ।। ४ ।।

**सर्वलक्षणसम्पन्नाः साधुव्रतसमन्विताः ।**
**श्रुतवृत्तोपपन्नाश्च नानाश्रुतिसमन्विताः ।। ५ ।।**

समं श्रुतं शास्त्रोक्तं यद् वृत्तं तदुपपन्नाः । नानाविधानां श्रुतिस्मृत्यादीनां या श्रुतिः श्रवणं तत्समन्विताः ।। ५ ।।

---

१. समासक्ताम् । (इति गी पाठः)

**वृद्धानुशासने लग्नाः[१] सत्यव्रतपरायणाः ।**
**समयं समयज्ञास्ते पालयन्तः शुचिव्रताः ॥ ६ ॥**

**वृद्धानुशासने** तत्कर्तृकानुशासने **लग्नाः** सम्बद्धाः । **समयं** स्वकृतसङ्केतम् ॥६॥

**क्षत्रधर्मरता नित्यं [२]केशवानुमताः सदा ।**
**प्रवीरपुरुषास्ते वै महात्मानो महाबलाः ॥ ७ ॥**

**केशवस्य** श्रीकृष्णस्य **अनुमताः** सम्मताः ॥ ७ ॥

**नावसीदितुमर्हन्ति उद्वहन्तः सतां धुरम् ।**
**धर्मतश्चैव गुप्तास्ते सुवीर्येण च पाण्डवाः ॥ ८ ॥**

**अवसीदितुं** विषमस्थानादिना क्लेशं यातुम् । सीदादेशादिरार्षः । **उद्वहन्त** इति सन्ध्यभावो विवक्षाभावात् । **सतां धुरं** धर्मरूपाम् ॥ ८ ॥

**न नाशमधिगच्छेयुरिति मे धीयते मतिः ।**
**तत्र बुद्धिं प्रवक्ष्यामि पाण्डवान् प्रति भारत ॥ ९ ॥**

**धीयते** स्थीयते । [३]बुद्ध्यतेऽनयेति बुद्धिर्वाक्, ताम् ॥ ९ ॥

**न तु नीतिः [४]सुभीतस्य शक्यतेऽन्वेषितुं परैः ।**
**यत् तु शक्यमिहास्माभिस्तान् वै सञ्चिन्त्य पाण्डवान् ॥१०॥**

**सुभीतस्य** शोभनभीतिमतः । पुरुषस्य **नीतिः परैः** पुरुषैः **अन्वेषितुं न शक्यते** ॥ १० ॥

---

१. युक्ताः ( इति गी पाठः)

२. केशवानुगताः सदा (इति गी पाठः)

३. बुद्ध्यतेऽनयेति बुद्धिः । साङ्ख्यविषयो यया वाचा बुद्ध्यते सा वागभिहितेत्यर्थः ।
- इति गीताभाष्ये (२/३९)

४. सुनीतस्य (इति गी पाठः)

**बुद्ध्या प्रयुक्तं न द्रोहात् प्रवक्ष्यामि निबोध तत् ।**
**न त्वियं मादृशैर्नीतिः तस्य वाच्या कथञ्चन ॥ ११ ॥**

**तस्य** अन्वेषणस्य **नीतिः** । यद्वा **तस्य** धर्मराजस्य नीतिः नयः । **मादृशैर्न वाच्या** किन्तु सा **त्वियं नीतिः** ॥ ११ ॥

**सा त्वियं साधु वक्तव्या न त्वनीतिः कथञ्चन ।**
**वृद्धानुशासने तात तिष्ठता सत्यशालिना ॥ १२ ॥**

**साधु वक्तव्या** साधुभिरेव वक्तव्या । तस्याः नीतिस्तु नास्त्येवेति नैव वक्तव्या । मादृशैरिति विशिष्योक्तं सामान्येनाह– **वृद्धेति** ॥ १२ ॥

**अवश्यं त्विह वीरेण सतां मध्ये विवक्षता ।**
**यथार्हमिह वक्तव्यं सर्वथा धर्मलिप्सया ॥ १३ ॥**

**विवक्षता** वक्तुमिच्छुना ॥ **धर्मलिप्सया** धर्मेच्छया ॥ १३ ॥

**तत्र नाहं तथा मन्ये यथाऽयमितरो जनः ।**
**निवासं धर्मराजस्य वर्षेऽस्मिन् वै त्रयोदशे ॥ १४ ॥**

**इतरो जनः** दुःशासनादिः **यथा** जानाति अत्यन्तं वा निगूढास्ते विनष्टा इति । **नाहं तथा** धर्मराजस्य **निवासं मन्ये** ॥ १४ ॥

**तत्र तात न तेषां हि राज्ञां भाव्यमसाम्प्रतम् ।**
**पुरे जनपदे वाऽपि[१] यत्र राजा युधिष्ठिरः ॥ १५ ॥**

**यत्र** यदीये **पुरे जनपदे वा युधिष्ठिरो राजा** वर्तते । **तेषां राज्ञां असाम्प्रतम्** अयुक्तममङ्गलमिति यावत् । **न भाव्यम्** ॥ १५ ॥

---

१. चापि (इति गी पाठः)

**दानशीलो वदान्यश्च निभृतो ह्रीनिषेवकः ।**
**जनो जनपदे भाव्यो यत्र राजा युधिष्ठिरः ॥ १६ ॥**

**वदान्यः** चारुभाषी 'वदान्यो दानशीलः', 'स्याद्वदान्यश्चारुभाषिणि' इति विश्वमेदिन्यौ । **निभृतः** विनीतः । 'निभृतविनीतप्रश्रिताः समाः' इत्यमरः । **ह्रीनिषेवकः** अकार्यकरणे लज्जावान् । **यत्र युधिष्ठिरो राजा** तस्मिन् **जनपदे** जने एवं **भाव्यः** अवश्यम्भावी । 'आरावश्यके' इति ण्यत् ॥ १६ ॥

**प्रियवादी सदा दान्तो भव्यः सत्यपरो जनः ।**
**हृष्टः पुष्टः शुचिर्दक्षो यत्र राजा युधिष्ठिरः ॥ १७ ॥**

**सत्यपरः** सत्यवचनासक्तः ॥ १७ ॥

**नासूयको न चापीर्षुर्नाभिमानी न मत्सरी ।**
**भविष्यति जनस्तत्र स्वयं धर्ममनुव्रतः ॥ १८ ॥**

**असूयकः** परगुणेषु दोषारोपकः । **ईर्षुः** 'ईर्ष ईर्षायाम्' इत्यस्माद्बाहुलकादुः यकारलोपश्च । परोत्कर्षासहिष्णुः 'अक्षान्तिरीर्ष्या', 'असूया तु दोषारोपो गुणेष्वपि' इत्युभयत्रामरः । **नाभिमानी** गर्वरहितः । **न मत्सरी**[1] न मद्वशोऽसाविति चित्ततोद-रहितः । **स्वयं** राजशिक्षां विना । **धर्मं** सुकृतम् ॥ १८ ॥

**ब्रह्मघोषाश्च भूयांसः पूर्णाहुत्यस्तथैव च ।**
**क्रतवश्च भविष्यन्ति भूयांसो भूरिदक्षिणाः ॥ १९ ॥**

ब्रह्म वेदः पूर्णाहुत्य इति 'कृदिकाराद्'[2] इति ङीपि ईकारान्तता णिजन्तः । **भूरिदक्षिणाः** बहुदक्षिणाः सुवर्णदक्षिणाः वा । गतम् ॥ १९ ॥

---

१. 'अप्रीतिर्मद्वशो नायमिति मत्सर ईरितः ।' इति भागवततात्पर्ये (१/१८/२९)

२. कृदिकारादक्तिनः । - वार्तिकम् ।

**सदा च तत्र पर्जन्यः सम्यग्वर्षी न संशयः ।**
**सम्पन्नसस्या च मही निरातङ्का भविष्यति ।। २० ।।**

**सम्यग्वर्षी** कालंकालं वर्षी । **आतङ्कः** क्षुद्रोपद्रवः ।। २० ।।

**गुणवन्ति च धान्यानि रसवन्ति फलानि च ।**
**गन्धवन्ति च माल्यानि शुभशब्दा च भारती ।। २१ ।।**

**गन्धवन्ति** आमोदवन्ति । 'गन्धो गन्धक आमोदे सम्बन्धे' इति विश्वः । **माल्यानि** कुसुमानि माला वा । गतम् । शुभं शब्द्यत अनयेति **शुभशब्दा** मङ्गलप्रतिपादिका **भारती**[1] वाणी ।। २१ ।।

**वायुश्च सुखसंस्पर्शो निष्प्रतीपं च दर्शनम् ।**
**न भयं त्वाविशेत् तत्र यत्र राजा युधिष्ठिरः ।। २२ ।।**

**गावश्च बहुलास्तत्र न कृशा न च दुर्बलाः ।**
**पयांसि दधिसर्पींषि रसवन्ति हितानि च ।। २३ ।।**

**गावः बहुलाः संरब्धातः हितानि** पथ्यानि । अभिवृद्धानि च ।। २३ ।।

**गुणवन्ति च पेयानि भोज्यानि रसवन्ति च ।**
**तत्र देशे भविष्यन्ति यत्र राजा युधिष्ठिरः ।। २४ ।।**

**पेयानि** जलादीनि **गुणवन्ति** तत्रापेक्षितमाधुर्यादिगुणवन्ति ।। २४ ।।

**रसाः स्पर्शाश्च गन्धाश्च शब्दाश्चापि गुणान्विताः ।**
**दृश्यानि च प्रसन्नानि यत्र राजा युधिष्ठिरः ।। २५ ।।**

**गुणान्विताः** अत्र गुणशब्दः शुभधर्मपरः । **दृश्यानि** रूपाणि आकृतिरूपाणि **प्रसन्नानि** मनोहराणि ।। २५ ।।

---

१. 'वाग्वाणी भारती' इत्यमरः ।

**धर्माश्च तत्र सर्वैस्तु सेविताश्च द्विजातिभिः ।**
**स्वैः स्वैर्गुणैश्च संयुक्ता अस्मिन् वर्षे त्रयोदशे ॥ २६ ॥**

**संयुक्ताः** लोकाः ॥ २६ ॥

**देशे तस्मिन् भविष्यन्ति तात पाण्डवसंयुते ।**
**सम्प्रीतिमाञ्जनस्तत्र सन्तुष्टः शुचिरव्ययः ॥ २७ ॥**

**देवतातिथिपूजासु सर्वभावानुरागवान् ।**
**इष्टदानो महोत्साहः स्वस्वधर्मपरायणः ॥ २८ ॥**

सर्वभावेन सर्वप्रकारेण **अनुरागवान्** स्नेहवान् । **स्वस्वधर्मः** स्वस्ववर्णाश्रमोचित धर्मस्तत्परायणस्तदासक्तः ॥ २८ ॥

**अशुभाद्धि शुभप्रेप्सुरिष्टयज्ञः शुभव्रतः ।**
**भविष्यति जनस्तत्र यत्र राजा युधिष्ठिरः ॥ २९ ॥**

**अशुभात्** ल्यब्लोपनिमित्ता पञ्चमी । अशुभं विहाय **शुभप्रेप्सुः** । स्वयमशुभं सोढ्वाऽपि परशुभं प्रेप्सुरिति वा ॥ २९ ॥

**त्यक्तवाक्यानृतस्तात शुभकल्याणमङ्गलः ।**
**शुभार्थेप्सुः शुभमतिर्यत्र राजा युधिष्ठिरः ॥ ३० ॥**

**तात** तातेत्यनुकम्पातः ॥ ३० ॥

**भविष्यति जनस्तत्र नित्यं चेष्टप्रियव्रतः ।**
**धर्मात्मा शक्यते ज्ञातुं नापि तात द्विजातिभिः ॥ ३१ ॥**

**किं पुनः प्राकृतैस्तात पार्थो विज्ञायते कचित् ।**
**यस्मिन् सत्यं धृतिर्दानं परा शान्तिर्ध्रुवा क्षमा ॥ ३२ ॥**

**ह्रीः श्रीः कीर्तिः परं तेज आनृशंस्यमथार्जवम् ।**
**तस्मात् तत्र निवासं तु च्छन्ना यत्नेन धीमतः ।**
**गतिं च परमां तत्र नोत्सहे वक्तुमन्यथा ।। ३३ ।।**

**यस्मिन् देशे तत्स्थे** जने ये ते गुणाः वर्तन्ते तत्र तद्देशे **यत्नेन छन्ना धीमतः** । **निवासं परमां गतिं** च **धीमतो**ऽप्यहं धिया मतः सर्वसम्मतोऽप्यहमित्यर्थः । **वक्तुं नोत्सहे** । तत्रत्यानां सर्वेषां धर्माधर्मत्वादिविवेको दुःशक इति भावः ।।३२-३३।।

**एवमेतत् तु सञ्चिन्त्य यत्कृत्यं मन्यसे हितम् ।**
**तत् क्षिप्रं कुरु कौरव्य यद्येवं श्रद्दधासि मे ।। ३४ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि अष्टाविंशोऽध्यायः ।।**

**मे** मयि **श्रद्दधासि** विश्वासं करोषि ।। ३४ ।।

।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां अष्टाविंशोऽध्यायः ।।

*****

# २९. एकोनत्रिंशोऽध्यायः

( पाण्डवानुसन्धानविषये दुर्योधनविनिश्चयः )

**वैशम्पायन उवाच -**

**ततः शारद्वतो वाक्यमित्युवाच कृपस्तदा ।**
**युक्तं प्राप्तं च वृद्धेन पाण्डवान् प्रति भाषितम् ।। १ ।।**

**शारद्वतः** शरद्वत्पुत्रः कृप इत्यन्वयः । **युक्तं** शोभनं गतं । **प्राप्तं** समयोचितम् ।। १ ।।

**धर्मार्थसहितं श्लक्ष्णं तत्त्वतश्च सहेतुकम् ।**
**तत्रानुरूपं भीष्मेण ममाप्यत्र गिरं शृणु ॥ २ ॥**

**श्लक्ष्णं** मनोहरम् । **तत्त्वतः भीष्मेण** भाषितम् ॥ २ ॥

**तेषां चैव गतिं सूक्ष्मां वासं चैषां प्रचिन्त्यताम् ।**
**नीतिर्विधीयतां चापि साम्प्रतं याऽऽहिता भवेत् ॥ ३ ॥**

**तेषां** पाण्डवानां तां **सूक्ष्मां** अन्यैर्ज्ञातुमशक्यां **गतिं** गमनं वासं च प्रविचिन्त्य **नीतिर्विधीयताम्** । आ सम्यक् हितं पथ्यं यया सा **आहिता** । 'हिते धृते गते पथ्ये' इति विश्वः ॥ ३ ॥

**नावज्ञेयो रिपुस्तात प्राकृतोऽपि बुभूषता ।**
**किं पुनः पाण्डवास्तात सर्वास्त्रकुशला रणे ॥ ४ ॥**

**प्राकृतोऽपि** मूर्खोऽपि । **बुभूषता** भवितुमिच्छता । **नावज्ञेय** इति किं वक्तव्यमित्यर्थः । **पाण्डवास्तातसर्वास्त्रकुशला** इत्यन्तमेकं पदम् । सर्वन्तीति सर्वाः आता आगताश्चेति आतसर्वाः हिंसकाश्च आतसर्वाः अस्ताः आतसर्वा यैस्ता अस्तसर्वाः पाण्डवाश्च ते अस्तातसर्वाश्च ते अस्त्रकुशलाश्च पाण्डवास्तातसर्वास्त्रकुशलाःअतो न तातातिरेकः ।**पाण्डवास्तातेत्येकं वा पदम्**। पाण्डवैः अस्ताः पाण्डवास्ताः तैरतः प्राप्तः । तस्य सम्बुद्धिर्पाण्डवनिराकृतनर-सहवासिन् वा ॥ ४ ॥

**तस्मात् सत्रं प्रविष्टेषु पाण्डवेषु महात्मसु ।**
**गूढभावेषु च्छन्नेषु काले चोदयमागते ॥ ५ ॥**

**सत्रं** वेषान्तरम् । वनं वा । 'सत्रं यज्ञे सदादानच्छादनारण्यकैतवे'[१] इति भानुः । **गूढभावेषु च्छन्नेषु** इत्यत्रेच्छेति तुगभाव आर्षः । **प्रविष्टेषु गूढभावेषु** गूढा-

१. मेदिनी च ।

भिप्रायेषु । **च्छन्नेषु** अप्रकटेषु **काले** तदीये **उदयम्** अभ्युदयम् **आगते** प्राप्ते सति । स्वपरराष्ट्रेषु आत्मनः बलं ज्ञातव्यम् । अस्माकं सहायत्वेन के के आयास्यन्तीति विचारणीयम् ।। ५ ।।

**स्वराष्ट्रे परराष्ट्रे च ज्ञातव्यं बलमात्मनः ।**
**उदयः पाण्डवानां च प्राप्तकालो न संशयः ।। ६ ।।**

प्राप्तः कालोऽयं **प्राप्तकालः** ।। ६ ।।

**निवृत्तसमयाः पार्था महात्मानो महाबलाः ।**
**महोत्साहा भविष्यन्ति पाण्डवा ह्यमितौजसः ।। ७ ।।**

**महोत्साहा भविष्यन्ति** ।। ७ ।।

**तस्माद्बलं च कोषश्च नीतिश्चापि विधीयताम् ।**
**यथा कालोदये प्राप्ते सम्यक् तैः सन्दधामहे ।। ८ ।।**

'कोषः कीशः कोषः खड्गपिधानके । अर्थौघे जातिकोशे इति षड्'[1] इति विश्वः । **नीतिः** सैन्यमेलनपथा भवेत् तथा वेतनादिदानशान्तेः पाण्डवैः यदेतन्मयोक्तं सर्वं हितमिति मन्यसे, तर्हि प्रथमतः स्वबलं बुद्ध्यस्व ।। ८ ।।

**तात बुद्ध्याऽपि तत् सर्वं बुद्ध्यस्व बलमात्मनः ।**
**नियतं सर्वमित्रेषु बलवत्स्वबलेषु च ।। ९ ।।**

**सर्वमित्रेषु** शकुनिसैन्धवकर्णादिषु **नियतं** नियमेन विद्यमानं यत् **बलं** तद्बुद्ध्यस्व । **बलवत्सु** शल्यादिषु **अबलेषु** दुर्बलेषु साधारणेषु ।। ९ ।।

---

१. कोषोऽस्त्री कुड्मले पात्रे दिव्ये खड्गपिधानके ।
जातिकोशेऽर्थसङ्घाते पेश्यां शब्दादिसङ्ग्रहे । - इति मेदिनी

**उच्चावचं बलं ज्ञात्वा मध्यस्थं चापि भारत ।**
**प्रहृष्टमप्रहृष्टं च सन्दधामस्तथाऽपरैः ।। १० ।।**

**उच्चावचं** नैकभेदं । **बलं ज्ञात्वा प्रहृष्टं** युद्धोद्योगे । अथ अनन्तरम् । **सन्धानीयम्** सम्बन्धनीयम् । शरसन्धानं तद्बलिष्ठतायां सन्धानं वा कार्यम् । **अपरैः** पाण्डवैः ।। १० ।।

**साम्ना दानेन भेदेन दण्डेन बलिकर्मणा ।**
**न्यायेनाक्रम्य च परान् बलाच्चानम्य दुर्बलान् ।। ११ ।।**

सामभेददानानि तत्तद्बलिष्ठतायाम् । दण्डः शिक्षा । बलिकर्म करादानमिति स्वबलिष्ठतायां ज्ञेयम् । **न्यायेन** युक्त्या **परान्** प्रबलान् सैनिकान् । **बलात्** बलात्कारेण **आनम्य** । अमतत्वेनोमित्याधत्स्व । प्रह्वीकृत्वा बलं सैन्यं सुखं यथा तथा मृदुपूर्वमिति यावत् ।। ११ ।।

**सान्त्वयित्वा च मित्राणि बलं चाभाष्यतां सुखम् ।**
**सुकोषबलसंवृद्धः सम्यक् सिद्धिमवाप्स्यसि ।। १२ ।।**

**आभाष्यताम्** ।। १२ ।।

**योत्स्यसे चापि बलिभिररिभिः प्रत्युपस्थितैः ।**
**अन्यैस्त्वं पाण्डवैश्चापि हीनैश्च बलवाहनैः ।। १३ ।।**

**प्रत्युपस्थितैरन्यैरपि पाण्डवैः चापिभिर्हीनैः । चापि हीनैः बलवाहनैश्च** हीनैः **योत्स्यसे** ।। १३ ।।

**एवं सर्वं विनिश्चित्य व्यवसायं स्वधर्मतः ।**
**यथाकालं मनुष्येन्द्र चिरं सुखमवाप्स्यसि ।। १४ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि एकोनत्रिंशोऽध्यायः ।।**

**व्यवसायम्** उद्योगम् । **स्वधर्मतः** क्षत्रधर्मतः ।। १४ ।।

।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां एकोनत्रिंशोऽध्यायः ।।

*****

# ३०. त्रिंशोऽध्यायः

( सुशर्मकर्तृकदक्षिणगोग्रहणम् )

**वैशम्पायन उवाच -**

**अथ राजा त्रिगर्तानां सुशर्मा रथयूथपः ।**
**प्राप्तकालमिदं वाक्यमुवाच त्वरितो बली ।। १ ।।**

**असकृन्निकृतः पूर्वं मत्स्यशाल्वेयकैः प्रभो ।**
**सूतेन चैव मत्स्यस्य कीचकेन पुनःपुनः ।। २ ।।**

**असकृद्** बहुवारम् । **निकृतः** निराकृतः । **मत्स्यस्य सूतेन कीचकेन** तु **पुनःपुनः** अस्य कृतः ।। २ ।।

**बाधितो बन्धुभिः सार्धं बलाद्बलवता विभो ।**
**स कर्णमभ्युदीक्ष्याथ दुर्योधनमभाषत ।। ३ ।।**

**बाधितः** विलोडितः पीडित इति यावत् । **बलात्** सैन्यात् । **बलवता** तेन च बाधितः । **विभो** जनमेजय । स सुशर्मा । **कर्णमभ्युदीक्ष्य** निरीक्ष्य ।। ३ ।।

**असकृन्मत्स्यराज्ञा मे राष्ट्रं बाधितमोजसा ।**
**प्रणेता कीचकस्तस्य बलवानभवत् पुरा ।। ४ ।।**

**राष्ट्रं** मदीयं राष्ट्रस्थो जनः **प्रणेता** सेनापतिः ।। ४ ।।

[१]क्रोधामर्षी च दुष्टात्मा भुवि प्रख्यातविक्रमः ।
निहतः स तु गन्धर्वैः पापकर्मा नृशंसवान् ॥ ५ ॥

क्रोधश्चामर्षोऽसहिष्णुता च । क्रोधामर्षौ तावस्य तद्वति । तथा, 'द्वन्द्वान्ते श्रूयमाण....' इति उभयत्रान्वेति । **नृशंसवान्** स्वार्थे मतुप् । गतेरर्थत्वमिति यथा । नृशंसाः सहायत्वेनास्य सन्तीति तथेति वा ॥ ५ ॥

तस्मिन् विनिहते राजन् हतदर्पो निराश्रयः ।
भविष्यति निरुत्साहो विराट इति मे मतिः ॥ ६ ॥

**तस्मिन्** कीचके । **भविष्यति** ॥ ६ ॥

तत्र यात्रा मम मता यदि ते रोचतेऽनघ ।
कौरवाणां च सर्वेषां कर्णस्य च महात्मनः ॥ ७ ॥

क्रमाद्दिनेदिने । **ते** तुभ्यम् । **यदि रोचते** ॥ ७ ॥

एतत् प्राप्तमहं मन्ये कार्यमात्ययिकं हि नः ।
राष्ट्रं तस्याभियास्यामो बहुधान्यसमाकुलम् ॥ ८ ॥

**आत्ययिकम्** अत्यावश्यकम् । **प्राप्तं कार्यं अहं मन्ये** ॥ ८ ॥

आददामोऽस्य रत्नानि विविधानि वसूनि च ।
ग्रामान् राष्ट्राणि वा तस्य हरिष्यामो विभागशः ॥ ९ ॥

**अस्य** विराटस्य । **आददाम** स्वीकरवाम ॥ ९ ॥

अथवा गोसहस्राणि शुभानि च बहूनि च ।
विविधानि हरिष्यामः प्रतिपीड्य पुरं बलात् ॥ १० ॥

---

१. क्रूरामर्षी । (इति गी. पाठः)

**कौरवैः सह सङ्गत्य त्रिगर्तैश्च विशाम्पते ।**
**गास्तस्यापहरामोऽद्य सर्वैश्चैव सुसंहताः ।। ११ ।।**

यूयं वयं चेति विभागशः । **कौरवैः** त्वदीयैः । **त्रिगर्तैः** मदीयैः । तथाऽन्यैः सर्वैरपि सह ।। ११ ।।

**संविभागेन कृत्वा तु निबध्नीमोऽस्य पौरुषम् ।**
**हत्वा चास्य चमूं कृत्स्नां वशमेवानयामहे ।। १२ ।।**

**संविभागेन** भागद्वयेन बलं कृत्वा सुसङ्गताः सन्तः । तं **वशम् आनयामहे** । [१]वर्तमानसामीप्यात् तथा व्यपदेशः । स्वाधीनं करिष्यामः ।। १२ ।।

**तं वशे न्यायतः कृत्वा सुखं वत्स्यामहे वयम् ।**
**भवतां बलवृद्धिश्च भविष्यति न संशयः ।। १३ ।।**

**बलवृद्धिः** तस्यापि सेवकतया स्वसैन्याविष्टत्वेन ।। १३ ।।

**तच्छ्रुत्वा वचनं तस्य कर्णो राजानमब्रवीत् ।**
**सूक्तं सुशर्मणा वाक्यं प्राप्तकालं हितं च वः ।। १४ ।।**

**प्राप्तकालं** योग्यम् । तथावक्तारो न बहवः वाक्यान्यपि न बहूनीत्यप्याह- **सूक्तं सुशर्मणेति** ।। १४ ।।

**तस्मात् क्षिप्रं विनिर्यामो योजयित्वा वरूथिनीम् ।**
**विभज्य चाप्यनीकानि यथा वा मन्यसेऽनघ ।। १५ ।।**

**विनिर्यामः** एकीकृत्य विभज्य वा दक्षिणोत्तरभागतः ।। १५ ।।

**प्राज्ञो वा कुरुवृद्धोऽयं सर्वेषां नः पितामहः ।**
**आचार्यश्च यथा द्रोणः कृपः शारद्वतस्तथा ।। १६ ।।**

---

१. वर्तमानसामिप्ये वर्तमानवद्वा । पा.सू. (३/३/१३१)

पितामहो भीष्मः ॥ १६ ॥

मन्यन्ते ते यथा सर्वे तथा यात्रा विधीयताम् ।
सम्मन्त्र्य चाशु गच्छामः साधनार्थं महीपतेः ॥ १७ ॥

महीपतेः तव साधनार्थं कार्यसाधनार्थम् ॥ १७ ॥

किञ्च नः पाण्डवैः कार्यं हीनार्थबलपौरुषैः ।
अत्यन्तं वा प्रणष्टास्ते प्राप्ता वाऽपि यमक्षयम् ॥ १८ ॥

अर्थश्च बलं च पौरुषं च तानि । हीनानि अर्थबलपौरुषाणि येषां तैः ॥ १८ ॥

यामो राजन् निरुद्विग्ना विराटनगरं वयम् ।
आदास्यामो हि गास्तस्य विविधानि वसूनि च ॥ १९ ॥

निरुद्विग्नाः निर्भयाः ॥ १९ ॥

वैशम्पायन उवाच -

ततो दुर्योधनो राजा वाक्यमादाय तस्य तत् ।
वैकर्तनस्य कर्णस्य क्षिप्रमाज्ञापयत् स्वयम् ॥ २० ॥

शासने नित्यसंयुक्तं दुःशासनमनन्तरम् ।
सह वृद्धैस्तु सम्मन्त्र्य क्षिप्रं योजय वाहिनीम् ॥ २१ ॥

यथोद्देशं च गच्छामः सहितास्तत्र कौरवैः ।
सुशर्मा च यथोद्दिष्टं देशं यातु महारथः ॥ २२ ॥

त्रिगर्तैः सहितो राजा समग्रबलवाहनः ।
प्रागेव हि सुसंवीतो मत्स्यस्य विषयं प्रति ॥ २३ ॥

जघन्यतो वयं तत्र यास्यामो दिवसान्तरे ।
विषयं मत्स्यराजस्य सुसमृद्धं सुसंहताः ॥ २४ ॥

ते यान्तु सहितास्तत्र विराटनगरं प्रति ।
क्षिप्रं गोपान् समासाद्य गृह्णन्तु विपुलं धनम् ॥ २५ ॥

गवां शतसहस्राणि श्रीमन्ति गुणवन्ति च ।
वयमप्यनुगृह्णीमो द्विधा कृत्वा वरूथिनीम् ॥ २६ ॥

वैशम्पायन उवाच -

ते स्म गत्वा यथोद्दिष्टं दिशं वह्नेर्महीपते ।
सन्नद्धा रथिनः सर्वे सपदाता बलोत्कटाः ॥ २७ ॥

प्रति वैरं चिकीर्षन्तो गोषु गृद्धा महाबलाः ।
आदातुं गाः सुशर्माथ कृष्णपक्षस्य सप्तमीम् ॥ २८ ॥

अपरे दिवसे सर्वे राजन् सम्भूय कौरवाः ।
अष्टम्यां ते न्यगृह्णन्त गोकुलानि सहस्रशः ॥ २९ ॥

॥ इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि त्रिंशोऽध्यायः ॥

॥ इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां त्रिंशोऽध्यायः ॥

*****

# ३१. एकत्रिंशोऽध्यायः

( भीमसेनादिसहितस्य विराटस्य गोमोचनार्थं प्रस्थानम् )

**वैशम्पायन उवाच -**

**ततस्तेषां महाराज तत्रैवामिततेजसाम् ।**
**[१]छन्नलिङ्गप्रतिष्ठानां पाण्डवानां महात्मनाम् ॥ १ ॥**

**ततः** कीचकमरणानन्तरम् । **तत्रैव** विराटनगर एव । च्छन्नानि लिङ्गानि प्राक्तनानि येषां ते ते च ते । प्रविष्टाः पुरमिति ते तथा तेषाम् ॥ १ ॥

**व्यतीतः समयः सम्यग् वसतां [२]तत्र वै पुरे ।**
**कुर्वतां तस्य कर्माणि विराटस्य महीपतेः ॥ २ ॥**

**पुरे वसताम्** । तत्रैव **समयः** । त्रयोदशवर्षाज्ञातवाससङ्केतः । समयबन्ध इति वा । **सम्यक् व्यतीतः** । समीचीनादुद्भाविता सम्पूर्तिकथा नास्यदतामतिगमस्य सूचयति । नान्यत्र गमनमिति वक्तुं पुनस्तत्र वै इत्युक्तिः ॥ २ ॥

**कीचके तु हते राजा विराटः परवीरहा ।**
**परां सम्भावनां चक्रे कुन्तीपुत्रे युधिष्ठिरे ॥ ३ ॥**

**परवीरहा** । गतम् । आसां **चक्रे** य उपविष्टः भारं निदधाविति यावत् । पाक्षिक्यां परपरिसृतौ कङ्कादयोऽपि मम सहायं कुर्युस्तेन च जय एव भवेदिति **परां** प्राक्तोऽप्यतिशयिताम् । **सम्भावनाम्** सत्कारम् ॥ ३ ॥

---

१. छद्मलिङ्गप्रतिष्ठानाम् । (इति गी. पाठः)

२. वसतां वै पुरोत्तमे । (इति गी. पाठः)

**ततस्त्रयोदशस्यान्ते [१]वर्षस्य भरतर्षभ ।**
**सुशर्मणा गृहीतं तत् गोधनं तरसा बहु ॥ ४ ॥**

तस्य **त्रयोदशस्य** वत्सरस्यान्ते अवसाने जाते । **तत्** ग्राह्यत्वेन प्रोक्तेनालोचितम् ॥४॥

**ततो जवेन महता गोपः पुरमथाव्रजत् ।**
**स दृष्ट्वा मत्स्यराजं च रथात् प्रस्कन्द्य कुण्डली ॥ ५ ॥**

**गोपः** तद्रक्षकः **प्रस्कन्द्य** अवप्लुत्य ॥ ५ ॥

**शूरैः परिवृतं योधैः कुण्डलाङ्गदधारिभिः ।**
**[२]सदस्थं मन्त्रिभिः सार्धं पाण्डवैश्च महात्मभिः ॥ ६ ॥**

**सदस्थं** सभास्थम् । **महात्मभिः पाण्डवैः** चतुर्भिः **सार्धम्** इत्यन्वयः ॥ ६ ॥

**तं सभायां महाराजमासीनं राष्ट्रवर्धनम् ।**
**सोऽब्रवीदुपसङ्गम्य विराटं प्रणतस्तदा ॥ ७ ॥**

**प्रणतः** कृतप्रणामः ॥ ७ ॥

**अस्मान् युधि विनिर्जित्य परिभूय सबान्धवान् ।**
**गवां शतसहस्राणि त्रिगर्ताः कालयन्ति ते ॥ ८ ॥**

**विनिर्जित्य** । तथा त्वया स्थापितानुपरि परित्राणाय । तान् **सबान्धवान्** तावकान् **परिभूय** पराभाव्य । **त्रिगर्ताः** सुशर्मसम्बन्धिनः **कालयन्ति** इतो द्रावयन्ति । सर्वपारसवम् ॥ ८ ॥

**तान् परीप्सस्व राजेन्द्र मा नेशुः पशवस्तव ।**
**तच्छ्रुत्वा नृपतिः सेनां मत्स्यानां समयोजयत् ॥ ९ ॥**

---

१. तस्य वर्षस्य भारत । (इति गी. पाठः)

२. संवृतम् । (इति गी. पाठः)

यद्यपि तानीति वक्तव्यम् । तथाऽप्युत्तरत्रत्यपशुदृष्ट्या तानित्युक्तिः । यद्वा न गोसहस्रपरामर्शः । किन्तु बान्धवादिपरामर्शः । तत्त्राणाविनाभूतं गोत्राणमिति न तदनुक्तिदोषः । **परीप्सस्व** रक्षितुमिच्छा । **तव पशवः** । **मा नेशुः** नष्टा न भवेयुः । **मत्स्यानां नृपतिः** राजा ।। ९ ।।

**रथनागश्वकलिलां पत्तिध्वजसमाकुलाम् ।**
**राजानो राजपुत्राश्च तनुत्राण्यथ भेजिरे ।। १० ।।**

**अथ** सेनोद्योजनानन्तरम् । **तनुत्राणि** कवचानि ।। १० ।।

**भानुमन्ति विचित्राणि शूरसेव्यानि भागशः ।**
**सवज्रायसगर्भं तु कवचं तप्तकाञ्चनम् ।। ११ ।।**

**भानुमन्ति** किरणवन्ति । दीप्यमानानीति यावत् । 'दाभाभ्यां नुः' इति नुः । **भागशः** विभागशः । सामान्यतोऽभिधाय तत्तद्विशेषानभिधत्ते- **सवज्रेति** । वज्रवद्विद्यमानं यदयोच्छेद्यं तद्वज्रायसम् । जातिविशेषत्वादनुशमाय इति टच् तदात्मको गर्भो मध्यभागस्तेन सहितम् । काञ्चनं इतरत्सर्वम् । **सन्नाहाय सगर्भमिति** पाठे । सन्नाहाय सज्जीभवनाय । सगर्भं गर्भे । रयः कण्टकैः सहितम् । 'गर्भो भ्रूणेऽर्भके कुक्षौ सन्धौ पनसकण्टके' इति नानार्थरत्नमाला[१] । 'वज्रं स्यात् धीरके पवौ' इति च ।। ११ ।।

**विराटस्य प्रियो भ्राता शतानीकोऽभ्यहारयत् ।**
**सर्वपारसवं वर्म कल्याणपटलं दृढम् ।। १२ ।।**

**अभ्यहारयत्** । आहृतवान् बबन्धेति यावत् । सर्व्यन्ते हिंस्यन्त इति सर्वाः अरयः । पारं अरिशरीरपारं सुवन्तीति पारसवाः । पचाद्यच् । शस्त्राणि येन तत् ।

---

१. विश्वमेदिन्यौ च ।

तालव्यपाठे परांच्छृणाति 'शृ हिंसायाम्' 'आङ्परयोः खनिशृञ्भ्यां च' इत्युः । परशुखे । प्रज्ञाद्यण् । 'शस्त्रे पारशवो मतः'[१] इत्यमरः । **कल्याणपटलम्** । कल्याणं सुवर्णमेव पटलमाच्छादकं यस्य तत् । 'कल्याणमक्षये स्वर्णे' इति विश्वः । वैरिमङ्गलस्य पटलमिव पटलमिति तदाच्छादकमिति वा ।। १२ ।।

**शतानीकादवरजो मदिराक्षोऽभ्यहारयत् ।**
**शतसूर्यं शतावर्तं शतबिन्दु शताक्षिमत् ।। १३ ।।**

शतं **सूर्या** यस्मिंस्तत् । सौवर्णाः । एवमुत्तरत्रापि शतमावर्ताः अम्भसां भ्रमा इव मण्डलानि यस्मिंस्तत् । **शतं** बिन्दवोऽपि यस्मिंस्तत् । शतमक्षीणि तदाकाराय अस्य सन्तीति तत् ।। १३ ।।

**अभेद्यकल्पं मत्स्यानां राजा कवचमाहरत् ।**
**उत्सेधे यस्य पद्मानि शतं सौगन्धिकानि च ।। १४ ।।**

अभेद्यकल्पे । अभेद्येषु तत्त्वेन मतेषु कल्पम् । समर्थं दृढमिति यावत् । **उत्सेधे** उच्छ्राये । 'उत्सेधः काय उन्नतिः' इत्यमरः । एवमेव विश्वः । **पद्मानि शतम्** । **सौगन्धिकानि** कह्लाराणि । 'सौगन्धिकं तु कह्लारम्' इत्यमरः ।। १४।।

**सुवर्णपृष्टं सूर्याभं सूर्यदत्तोऽभ्यहारयत् ।**
**दृढमायसगर्भं च श्वेतं वर्म शताक्षिमत् ।। १५ ।।**

**सुवर्णपृष्टम्** । सूर्यस्याभेव भा यस्य तत् । **सूर्यदत्तो** विराटसुतः । **आयसगर्भम्** गतम् ।। १५ ।।

**विराटस्य सुतो ज्येष्ठो वीरः शङ्खोऽभ्यहारयत् ।**
**शतशश्च तनुत्राणि यथास्वं ते महारथाः ।। १६ ।।**

**शङ्खो** नाम्ना । **यथास्वं** स्वं स्वमनतिक्रम्य ।। १६ ।।

---

१. 'पुंसि पारशवः पुमान् । परस्त्रीतनये शस्त्रे द्विजाच्छूद्रासुतेऽपि च ।' इति मेदिनी ।

**योत्स्यमाना अनह्यन्त घोररूपाः प्रहारिणः ।**
**सूपस्करेषु शुभ्रेषु महत्सु च महारथाः ॥ १७ ॥**

**अनह्यन्त** बबन्धुः । **सूपस्करेषु** शोभनभृतिभृत्सु । 'उपात्प्रतियत्न.....'[1] इति भूषणे सुट् ॥ १७ ॥

**पृथक् काञ्चनसन्नाहान् रथेष्वश्वानयोजयत् ।**
**सूर्यचन्द्रप्रतीकाशे रथे दिव्ये हिरण्मये ॥ १८ ॥**

**महानुभावो मत्स्यश्च ध्वज उच्छिश्रिये तदा ।**
**अथान्यान् विविधाकारान् ध्वजान् हेमपरिष्कृतान् ॥१९॥**

**महानुभवो** जयसूचकत्वादिर्यस्य । **उच्छिश्रिये** लिट् उच्छ्रितोऽभूत् ॥ १९ ॥

**यथास्वं क्षत्रियाः शूरा रथेषु समयोजयन् ।**
**अथ मत्स्योऽब्रवीद् राजा शतानीकं जघन्यजम् ॥२०॥**

**जघन्यजं** कनिष्ठं भ्रातरम् । 'जघन्यजाः स्युः कनिष्ठयवीयोऽवरजानुजाः' इत्यमरः ॥ २० ॥

**कङ्कबल्लवगोपाला दामग्रन्थिश्च वीर्यवान् ।**
**युद्ध्येयुरिति मे बुद्धिर्वर्तते नात्र संशयः ॥ २१ ॥**

**एतेषामपि दीयन्तां रथा ध्वजपताकिनः ।**
**कवचानि च चित्राणि दृढानि च मृदूनि च ॥ २२ ॥**

ध्वजानां पताकाः ध्वजपताकाः । ता एषां सन्तीति तथा ॥ २२ ॥

---

१. उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च । पा.सू. (६/१/१३९)

**प्रतिमुञ्चन्तु गात्रेषु दीयन्तामायुधानि च ।**
**वीराङ्गरूपाः पुरुषाः नागराजकरोपमाः ॥ २३ ॥**

कराभ्यामुपमा **करोपमा** । 'तृतीया'[१] इति योगविभागात् समासः । नागराजस्य करोपमा येषां ते तथा । करप्रयोज्यनागराजप्रतियोगिकसादृश्यवन्त इत्यर्थः ॥ २३ ॥

**नेमे जातु न युद्ध्येरन्निति मे धीयते मतिः ।**
**एतच्छ्रुत्वा तु नृपतेर्वाक्यं त्वरितमानसः ।**
**शतानीकस्तु पार्थेभ्यो रथान् राजन् समादिशत् ॥ २४ ॥**

**न युद्ध्येरन्** युद्धेच्छां न कुर्युरिति । किन्तु कुर्युरेव । अत एवात्रेव पूर्वत्रापि परस्मैपदिता ॥ २४ ॥

**सहदेवाय राज्ञे च भीमाय नकुलाय च ।**
**तान् प्रहृष्टांस्ततः सूता राजभक्तिपुरस्कृताः ॥ २५ ॥**

**निर्दिष्टा नरदेवेन रथाञ्छीघ्रमयोजयन् ।**
**कवचानि विचित्राणि मृदूनि च दृढानि च ॥ २६ ॥**

**विराटः प्रादिशद् यानि तेषामक्लिष्टकर्मणाम् ।**
**तान्यामुच्य शरीरेषु दंशितास्ते परन्तपाः ॥ २७ ॥**

**आमुच्य** आबद्ध्य ॥ २७ ॥

**रथान् हयैः सुसम्पन्नानास्थाय च नरोत्तमाः ।**
**निर्ययुर्मुदिताः पार्थाः शत्रुसङ्घावमर्दिनः ॥ २८ ॥**

---

१. तृतीयासमासे । - पा.सू. (१/१/३०)

तरस्विनश्छन्नरूपाः सर्वे युद्धविशारदाः ।
रथान् हेमपरिच्छन्नानास्थाय च महारथाः ॥ २९ ॥

विराटमन्वयुः पार्थाः सहिताः कुरुपुङ्गवाः ।
चत्वारो भ्रातरः शूराः पाण्डवाः सत्यविक्रमाः ॥ ३० ॥

.......... [1]यद्वा सत्योः माद्रि कुन्त्योः । विक्रमः विरुद्धक्रमः ॥ ३० ॥

भीमाश्च मत्तमातङ्गाः प्रभिन्नकरटामुखाः ।
क्षरन्तश्चैव नागेन्द्राः सुदन्ता षष्टिहायनाः ॥ ३१ ॥

जीमूता मेघा इव दानोदकं क्षरन्तः । हस्तीति परिचायकमात्रम् ॥ ३१ ॥

स्वारूढा युद्धकुशलैः शिक्षितैर्हस्तिसादिभिः ।
राजानमन्वयुः पश्चाच्चलन्त इव पर्वताः ॥ ३२ ॥

**सादिभिः** आरूढाः 'सादी तुरगमातङ्गरथारोहेषु कथ्यते' इति विश्वः ॥ ३२ ॥

विशारदानां मुख्यानां हृष्टानां चारुजीविनाम् ।
अष्टौ रथसहस्राणि दशनागशतानि च ॥ ३३ ॥

षष्टिश्चाश्वसहस्राणि मत्स्यानामपि निर्ययुः ।
तदनीकं विराटस्य शुशुभे भरतर्षभ ॥ ३४ ॥

सम्प्रयातं महाराज निरीक्षन्तं गवां पदम् ।
तद्बलाग्र्यं विराटस्य सम्प्रस्थितमशोभत ।
दृढायुधजनाकीर्णं गजाश्वरथसङ्कुलम् ॥ ३५ ॥

॥ इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि एकत्रिंशोऽध्यायः ॥

---

१. अत्र ग्रन्थपातः ।

**गवां पदं निरीक्षन्तं** निरीक्षयन्तं गोपाधिपं अनु **सम्प्रयान्तं तदनीकं शुशुभे** । **निरीक्षं** ज्ञानशून्यं गवां पदं तासामाश्रयभूतम् । तं सुशर्माणं **निरीक्षं** गमने किं भविष्यति वेति शङ्काशून्यं तदनीकं शुशुभे इति वा ।। ३८ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां एकत्रिंशोऽध्यायः ।।**

*****

# ३२. द्वात्रिंशोऽध्यायः

**( विराटसुशर्मसेनयोः मिथःसङ्ग्रामः )**

**वैशम्पायन उवाच -**

**निर्याय नगराच्छूरा व्यूढानीकाः प्रहारिणः ।**
**त्रिगर्तानस्पृशन् मत्स्याः सूर्ये परिणते सति ।। १ ।।**

**निर्याय** निर्गत्य **परिणते** वृद्धे सति ।। १ ।।

**ते त्रिगर्ताश्च मत्स्याश्च संरब्धा युद्धदुर्मदाः ।**
**अन्योन्यमभिगर्जन्तो गोषु गृद्धा महाबलाः ।। २ ।।**

**गृद्धाः** नेतव्या आनेतव्या इत्यभिकाङ्क्षावन्तः ।। २ ।।

**भीमाश्च मत्तमातङ्गास्तोमराङ्कुशनोदिताः ।**
**ग्रामणीयैः समारूढाः कुशलैर्हस्तिसादिभिः ।। ३ ।।**

तोमरैः शर्वलाभिः । अयोऽग्रवेणुदण्डैरिति यावत् । अङ्कुशैः सृणिभिश्च नोदिताः । प्रेरिताः 'शर्वला तोमरोऽस्त्रियाम्' । 'अङ्कुशोऽस्त्री सृणिः स्त्रियाम्' इत्युभयत-

श्चामरः । **ग्रामणीयैः** राजसम्बन्धिभिः । 'ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु' इत्यमरः । 'अग्रग्रामाभ्याम्' [१] इति णत्वम् ।। ३ ।।

**तेषां समागमो घोरस्तुमुलो रोमहर्षणः ।**
**घ्नतां परस्परं राजन् यमराष्ट्रविवर्धनः ।। ४ ।।**

**तुमुलो** रणसङ्कुलः । घ उर इति च्छेदः । परस्परं उरोघ्नतामित्यन्वयः । घेत्येवार्थे । 'सघावीर' इति ऋचि यथा ।। ४ ।।

**देवासुरसमो राजन् नासीत् सूर्येऽवलम्बिनि ।**
**पदातिरथनागेन्द्रहयारोहबलौघवान् ।। ५ ।।**

देवाश्चासुराश्च देवासुरम् । एषां च विरोधः शाश्वतिक इत्येकवद्भावः । तस्य समो योग्यः । **अवलम्बिनि** लम्बमाने । पदातयश्च रथनागेन्द्रहयारोहाश्च **पदातिरथनागेन्द्ररथारोहम्** । तद्रूपं यद्बलं तदौघवान् । समागम इति पूर्वेणान्वयः ।। ५ ।।

**अन्योन्यमभ्यापततां निघ्नतां चेतरेतरम् ।**
**उदतिष्ठद्रजो भौमं न प्राज्ञायत किञ्चन ।। ६ ।।**

**अभ्यापतताम्** आभिमुख्येनापतताम् । **न प्राज्ञायत** व्रजोऽन्धकारावृतत्वादिति भावः ।। ६ ।।

**पक्षिणश्चापतन् भूमौ सैन्येन रजसाऽऽवृताः ।**
**इषुभिर्व्यातिसर्पद्भिरादित्योऽन्तरधीयत ।। ७ ।।**

**सैन्येन** तज्जन्येन ।। ७ ।।

---

१. 'अग्रग्रामाभ्यां नयतेर्णो' । वार्तिकम् ।

**खद्योतैरिव संयुक्तमन्तरिक्षं व्यराजत ।**
**रुक्मपृष्ठानि चापानि व्यतिषिक्तानि धन्विनाम् ॥ ८ ॥**

**खद्योतैरिव** बाणानां शिलाधौतत्वात् खद्योतवत् प्रकाशमानत्वम् । 'खद्योतो ज्योतिरिङ्गणः' इत्यमरः । **व्यतिषिक्तानि** परस्परं मिलितानि ॥ ८ ॥

**पततां लोकवीराणां सव्यदक्षिणमस्यताम् ।**
**रथा रथैः समाजग्मुः पादातैश्च पदातयः ॥ ९ ॥**

**सव्यदक्षिणं** यथा भवति तथा **अस्यतां** क्षिपताम् ॥ ९ ॥

**सादिनः सादिभिश्चैव गजैश्चापि महागजाः ।**
**असिभिः पट्टिशैः प्रासैः शक्तिभिस्तोमरैरपि ॥ १० ॥**

**संरब्धाः समरे राजन् निजघ्नुरितरेतरम् ।**
**निघ्नन्तः समरेऽन्योन्यं शूराः परिघबाहवः ॥ ११ ॥**

**निजघ्नुः** त्रैगर्ता मात्स्याश्च ॥ ११ ॥

**न शेकुरभिसंरब्धाः शूरान् कर्तुं पराङ्मुखान् ।**
**[१]कृत्तोत्तरोष्ठसुनसं कृत्तकेशमलङ्कृतम् ॥ १२ ॥**

**शूरान् पराङ्मुखान् कर्तुं न शेकुः** । उत्तरोष्ठश्च सुनासा च उत्तरोष्ठसुनसं कृत्तमुत्तरोष्ठसुनसं यस्मिन् तत् । 'नासा नसा नस्या च नासिका' इति भानुः । **कृत्तोत्तरोष्ठसुनसामिति पाठे** 'उपसर्गाच्च'[२] इति नासिकाशब्दान्ताद्बहुव्रीहेरच्प्रत्ययो नसादेशश्च ॥ १२ ॥

---

१. कृत्तोत्तरोष्ठं सुनसम् । (इति गी. पाठः)
२. पा.सू. (५/४/११९)

**अदृश्यत शिरश्छिन्नं रजो ध्वस्तं सकुण्डलम् ।**
**अदृश्यंस्तत्र गात्राणि शरैश्छिन्नानि [१]भागशः ॥ १३ ॥**

**अदृश्यन्** अदृश्यन्त ॥ १३ ॥

**शालस्कन्धनिकाशानि क्षत्रियाणां महामृधे ।**
**नागभोगनिकाशैश्च बाहुभिश्चन्दनोक्षितैः ॥ १४ ॥**

**शालः स्कन्धः** वृक्षसामान्यस्य स्कन्धः । तालवृक्षस्य स्कन्धो वा । तत्सदृशानि गतम् । नागशब्दो गजशुण्डापरः । भोगः सर्पशरीरम् । तदुभयनिकाशैः ॥१४ ॥

**आस्तीर्णा वसुधा भाति शिरोभिश्च सकुण्डलैः ।**
**रथिनां रथिभिश्चात्र सम्प्रहारोऽभ्यवर्तत ॥ १५ ॥**

**सादिभिः सादिनां चापि पदातीनां पदातिभिः ।**
**उपाशाम्यद्रजोभौमं रुधिरेण प्रसर्पता ॥ १६ ॥**

**उपाशाम्यत्** कश्मलं मूर्च्छां प्राविशत् बलमिति शेषः ॥ १६ ॥

**कश्मलं चाविशद्धोरं निर्मर्यादमवर्तत ।**
**उपाविशन् गरुत्मन्तः शरैर्गाढं प्रवेजिताः ।**
**अन्तरिक्षे गतिर्येषां दर्शनं चाप्यरुन्धत ॥ १७ ॥**

**निर्मर्यादम्** । एते स्वीया एते परकीया इति विवेकशून्यम् । **उपाविशन्** परस्परमाह्वानमकुर्वन् **प्रवेजिताः** ताडिताः । येषामन्तरिक्षे गतिस्तासां तद् **दर्शनं** च मुच्यमाना बाणाः मोचका वा **अरुन्धत** रुरुधुः । तद् **दर्शनं** च मुच्यमाना बाणाः मोचका वा **अरुन्धत** रुरुधुः ॥ १७ ॥

---

१. सर्वशः । इति क्वचित् ।

**ते घ्नन्तः समरेऽन्योन्यं शूराः परिघबाहवः ।**
**न शेकुरभिसंरब्धाः शूरान् कर्तुं पराङ्मुखान् ॥ १८ ॥**

**शतानीकः शतं हत्वा विशालाक्षश्चतुःशतम् ।**
**प्रविष्टौ महतीं सेनां त्रिगर्तानां महारथौ ॥ १९ ॥**

**शतं** रथिनः चत्वारिंशत् तानि यस्मिन् समुदाये च **चतुःशतम्** । द्विगुत्वेऽपि पात्रादित्वाद्वा न ङीप् ॥ १९ ॥

**तौ प्रविष्टौ महासेनां बलवन्तौ मनस्विनौ ।**
**आर्च्छेतां बाहुसंरब्धौ केशाकेशि रथारथि ॥ २० ॥**

**आर्च्छेतां** प्राप्नुवतः । **केशाकेशि** । केशेषु केशेषु गृहीत्वा प्रवृत्तं युद्धम् । 'इच् कर्मव्यतिहारे'[१] इतीच् समासान्तः । अन्येषामपीति दीर्घः । 'तिष्ठद्गुप्रभृतीनि च'[२] इत्यव्ययत्वम् । एवं रथारथीत्यत्रापि ॥ २० ॥

**लक्षयित्वा त्रिगर्तानां तौ प्रविष्टौ रथव्रजम् ।**
**अग्रतः सूर्यदत्तश्च मदिराक्षश्च पृष्ठतः ॥ २१ ॥**

यत्रयत्र रथव्रजस्तं लक्षयित्वा **प्रविष्टौ** । **सूर्यदत्तः** सर्वकनिष्ठः ॥ २१ ॥

**विराटस्तत्र सङ्ग्रामे हत्वा पञ्च शतान् रथान् ।**
**हयानां च शतान्यष्टौ हत्वा पञ्च महारथान् ॥ २२ ॥**

पञ्चेति भिन्नं पदम् । **शतं** शतानि ॥ २२ ॥

**चरन् स विविधान् मार्गान् रथेन रथसत्तमः ।**
**त्रिगर्तानां सुशर्माणमार्च्छद् [३]रुग्मरथं रणे ॥ २३ ॥**

---

१. पा.सू. (५/४/१२७)

२. पा.सू. (२/१/१७)

३. 'रुक्मरथम्' इति क्वचित् ।

**त्रिगर्तानां** मध्ये **रुग्मरथं** सुशर्माणम् ।। २३ ।।

**तौ व्यवाहरतां तत्र महात्मानौ महाबलौ ।**
**अन्योन्यमभिगर्जन्तौ गोष्ठेषु वृषभाविव ।। २४ ।।**

**व्यगाहतां** व्यगाहेताम् ।। २४ ।।

**ततो राजा त्रिगर्तानां सुशर्मा युद्धदुर्मदः ।**
**मत्स्यं समायाद्राजानं द्वैरथेन नरर्षभः ।। २५ ।।**

द्वाभ्यां **रथाभ्यां** क्रियमाणं युद्धं द्वैरथम् । तेन तदर्थं फलमपि हेतुः । अध्ययनेन वसतीतिवत् ।। २५ ।।

**ततो रथाभ्यां रथिनौ व्यतीयतुरमर्षणौ ।**
**शरान् व्यसृजतां शीघ्रं तोयधारा घना इव ।। २६ ।।**

व्यती विशेषणाधिकौ । विशेषेणाधिकृत्वात् 'व्यतयो देवताः स्मृताः' इति वचनात् । व्यत्ययाताम् इत्याडागमो आकारस्येकारो व्यत्ययेन ।। २६ ।।

**अन्योन्यं चापि संरब्धौ विचेरतुरमर्षणौ ।**
**कृतास्त्रौ निशितैर्बाणैरसिशक्तिगदाभृतौ ।। २७ ।।**

**निशितैर्बाणैः** सह । **असिशक्तिगदाभृतौ** ।। २७ ।।

**ततो राजा सुशर्माणं विव्याध दशभिः शरैः ।**
**पञ्चभिः पञ्चभिश्चास्य विव्याध चतुरो हयान् ।। २८ ।।**

**अस्य** सुशर्मणः ।। २८ ।।

**तथैव मत्स्यराजानं सुशर्मा युद्धदुर्मदः ।**
**पञ्चाशता शितैर्बाणैर्विव्याध परमास्त्रवित् ।। २९ ।।**

**मत्स्यराजानं** मत्स्यराजम् । तदनं तत्प्राणमुद्दिश्येति वा ।। २९ ।।

**ततः सैन्यं महाराज मत्स्यराजसुशर्मणोः ।**
**नाभ्यजानात् तदाऽन्योन्यं सैन्येन रजसाऽऽवृतम् ।।३०।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि द्वात्रिंशोऽध्यायः ।।**

**मत्स्यराजसुशर्मणोः सैन्ये** । न जानीताम् ।। ३० ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां द्वात्रिंशोऽध्यायः ।।**

*****

# ३३. त्रयस्त्रिंशोऽध्यायः

( भीमसेनकर्तृकसुशर्मग्रहणम् विराटमोचनं च )

**वैशम्पायन उवाच -**

**तमसाऽभिप्लुते लोके रजसा चैव भारत ।**
**अतिष्ठन् वै मुहूर्तं तु व्यूढानीकाः प्रहारिणः ।। १ ।।**

**तमसा** नैशिकेन । **मुहूर्तम्** । सप्तमीति तदुदयावधिकालम्[१] ।। १ ।।

**ततोऽन्धकारं प्रणुदन्नुदतिष्ठत चन्द्रमाः ।**
**कुर्वाणो विमलां रात्रिं नन्दयन् क्षत्रियान् युधि ।। २ ।।**

**उदतिष्ठत** उदतिष्ठत् । गतम् । **विमलां** अतमस्विनीम् । **ततः** चन्द्रोदयाद्धेतोः परस्परमैक्षत ।। २ ।।

---

१. श्लो - (३०/२८)

**ततः प्रकाशमासाद्य पुनर्युद्धमवर्तत ।**
**घोररूपं ततस्ते स्म नावैक्षन्त परस्परम् ॥ ३ ॥**

**ततः सुशर्मा त्रैगर्तः सह भ्रात्रा यवीयसा ।**
**अभ्यद्रवन्मत्स्यराजं रथव्रातेन सर्वशः ॥ ४ ॥**

**रथव्रातेन** तत्समूहेन ॥ ४ ॥

**ततो रथाभ्यां प्रस्कन्द्य भ्रातरौ क्षत्रियर्षभौ ।**
**गदापाणी सुसंरब्धौ समभ्यद्रवतां रथान् ॥ ५ ॥**

**रथाभ्यां** स्वोपविष्टाभ्याम् । **प्रस्कन्द्य** अवरुह्य ॥ ५ ॥

**तथैव तेषां तु बलानि तानि क्रुद्धान्यथान्योन्यमभिद्रवन्ति ।**
**गदासिखड्गैश्च परश्वधैश्च प्रासैश्च तीक्ष्णाग्रसुपीतधारैः ॥६॥**

तीक्ष्णमग्रं येषां ते तथा सुपीता सुष्ठु पिबन्ति जलमिति ताः । तादृश्यो धारा येषां ते तथा । **तीक्ष्णाग्रा**श्च ते सुपीता धाराश्च तैः । अग्नितापितानां शस्त्राणां धाराः जलपानेन समीचीना भवन्तीति प्रसिद्धम् ॥ ६ ॥

**बलं तु मत्स्यस्य बलेन राजा सर्वं त्रिगर्ताधिपतिः सुशर्मा ।**
**प्रमथ्य जित्वा च प्रसह्य मत्स्यं विराटमोजस्विनमभ्यधावत् ॥७॥**

**प्रसह्य** गतम् ॥ ७ ॥

**तौ निहत्य पृथग्धुर्यावुभौ तौ पार्ष्णिसारथी ।**
**विरथं मत्स्यराजानं जीवग्राहमगृह्णताम् ॥ ८ ॥**

पृथग्धुर्यौ 'धुरो यड्ढकौ'[1] इति यत् । पृथक् उभावित्यनेन चतुरोऽप्यश्वान् निहत्येत्यर्थः। पार्ष्णिः पार्ष्णिग्रहः शस्त्रादिदाता । सारथिश्च **तौ निहत्य** ।

---

१. पा.सू. । (४/४/७७)

**जीवग्राहम्**। जीवतीति जीवः। इगुपधलक्षणः कः । तं जीवन्तमित्यर्थः । **अगृह्णताम्** अगृह्णीतम् । 'समूलाकृतजीवेषु हन्कृञ्ग्रहः'[1] इति कर्मण्युपपदेन मूलम् ।। ८ ।।

**तमुन्मथ्य सुशर्माऽथ युवतीमिव कामुकः ।**
**स्यन्दनं स्वं समारोप्य प्रययौ शीघ्रवाहनः ।। ९ ।।**

**युवतीं** स्वं नेच्छन्तीं **कामुक** इति च ।। ९ ।।

**तस्मिन् गृहीते विरथे विराटे बलवत्तरे ।**
**प्राद्रवन्त भयान्मत्स्यास्त्रिगर्तैरर्दिता भृशम् ।। १० ।।**

**बलवत्तरे** अत्यन्तबलिष्ठेऽपि **तस्मिन् गृहीते** सति ।। १० ।।

**तेषु सन्त्रस्यमानेषु कुन्तीपुत्रो युधिष्ठिरः ।**
**[2]अभ्यभाषन्महाबाहुं भीमसेनमरिन्दमम् ।। ११ ।।**

**अभ्यभाषत्** अभ्यभाषत ।। ११ ।।

**मत्स्यराजः परामृष्टस्त्रिगर्तेन सुशर्मणा ।**
**तं मोक्षय महाबाहो न गच्छेद्द्विषतां वशम् ।। १२ ।।**

**परामृष्टः** स्पृष्टः । गृहीत इति यावत् ।। १२ ।।

**उषिताः स्म सुखं सर्वे सर्वकामैः सुपूजिताः ।**
**भीमसेन त्वया कार्या तस्य वासस्य निष्कृतिः ।। १३ ।।**

**निष्कृतिः** प्रत्युपकारः ।। १३ ।।

---

१. पा.सू. । (३/४/३६)

२. प्रत्यभाषन्महाबाहुम् । (इति गी. पाठः ।)

भीमसेन उवाच -

अहमेनं परित्रास्ये शासनात् तव पार्थिव ।
पश्य मे सुमहत् कर्म युद्ध्यमानस्य शत्रुभिः ॥ १४ ॥

स्वबाहुबलमासाद्य तिष्ठ त्वं भ्रातृभिः सह ।
एकान्तमाश्रितो राजन् पश्य मेऽद्य पराक्रमम् ॥ १५ ॥

**भ्रातृभिः** विराटभ्रातृभिः शतानीकमदिराक्षसूर्यदत्तैः सह । पूर्वं **भ्रातृभिः सह** विद्यमानः त्वं मयि गते **स्वबाहुबलमासाद्य एकान्तमाश्रितः** सन् **तिष्ठ** इति वा ॥ १५ ॥

सुस्कन्धोऽयं महावृक्षो गदारूप इव स्थितः ।
एनमेव समासाद्य द्रावयिष्यामि शात्रवान् ॥ १६ ॥

**समासाद्य** समूलमुत्पाट्य ॥ १६ ॥

वैशम्पायन उवाच -

तं मत्तमिव मातङ्गं वीक्षमाणं वनस्पतिम् ।
अब्रवीद् भ्रातरं वीरं धर्मपुत्रो युधिष्ठिरः ॥ १७ ॥

मा भीम साहसं कार्षीस्तिष्ठत्वेष वनस्पतिः ।
मा त्वां वृक्षेण कर्माणि कुर्वाणमतिमानुषम् ॥ १८ ॥

मा माङ् । तेनाडभावः । मा त्वाम् इत्यत्र मायम् । तेन लिङुपपत्तिः । मनुष्याणामिदं मानुषम् । 'मनोर्जातावञ्यतौ षुक् च'[१] इति यञ् षुक् च ॥ १८ ॥

जनाः समवबुद्ध्येरन् भीमोऽयमिति भारत ।
अन्यदेवायुधं किञ्चित् प्रतिपद्यस्व मानुषम् ॥ १९ ॥

१. पा.सू.(४/१/१६१)

**चापं वा यदि वा शक्तिं निस्त्रिंशं वा परश्वधम् ।**
**यदेव मानुषं भीम भवेदन्यैरलक्षितम् ॥ २० ॥**

तदेवाह– **चापमिति** ॥ **परश्वधं** कुठारम् । **अन्यैरलक्षितम्** । लोकविलक्षणग्रहणे अद्भुततया लोका विलोकयन्ति तत्साधारणग्रहणेन लक्षयन्तीति भावः ॥२० ॥

**तदेवायुधमादाय मोक्षयाशु महीपतिम् ।**
**यमौ च चक्ररक्षौ च भवितारौ महाबलौ ॥ २१ ॥**
**[१]युद्ध्यतः समवेतांस्तु मत्स्यराजं परीप्सतः[२] ।**

**वैशम्पायन उवाच -**

**एवमुक्तस्तु वेगेन भीमसेनो महाबलः ॥ २२ ॥**

**समवेतान्** मिलितान् **युद्ध्यतः** । **मत्स्यराजं परीप्सतश्च** ते चक्ररक्षौ भवितारौ ॥२२॥

**गृहीत्वा तु धनुः श्रेष्ठं जवेन सुमहाजवः ।**
**व्यमुञ्चच्छरवर्षाणि सतोय इव तोयदः ॥ २३ ॥**

**जवेन** सुशर्मसम्बन्धितानिमित्तेन **सुमहाजवः** ॥ २३ ॥

**तं भीमो भीमकर्माणः सुशर्माणमथाब्रवीत् ।**
**विराटं [३]समवेक्ष्यैनं तिष्ठ तिष्ठेति चावदत् ॥ २४ ॥**

सः भीमः समवेक्ष्येति पाठः साधुः । समवीक्ष्येति पाठे समः साधौ इति उपहासः 'सर्वसाधुसमानेषु समं स्यादभिधेयवद्' इति मेदिनी । 'समस्तुल्ये च साधौ च' इति

१. सहिताः समरे तत्र । (इति गी. पाठः)

२. परीप्सत । (इति गी. पाठः)

३. समवीक्ष्यैनम् । (इति गी. पाठः)

विश्वः । भीममुद्दिश्य पश्यतां जनानां महद्युद्धं रूपं सुमहत्कर्म उपस्थितमिति चिन्तयामासेत्यन्वयः ।। २४ ।।

**सुशर्मा चिन्तयामास कालान्तकयमोपमम् ।**
**तिष्ठ तिष्ठेति भाषन्तं पृष्ठतो रथपुङ्गवः ।**
**पश्यतां सुमहत् कर्म महत् युद्धमुपस्थितम् ।। २५ ।।**

**भाषन्तं** भाषमाणम् । **तिष्ठ तिष्ठेति** भाषा यस्य तं । भीममित्यर्थ इति वा ।।२५।।

**परावृत्तो धनुर्गृह्य सुशर्मा भ्रातृभिः सह ।**
**निमेषान्तरमात्रेण भीमसेनेन ते रथाः ।। २६ ।।**

**गृह्य** प्रगृह्य **परावृत्तः** । भीमसेननामिना स्वामिना स्वामिनश्च ते च **भीमसेनेन ते रथाः** रथिकाः ।। २६ ।।

**रथानां च गजानां च वाजिना च ससादिनाम् ।**
**सहस्रशतसङ्घाताः शूराणामुग्रधन्विनाम् ।। २७ ।।**

**पातिता भीमसेनेन विराटस्य समीपतः ।**
**पत्तयो निहतास्तेषां गदां गृह्य महात्मना ।। २८ ।।**

**भीमसेनेन पातिता** इत्यन्वयः । द्वितीय 'भीमसेनेन' इत्यस्य **पत्तयो निहता** इत्यनेनान्वये तु न क्लेशः ।। २८ ।।

**तद्दृष्ट्वा तादृशं युद्धं सुशर्मा युद्धदुर्मदः ।**
**चिन्तयामास मनसा किं शेषं हि बलस्य मे ।**
**अपरो दृश्यते सैन्ये पुरा मग्नो महाबले ।। २९ ।।**

**मे बलस्य शेषं किं** भवेन्न किमपीति भावः । तत्र हेतुः । पुरा विराटसैन्यभङ्गकाले महाबले मग्नो यमपरो द्वितीयो **दृश्यते** यत इति **चिन्तयामास** इति योज्यम् ।।२९।।

**आकर्णपूर्णेन तदा धनुषा प्रत्यदृश्यत ।**
**सुशर्मा सायकांस्तीक्ष्णान् क्षिपते च पुनःपुनः ।। ३० ।।**

**धनुषा** उपलक्षितः । **क्षिपते** अयमुभयपदी ।। ३० ।।

**ततः समस्तास्ते सर्वे तुरगानभ्यचोदयन् ।**
**दिव्यमस्त्रं प्रकुर्वाणास्त्रिगर्तान् प्रत्यमर्षणाः ।। ३१ ।।**

प्राक् ये **समस्ताः** निरस्तास्त्रिगर्तैः **ते सर्वे** अपि ।। ३१ ।।

**तान् निवृत्तरथान् दृष्ट्वा पाण्डवान् सा महाचमूः ।**
**वैराटिः परमक्रुद्धो युयुधे परमाद्भुतम् ।। ३२ ।।**

**पाण्डवान्** प्रति निवृत्ताः प्रत्यावर्तिता रथा यैस्ते **तान् दृष्ट्वा महाचमूः** विराटस्य तथा **वैराटिश्च युयुधे** ।। ३२ ।।

**सहस्रमवधीत् तत्र कुन्तीपुत्रो युधिष्ठिरः ।**
**भीमः सप्त सहस्राणि यमलोकमदर्शयत् ।। ३३ ।।**

**सहस्रं** शूराणाम् ।। ३३ ।।

**नकुलश्चापि सप्तैव शतानि प्राहिणोच्छरैः ।**
**शतानि त्रीणि शूराणां सहदेवः प्रतापवान् ।। ३४ ।।**

**युधिष्ठिरसमादिष्टो निजघ्ने पुरुषर्षभः ।**
**ततोऽभ्यपतदत्युग्रः सुशर्माणमुदायुधः ।। ३५ ।।**

**निजघ्ने** जघान । **अत्युग्रः** कुपितः ।। ३५ ।।

**हत्वा तां महतीं सेनां त्रिगर्तानां महारथः ।**
**ततो युधिष्ठिरो राजा त्वरमाणो महारथः ।। ३६ ।।**

**अभिपत्य सुशर्माणं शरैरभ्याहनद् भृशम् ।**
**सुशर्माऽपि सुसंरब्धस्त्वरमाणो युधिष्ठिरम् ॥ ३७ ॥**

**अभ्याहनत्** अभ्याहन् ॥ ३७ ॥

**अविध्यन्नवभिर्बाणैश्चतुर्भिश्चतुरो हयान् ।**
**ततो राजन्नाशुकारी कुन्तीपुत्रो वृकोदरः ॥ ३८ ॥**

**समासाद्य सुशर्माणमश्वानस्य व्यपोथयत् ।**
**पृष्ठगोपौ[१] च तस्याथ हत्वा परमसायकैः ॥ ३९ ॥**

**पृष्ठगोपौ** पृष्ठं पश्चाद्भागं गोपायत इति तौ ॥ ३९ ॥

**अथास्य सारथिं क्रुद्धो रथोपस्थादपातयत् ।**
**चक्ररक्षश्च शूरो वै मदिराक्षोऽतिविश्रुतः ॥ ४० ॥**

**रथोपस्थात्** रथोत्सङ्गात् । 'उपस्थो मेढ्र उत्सङ्गे भगे पायौ च कथ्यते' इति विश्वः । चक्ररक्षः युधिष्ठिरस्य **मदिराक्षोऽतिविश्रुतः** इत्यत्र मदिराक्ष्येति वक्तव्ये मदिराक्षेति । मदिराक्षेति तमुत इत्यत्र नेति योगं विभज्य असिद्धत्वेनेति कौस्तुभाद्युक्तेर्लोपशास्त्रस्य सिद्धत्वाभावाद्गुणे रूपम् । **अतिविश्रुत इति पाठे** तु न क्लेशः ॥ ४० ॥

**समायाद् विरथं दृष्ट्वा त्रिगर्तं प्राहरत् तदा ।**
**ततो विराटः प्रस्कन्द्य रथादथ सुशर्मणः ॥ ४१ ॥**

**प्रस्कन्द्य** आप्लुत्य ॥ ४१ ॥

**गदां तस्य परामृश्य तमेवाभ्यद्रवद्बली ।**
**स चचार गदापाणिर्वृद्धोऽपि तरुणो यथा ॥ ४२ ॥**

---

१. पृष्ठगोपांश्च । (इति गी. पाठः ।)

**तं** सुशर्माणम् ।। ४२ ।।

**पलायमानं त्रैगर्तं दृष्ट्वा भीमोऽभ्यभाषत ।**
**राजपुत्र निवर्तस्व न ते युक्तं पलायनम् ।। ४३ ।।**

**अनेन वीर्येण कथं गास्त्वं पार्थयसे बलात् ।**
**कथं चानुचरांस्त्यक्त्वा शत्रुमध्ये विषीदसि ।। ४४ ।।**

**अनेन** एतादृशाकार्यकारिणा । राजपुत्रत्वात् **अनुचरांस्त्यक्त्वा विषीदसि** ।।४४।।

**इत्युक्तः स तु पार्थेन सुशर्मा रथयूथपः ।**
**तिष्ठ तिष्ठेति भीमं स सहसाऽभ्यद्रवद्बली ।। ४५ ।।**

**भीमस्तु भीमसङ्काशो रथात् प्रस्कन्द्य पाण्डवः ।**
**प्राद्रवत् तूर्णमव्यग्रो जीवितेप्सुः सुशर्मणः ।। ४६ ।।**

**सुशर्मणः** यज्जीवितं तदीप्सतीति तथा । **भीमसङ्काशः** प्रलयकालिकरुद्रसदृशः ।।४६।।

**तं भीमसेनो धावन्तमभ्यधावत वीर्यवान् ।**
**त्रिगर्तराजमादातुं सिंहः क्षुद्रमृगं यथा ।। ४७ ।।**

**अभिद्रुत्य सुशर्माणं केशपक्षे परामृशत् ।**
**समुद्यम्य तु रोषात् तं निष्पिपेष महीतले ।। ४८ ।।**

**केशपक्षे** केशकलापे । 'पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे' इत्यमरः । 'पक्षकेशादेः परतो वृन्दे'[१] इति मेदिनी ।। ४८ ।।

---

१. पक्षो मासार्धके गेहपार्श्वसाध्यविशेषयोः ।

**पदा मूर्ध्नि महाबाहुः प्राहरद् विलपिष्यतः ।**
**तस्य जानुं ददौ भीमो जघ्ने चैनमरत्निना ।**
**स मोहमगमद्राजा प्रहारवरपीडितः ।। ४९ ।।**

**जानुं ददौ** पृष्ठे तत्प्रहारं कृतवान् । एवं पञ्चधा हनने सुशर्मणः क्षत्रियाधमत्वं सूचयति । तथाहि नीतिशास्त्रम्-

'वामपाणिकचात्पीडा भूमौ निष्पेषणं बलात् ।
मूर्ध्नि पादप्रहरणं जानुनोदरमर्दनम् ।।
मालूरकरणं मुष्ट्या कपोले दृढताडनम् ।
कफोणिपातोऽप्यसकृत् सर्वतस्तलताडनम् ।।
तलेन युद्धे भ्रमणं मारणं स्मृतमष्टधा ।
चतुर्भिः क्षत्रियं हन्यात् पञ्चभिः क्षत्रियाधमम् ।
षड्भिर्वैश्यं सप्तभिस्तु शूद्रं सङ्करमष्टभिः ।।' इति ।। ४९ ।।

**तस्मिन् गृहीते विरथे त्रिगर्तानां महारथे ।**
**अभज्यत बलं सर्वं त्रैगर्तं तत् भयातुरम् ।। ५० ।।**

**निवर्त्य गास्ततः सर्वाः पाण्डोः पुत्रा महारथाः ।**
**अवजित्य सुशर्माणं धनं चादाय सर्वशः ।। ५१ ।।**

तद् **बलम्** । धनं तदीयम् ।। ५१ ।।

**स्वबाहुबलसम्पन्ना ह्रीनिषेवा यतव्रताः ।**
**विराटस्य महाराज्ञः परिक्लेशविनाशनाः ।। ५२ ।।**

**महाराज्ञः** महाराजस्य । तत्सम्बन्धी यः परिक्लेशस्तद्विनाशनाः ।। ५२ ।।

---

केशादेः परतो वृन्दे बले सखिसहाययोः । - इति मेदिनी

**स्थिताः समक्षं ते सर्वे त्वथ भीमोऽभ्यभाषत ॥ ५३ ॥**

**ते सर्वे** त्रयः ॥ ५३ ॥

**नायं पापसमाचारो मत्तो जीवितुमर्हति ।**
**किं तु शक्यं मया कर्तुं यद्राजा सततं घृणी ॥ ५४ ॥**

**राजा** धर्मः । **घृणी** दयावान् । शिखादिः ॥ ५४ ॥

**गले गृहीत्वा राजानमानीय विवशं वशम् ।**
**तत एनं विचेष्टन्तं बद्ध्वा पार्थो वृकोदरः ॥ ५५ ॥**

**राजानं** सुशर्माणम् । ततः गलग्रहणानन्तरम् ॥ ५५ ॥

**रथमारोपयामास विसञ्ज्ञं पांसुगुण्ठितम् ।**
**अभ्येत्य रथमध्यस्थमभ्यगच्छद्युधिष्ठिरम् ॥ ५६ ॥**

**दर्शयामास भीमस्तु सुशर्माणं नराधिपम् ।**
**प्रोवाच पुरुषव्याघ्रो भीममाहवशोभिनम् ॥ ५७ ॥**

**नराधिपं** युधिष्ठिरम् ॥ ५७ ॥

**तं राजा प्राहसद्दृष्ट्वा मुच्यतां वै नराधमः ।**
**एवमुक्तोऽब्रवीद् भीमः सुशर्माणं महाबलम् ॥ ५८ ॥**

**दृष्ट्वा प्राहसत्** । अनन्तरं अयं **नराधमो मुच्यताम्** इति प्रोवाच च ॥५८ ॥

**भीमसेन उवाच -**

**जीवितुं चेच्छसे मूढ हेतुं मे गदतः शृणु ।**
**दासोऽस्मीति त्वया वाच्यं संसत्सु च सभासु च ॥५९॥**

**इच्छसे** इच्छसि । हेतुं जीवनकारणं **संसत्सु** सभासु । 'सभासमितिसंसदः' इत्यमरः । **सभासु च** गृहेषु प्रतिमन्दिरमित्यर्थः । 'द्यूतमन्दिरयोः सभा' इति रभसः । विश्वश्च ।।५९।।

**एवं ते जीवितं दद्यामेष युद्धजितो विधिः ।**
**तमुवाच ततो ज्येष्ठो भ्राता सप्रणयं वचः ।। ६० ।।**

**युद्धजितः** युद्धे जयवतः । **विधिः** एवं वाचनं धर्मः । **सप्रणयं** सस्नेहम् । वयं 'अस्मदोर्द्वयोश्च' [१]इति बहुवचनम् । अहमित्यर्थः ।। ६० ।।

**मुञ्च मुञ्चाधमाचारं प्रमाणं यदि ते वयम् ।**
**दासभावं गतो ह्येष विराटस्य महीपतेः ।**
**अदासो गच्छ मुक्तोऽसि मैवं काषीः कदाचन ।। ६१ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि त्रयस्त्रिंशोऽध्यायः ।।**

**यदि**प्रमाणंत्वन्मर्यादायोग्यः।मान्यइतियावत्। [२]'प्रमाणंनित्यमर्यादासत्यवादिप्र-मातृषु' इति विश्वः । **दासभावं गतः** । भीमं प्रत्युक्त्वा सुशर्माणं प्रत्यप्याह– **अदास इति** ।। ६१ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां त्रयस्त्रिंशोऽध्यायः ।।**

*****

---

१. अस्मदो द्वयोश्च । - पा.सू. (१/२/५९)

२. प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु । - इत्यमरः ।;

- प्रमाणं नित्यमर्यादाशास्त्रेषु सत्यवादिनि । - इति मेदिनी ।

# ३४. चतुस्त्रिंशोऽध्यायः

( राज्ञा विराटेन पाण्डवानामभिनन्दनम् )

**वैशम्पायन उवाच -**

**एवमुक्ते तु सव्रीडः सुशर्माऽऽसीदधोमुखः ।**
**स मुक्तोऽभ्येत्य राजानमभिवाद्य प्रतस्थिवान् ।। १ ।।**

**राजानं** विराटं **प्रतस्थिवान्** गतः ।। १ ।।

**विसृज्य तु सुशर्माणं पाण्डवास्ते हतद्विषः ।**
**स्वबाहुबलसम्पन्ना ह्रीनिषेवा यतव्रताः ।। २ ।।**

**सङ्ग्रामशिरसो मध्ये तां रात्रिं सुखिनोऽवसन् ।**
**ततो विराटः कौन्तेयानतिमानुषविक्रमान् ।**
**अर्चयामास वित्तेन मानेन च महारथान् ।। ३ ।।**

मानुषाणां विक्रमाः मानुषविक्रमाः । ते अतिक्रान्ता यैस्ते । तान् ।। ३ ।।

**विराट उवाच -**

**यथैव मम रत्नानि युष्माकं तानि वै तथा ।**
**कार्यं कुरुत वै सर्वे यथाकामं यथासुखम् ।। ४ ।।**

**रत्नानि** सप्त । उक्तं च ऋग्भाष्यटीकायाम् -

चक्रं रथो मणिर्भार्या निधिरश्वो गजस्तथा ।
एतानि सप्तरत्नानि पूर्वेषां चक्रवर्तिनाम् ।। इति ।

**युष्माकं** युष्मत्स्वामिकान्यपि । **कार्यम्** अकर्तृकम् ।। ४ ।।

ददाम्यलङ्कृताः कन्या वसूनि विविधानि च ।
मनसश्चाप्यभिप्रेतं युद्धे शत्रुनिबर्हणाः ॥ ५ ॥

युष्माकं विक्रमादद्य मुक्तोऽहं स्वस्तिमानिह ।
तस्मात् भवन्तो मत्स्यानामीश्वराः सर्व एव हि ॥ ६ ॥

ईश्वराः स्वामिनः ॥ ६ ॥

**वैशम्पायन उवाच -**

तथाऽभिवादिनं मत्स्यं कौरवेयाः पृथक् पृथक् ।
ऊचुः प्राञ्जलयः सर्वे युधिष्ठिरपुरोगमाः ॥ ७ ॥

प्रतिनन्दाम ते वाक्यं सर्वं चैव विशाम्पते ।
एतेनैव प्रतीताः स्म यत् त्वं मुक्तोऽद्य शत्रुभिः ॥ ८ ॥

प्रतीताः हृष्टाः 'प्रतीतः ख्यातहृष्टयोः' इति विश्वः ॥ ८ ॥

ततोऽब्रवीत् प्रीतमना मत्स्यराजो युधिष्ठिरम् ।
पुनरेव महाबाहुर्विराटो राजसत्तमः ॥ ९ ॥

एहि त्वामभिषेक्ष्यामि मत्स्यराजस्तु नो भवान् ।
मनसश्चाप्यभिप्रेतं यथेष्टं भुवि दुर्लभम् ॥ १० ॥

ते मनसः यदभिप्रेतं तेऽहं प्रदास्यामि ॥ १० ॥

तत् तेऽहं सम्प्रदास्यामि सर्वमर्हति नो भवान् ।
रत्नानि गाः सुवर्णं च मणिमुक्तास्तथाऽपि च ।
वैयाघ्रपद्य विप्रेन्द्र सर्वथैव नमोऽस्तु ते ॥ ११ ॥

त्वत्कृते ह्यद्य पश्यामि राज्यं सन्तानमेव च ।
यतश्च जातसंरम्भो [१]सर्वशत्रुवशं गतः ।। १२ ।।

**जातसंरम्भः** सञ्जातभयः । **सर्वशत्रुवशं गतोऽपि** सर्वप्रकारेण शत्रुवशं गतोऽप्यहं **त्वत्कृते राज्यं पश्यामि** ।। १२ ।।

ततो युधिष्ठिरो मत्स्यं पुनरेवाभ्यभाषत ।
प्रतिनन्दामि ते वाक्यं मनोज्ञं मत्स्य भाषसे ।। १३ ।।

**मनोज्ञं** मनोहरम् ।। १३ ।।

आनृशंस्यपरो नित्यं सुसुखी सततं भवान् ।
गच्छन्तु दूतास्त्वरितं नगरं राजशासनात्[२] ।। १४ ।।

**राजशासनात्** । राज्ञस्तवानुज्ञातः ।। १४ ।।

सुहृदां प्रियमाख्यातुं घोषयन्तु च ते जयम् ।
ततस्तद्वचनान्मत्स्यो दूतान् राजा समादिशत् ।। १५ ।।

**घोषयन्तु** उद्घोषयन्तु ।। १५ ।।

आचक्षध्वं पुरं गत्वा सङ्ग्रामविजयं मम ।
कुमार्यः समलङ्कृत्य पर्यागच्छन्तु मे पुरात् ।। १६ ।।

**आचक्षध्वं** आचटवम् । गणकार्यस्यानित्यत्वात् 'न विश्वसेदविश्वस्तम्'[३] इतिवदत्र शपो न लुक् ।। १६ ।।

---

१. न च शत्रुवशं गतः (इति गी. पाठः)

२. तव पार्थिव । (इति गी. पाठः)

३. हरिवंशेषु (१/१२०/२१)

**वादित्राणि च सर्वाणि गणिकाश्च स्वलङ्कृताः ।**

**ते तदाज्ञां ततः श्रुत्वा राज्ञा मत्स्येन चोदिताः ।। १७ ।।**

**गणिकाः** वेश्याः । **ते** दूताः । **तदाज्ञां** युधिष्ठिराज्ञाम् । अनन्तरं **मत्स्येन राज्ञा चोदिताः** ।। १७ ।।

**तामाज्ञां शिरसा कृत्वा प्रस्थिता हृष्टमानसाः ।**
**[1]ते गत्वा केवलां रात्रिमथ सूर्योदयं प्रति ।**
**विराटस्य पुराभ्याशे दूता जयमघोषयन् ।। १८ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपवरणि चतुस्त्रिंशोऽध्यायः ।।**

**केवलां** समग्रां । ते दूता इत्यन्वयः । **अभ्याशे** समीपे ।। १८ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां चतुस्त्रिंशोऽध्यायः ।।**

*****

# ३५. पञ्चत्रिंशोऽध्यायः

**( कौरवैः विराटस्य गवामपहरणम् । गोमोचनार्थं उत्तरस्य प्रस्थानोद्योगः )**

**याते त्रिगर्तान् मत्स्ये तु पशूंस्तान् वै परीप्सति ।**
**दुर्योधनः सहामात्यो विराटमुपयादथ ।। १ ।।**

**तान्** त्रिगर्तभीतान् । **परीप्सति** लिप्सति सति । **उपयात्** उपायात् । **अथ** वक्ष्यमाणरीत्या कार्त्स्न्येन । 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः ।। १ ।।

---

१. ते गत्वा तत्र तां । (इति गी. पाठः)

**भीष्मो द्रोणश्च कर्णश्च कृपश्च परमास्त्रवित् ।**
**द्रौणिश्च सौबलश्चैव तथा दुःशासनः प्रभो ॥ २ ॥**

**विविंशतिर्विकर्णश्च चित्रसेनश्च वीर्यवान् ।**
**दुर्मुखो दुःशलश्चैव ये चैवान्ये महारथाः ॥ ३ ॥**

**एते मत्स्यानुपागम्य विराटस्य महीपतेः ।**
**[१]घोषान् विद्राव्य तरसा गोधनं जहुरोजसा ॥ ४ ॥**

**मत्स्यान्** देशान् **घोषान्** गोपान् **विद्राव्य** 'घोषः **स्याद्घोषके** द्वानगौप्यता भीरवल्लिषु' इति विश्वः ॥ ४ ॥

**षष्टिं गवां सहस्राणि कुरवः कालयन्ति च ।**
**महता रथवंशेन परिवार्य समन्ततः ॥ ५ ॥**

**कालयन्ति** स्म । शब्दः पुरा शब्दो वाऽत्राध्याहार्यः । अकालयत् अनमत् । वंशो वर्गः समूह इति यावत् । 'वंशो वेणौ कुले वर्गे' इति विश्वः ॥ ५ ॥

**गोपालानां तु घोषस्य हन्यतां तैर्महारथैः ।**
**आरावः सुमहानासीत् सम्प्रहारे भयङ्करे ॥ ६ ॥**

**घोषस्य** आभीरपल्ल्याः । तत्सम्बन्धिनां **सम्प्रहारे** युद्धे ॥ ६ ॥

**[२]गवाध्यक्षस्तु सन्त्रस्तो रथमास्थाय सत्वरः ।**
**जगाम नगरायैव परिक्रोशंस्तदाऽऽर्तवत् ॥ ७ ॥**

**गवाध्यक्षः** गोस्वामी । **परिक्रोशन्** आकारयन् ॥ ७ ॥

---

१. गोष्ठं **घोष** इति प्रोक्तो व्रजस्तत्पालसंस्थितिः ।-इतिभागवततात्पर्यनिर्णये।(४/१८/३१)
२. गोपाध्यक्षो भयत्रस्तो...... । (इति गी. पाठः)

स प्रविश्य पुरं राज्ञो राजवेश्माभ्ययात् ततः ।
अवतीर्य रथात् तूर्णमाख्यातुं प्रविवेश ह ॥ ८ ॥

दृष्ट्वा भूमिञ्जयं नाम पुत्रं मत्स्यस्य मानिनम् ।
तस्मै तत्सर्वमाचष्ट राष्ट्रस्य पशुकर्षणम् ॥ ९ ॥

**राष्ट्रस्य** । पशवस्तत्परिकर्षणम् । **आचष्ट** ॥ ९ ॥

षष्टिं गवां सहस्राणि कुरवः कालयन्ति ते ।
तद्विजेतुं समुत्तिष्ठ गोधनं राष्ट्रवर्धन ॥ १० ॥

राजपुत्र हितप्रेप्सुः क्षिप्रं निर्याहि च स्वयम् ।
त्वां हि मत्स्यो महीपालः शून्यपालमिहाकरोत् ॥ ११ ॥

हितं राजहितम् । **निर्याहि त्वं पुरात्** । **शून्यपालं** राजादिरक्षकहीनपुरपालकम् ॥ ११ ॥

त्वया परिषदो मध्ये श्लाघते स नराधिपः ।
पुत्रो ममानुरूपश्च शूरश्चापि कुलोद्वहः ॥ १२ ॥

**परिषदोर्मध्ये त्वां श्लाघते** इत्यत्रोत्तरस्य ज्ञास्यमानत्वाभावान्न चतुर्थी । **कुलोद्वहः** न पुत्रिकापुत्रन्यायादिना परिगृहीतः । औरस इति च । 'देहेऽपि कलितं कुलम्'[१] इति विश्वः ॥ १२ ॥

इष्वस्त्रे निपुणो योधः सदा वीरश्च मे सुतः ।
तस्य तत् सत्यमेवास्तु मनुष्येन्द्रस्य भाषितम् ॥ १३ ॥

**तत् भाषितं सत्यमेवास्तु** ॥ १३ ॥

---

१. कुलं जनपदे गोत्रे सजातीयगणेऽपि च ।
भवने च तनौ क्लीबम् .......................... ॥ - इति मेदिनी ।

**आवर्तय कुरून् जित्वा पशून् पशुमतां वर ।**
**निर्दहैषामनीकानि भीमेन शरतेजसा ।। १४ ।।**

**धनुश्च्युतैः [१]रुग्मपुङ्खैः शरैः सन्नतपर्वभिः ।**
**द्विषतां भिन्ध्यनीकानि गजानामिव यूथपः ।। १५ ।।**

**पाशोपधानां ज्यातन्त्रीं चापदण्डां महास्वनाम् ।**
**शरवर्णां धनुर्वीणां शत्रुमध्ये प्रवादय ।। १६ ।।**

पाशज्जायाः धनुष्कोट्योश्च मध्यवर्तिसूत्रविशेषः । स एवोपधानं वीण-तन्त्र्याधारकाष्ठविशेषो यस्याः सा तां ज्या मौर्वी चापज्या सा । एवं दण्डो यस्याः सा ताम् । शराः वर्णाः अक्षराणि यस्याः सा ताम् । **धनुः** सज्यं तल्लक्षणं **वीणां** विपञ्चीम् ।। १६ ।।

**श्वेता रजतसङ्काशा रथे युज्यन्तु ते हयाः ।**
**ध्वजं च सिंहसौवर्णमुच्छ्रयन्तु तव प्रभो ।। १७ ।।**

**युज्यन्तु** युज्यन्ताम् । **सिंहसौवर्णम्** सौवर्णसिंहोपेतम् । **उच्छ्रयन्तु** सूताः ।। १७ ।।

**[२]रुग्मपुङ्खाः प्रसन्नाग्रा मुक्ता हस्तवता त्वया ।**
**छादयन्तु शराः सूर्यं राज्ञामायुर्निरोधिनः[३] ।। १८ ।।**

**प्रसन्नाग्राः** शाणोल्लीढाग्राः । **हस्तवता** प्रशस्तहस्तवता लघुहस्तेनेति यावत् । **आयुर्निरोधिनः** । गच्छमानायुःप्रवाहविच्छेदकाः सद्योमारका इति यावत् ।।१८।।

---

१. रुक्मपुङ्खैः । (इति क्वचित्)

२. रुक्मपुङ्खाः । (इति क्वचित्)

३. सूर्यं राज्ञां मार्गनिरोधकाः । (इति गी. पाठः)

**रणे जित्वा कुरून् सर्वान् वज्रपाणिरिवासुरान् ।**
**यशो महद्वाप्य त्वं प्रविशेदं पुनः पुरम् ।। १९ ।।**

**त्वं हि राष्ट्रस्य परमा गतिर्मत्स्यपतेः सुतः ।**
**यथा हि पाण्डुपुत्राणामर्जुनो जयतां वरः ।। २० ।।**

**जयतां** जयशीलानाम् ।। २० ।।

**एवमेव गतिर्नूनं भवान् विषयवासिनाम् ।**
**गतिमन्तो वयं त्वद्य सर्वे विषयवासिनः ।। २१ ।।**

**गतिमन्तः** पालकवन्तः ।। २१ ।।

**वैशम्पायन उवाच -**

**स्त्रीमध्य उक्तस्तेनासौ तद्वाक्यमभयङ्करम् ।**
**अन्तःपुरे श्लाघमान इदं वचनमब्रवीत् ।। २२ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि पञ्चत्रिंशोऽध्यायः ।।**

**अभयङ्करं** तद्वाक्यं गोपालाध्यक्षवाक्यम् । **श्लाघमानः** सन् **इदं वचनमब्रवीत्** ।।२२।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां पञ्चत्रिंशोऽध्यायः ।।**

*****

# ३६. षट्त्रिंशोऽध्यायः

( सारथ्याय द्रौपद्या बृहन्नळायाः निर्देशः )

**उत्तर उवाच -**

**अद्याहमनुगच्छेयं दृढधन्वा गवां पदम् ।**
**यदि मे सारथिः कश्चित् भवेदश्वेषु कोविदः ।। १ ।।**

**अश्वेषुकोविद** इति पदमेकं वा । अश्वाश्चेषवश्च बाणाश्च तेषु कोविदः । हयचालने बाणसहने समये मोचने च कुशलः ।। १ ।।

**तं त्वहं नावगच्छामि यो मे यन्ता भवेन्नरः ।**
**पश्यध्वं सारथिं क्षिप्रं मम युक्तं प्रयास्यतः ।। २ ।।**

**पश्यध्वम्** पश्यत । **प्रयास्यतो मम युक्तं** योग्यम् ।। २ ।।

**अष्टाविंशतिरात्रं वै कौरवैः सह युद्ध्यतः**[1] **।**
**यत् तदासीन्महद् युद्धं तत्र मे सारथिर्हतः ।। ३ ।।**

**अष्टाविंशतिरात्रम्** । **कौरवैः** कदाचित् कीचकसत्तादशायाम् । अप्रमितैः ।।३।।

**न लभेयं यदा त्वन्यं हयज्ञानविदं नरम् ।**
**त्वरावानद्य यात्वाऽहं समुच्छ्रितमहाध्वजम् ।। ४ ।।**

सोऽहं **हयज्ञानविदम्** । ज्ञायतेऽनेन तत् हयलक्षणं तद्वेत्तीति स तथा तम् ।।४।।

**विगाह्य तत् परानीकं गजवाजिरथाकुलम् ।**
**शस्त्रप्रतापनिर्वीर्यान् कुरून् जित्वाऽऽनये पशून् ।। ५ ।।**

**विगाह्य** विलोड्य । **शस्त्रप्रतापेन** मदीयेन ।। ५ ।।

---

१. वा मासं वा नूनमन्ततः । (इति गी. पाठः)

**दुर्योधनं शान्तनवं कर्णं वैकर्तनं कृपम् ।**
**द्रोणं च सहपुत्रेण महेष्वासान् समागतान् ॥ ६ ॥**

विकर्तनस्यापत्यं वैकर्तनः कर्णस्तम् ॥ ६ ॥

**वित्रासयित्वा सङ्ग्रामे दानवानिव वज्रभृत् ।**
**अनेनैव मुहूर्तेन पुनः प्रत्यानये पशून् ॥ ७ ॥**

न विलम्बावलम्बस्तज्जय इत्याह– **अनेनैव मुहूर्तेनेति** ॥ ७ ॥

**शून्यमासाद्य कुरवः प्रयान्त्यादाय गोधनम् ।**
**किन्नु शक्यं मया कर्तुं यदहं तत्र नाभवम् ॥ ८ ॥**

**शून्यं** राजादिरहितं पुरमिति शेषः । **तत्र** । गोष्ठे ॥ ८ ॥

**पश्येयुरद्य मे वीर्यं कुरवस्ते समागताः ।**
**किं नु पार्थोऽर्जुनः साक्षादयमस्मान् प्रबाधते ॥ ९ ॥**

**वीर्यं पश्येयुः** एवमूहयेयुश्चेत्याह– **किं न्विति** ॥ पार्थ इति कार्तवीर्यव्यावृत्तय इवार्जुन इति धर्मभीमव्यावृत्तये इति ज्ञेयम् ॥ ९ ॥

**वैशम्पायन उवाच -**

**श्रुत्वा तदर्जुनो वाक्यं राज्ञः पुत्रस्य भाषतः ।**
**अतीतसमये काले प्रियां भार्यामनिन्दिताम् ॥ १० ॥**

**द्रुपदस्य सुतां तन्वीं पाञ्चालीं पावकात्मजाम् ।**
**सत्यार्जवगुणोपेतां भर्तुः प्रियहिते रताम् ॥ ११ ॥**

**उवाच रहसि प्रीतः कृष्णां सर्वार्थकोविदः ।**
**उत्तरं ब्रूहि कल्याणि क्षिप्रं मद्वचनादिदम् ॥ १२ ॥**

**अयं वै पाण्डवस्यासीत् सारथिः सम्मतो दृढः ।**
**महायुद्धेषु संसिद्धः स ते यन्ता भविष्यति ॥ १३ ॥**

**वैशम्पायन उवाच -**

**तस्य तद्वचनं स्त्रीषु भाषतश्च पुनःपुनः ।**
**न साऽमर्षत पाञ्चाली बीभत्सोः परिकीर्तनम् ॥ १४ ॥**

**भाषतः** भाषमाणस्य । **पाञ्चाली** द्रौपदी । **बीभत्सोः** परिकीर्तनम् । सर्वतो भाववर्णनम् । साम्यकथनमिति यावत् । 'परि स्यात् सर्वतो भावे वर्जने लक्षणासु च' इति विश्वः ॥ १४ ॥

**अथैनमुपसङ्गम्य स्त्रीमध्यात् सा तपस्विनी ।**
**व्रीडमानेव शनकैरिदं वचनमब्रवीत् ॥ १५ ॥**

**एनं** उत्तरम् । **स्त्रीमध्यात्** उत्थाय ॥ १५ ॥

**योऽसौ बृहद्वारणाभो युवा सुप्रियदर्शनः ।**
**बृहन्नलेति विख्यातः पार्थस्यासीत् स सारथिः ॥ १६ ॥**

समयोऽतीतः समयासमये कथमुक्तश्चेत् किमिति **योऽसौ बृहद्वारणाभ** इत्याद्युक्तिः ॥ १६ ॥

**धनुष्यनवरश्चासीत् तस्य शिष्यो महात्मनः ।**
**दृष्टपूर्वो मया वीर चरन्त्या पाण्डवान् प्रति ॥ १७ ॥**

**तस्य** अर्जुनस्य । **धनुषि** तद्धारणविषये । **अनवरो**ऽनीचः सम इति यावत् । पाण्डवान् प्रतिताननुविचरन् दृष्टः पूर्वं **दृष्टपूर्वः** पूर्वदृष्टः ॥ १७ ॥

**यदा तत् पावको दावमदहत् खाण्डवं महत् ।**
**अर्जुनस्य तदाऽनेन सङ्गृहीता हयोत्तमाः ॥ १८ ॥**

**खाण्डवं दावं** वनम् ।। १८ ।।

**तेन सारथिना पार्थः सर्वभूतानि सर्वशः ।**
**अजयत् खाण्डवप्रस्थे न हि यन्ताऽस्ति तादृशः ।। १९ ।।**

**सर्वभूतानि** तत्रत्यानि । **सर्वशः** इति [१]जरितार्यादयः षडेवोर्वरिता इत्यल्पत्वादविवक्षयोक्तिः ।। १९ ।।

**उत्तर उवाच -**

**सैरन्ध्रि जानासि तथा युवानं नपुंसको नैव भवेद् यथाऽसौ ।**
**अहं न शक्नोमि बृहन्नलां शुभे वक्तुं स्वयं यच्छ हयान् ममेति वै ।।**

**द्रौपद्युवाच**

**येयं कुमारी सुश्रोणी भगिनी ते यवीयसी ।**
**अस्याः स वीर वचनं करिष्यति न संशयः ।। २१ ।।**

**यदि वै सारथिः स स्यात् कुरून् सर्वानसंशयम् ।**
**जित्वा गाश्च समादाय ध्रुवमागमनं भवेत् ।। २२ ।।**

**आगमनं** वेति शेषः ।। २२ ।।

**एवमुक्तः स सैरन्ध्र्या भगिनीं प्रत्यभाषत ।**
**गच्छ त्वमनवद्याङ्गि तामानय बृहन्नलाम् ।। २३ ।।**

---

१. ...................................................... सर्वे तद्वनस्था हि ताभ्याम् ।
ऋते चतुःपक्षिणश्चाश्वसेनं मयं च नान्यत् किञ्चिदासात्र मुक्तम् ।।
अयमग्ने जरितेत्यादिमन्त्रैः स्तुत्वा वह्निं पक्षिणो नैव दग्धाः ।
- इति महाभारततात्पर्यनिर्णये । (२०/२३८,२३९)

**तां बृहन्नलामानय** । मत्समीपं स युवेत्यादिस्तयोक्तं श्रुतवतेऽपि राजात्मजोऽहं कथं कथयेयं पुरुषान्तरं प्रति कार्यसिद्ध्य इत्यहं तयैवमुत्तरस्य वचनमिति ज्ञेयम् ।। २३ ।।

**सा भ्रात्रा प्रेषिता शीघ्रमगच्छन्नर्तनागृहम् ।**
**यत्रास्ते स महाबाहुश्छन्नः सत्रेण पाण्डवः ।। २४ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि षट्त्रिंशोऽध्यायः ।।**

नर्तनेति युजन्तः शब्दः । **सत्रेण** वेषेण । गतम् ।। २४ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां षट्त्रिंशोऽध्यायः ।।**

*****

# ३७. सप्तत्रिंशोऽध्यायः

**( बृहन्नलां सारथीकृत्योत्तरस्य गोमोचनाय प्रस्थानम् । )**

**वैशम्पायन उवाच -**

**सा प्राद्रवत् काञ्चनमाल्यधारिणी ज्येष्ठेन भ्रात्रा प्रहिता यशस्विनी ।**
**सुदक्षिणा वेदिविलग्नमध्या सा पद्मपत्राभनिभा शिखण्डिनी ।।१।।**

काञ्चनस्य माल्यम् माला तां धरतीति सा तथा । 'माला माल्यं प्रसूनयोः' इति विश्वः । भ्रातरं न लाघवदं सत्तज्ज्येष्ठलाघवदमिदं मन्तव्यम् । **सुदक्षिणा** अर्जुनेनैतत्कार्यं कारयितुमतिकुशला । वेदिवदन्तर्वेदिर्वद्विलग्नं पूर्वोत्तरभागमिति यथा न भवेत् तथा **लग्नं** सक्तं मध्यं यस्याः सा । 'लग्नं राश्युदये लग्नं सक्तं लज्जितयोरपि' इति विश्वः । मध्यं गतम् । **पद्मपत्राभनिभा** । पद्मपत्रेषु विकासितपद्मेषु आभातीत्याभं श्रीतत्त्वं, तेन निभा सदृशी सादृश्यं च । किं तेनेत्यत आह– **शिखण्डिनीति** ।।

शिखण्डः चूडा अस्या अस्तीति तथा 'शिखण्डो बर्हचूडयोः' इत्यमरहेमचन्द्रौ । अन्यत्र च 'चतुष्कपर्दा', 'चतुःशिखण्डा' इति[1] श्रुतिः प्रसिद्धा ।। १ ।।

**तन्वी शुभाङ्गी मणिचित्रमेखला मत्स्यस्य राज्ञो दुहिता श्रिया वृता ।**
**तन्नर्तनागारमरालपक्ष्मा शतह्रदा मेघमिवान्वपद्यत ।। २ ।।**

**तन्वी** कृशाङ्गी । शुभान्यङ्गानि अवयवाः अस्याः सन्तीति तथा । मणिभिश्चित्रा मेखला काञ्ची यस्याः सा 'अरालं वृजिनं जिह्मं मूर्तिमत्कुञ्चितं नतम्' इत्यमरः । अरालानि किञ्चित्कुञ्चितानि पक्ष्माणि यस्याः सा अरालपक्ष्मेति नकारान्तो वा । अकारान्तो वा । **शतह्रदा** विद्युत् । 'शम्पा शतह्रदा ह्रादिन्यैरावत्यः क्षणप्रभा' इत्यमरः ।। २ ।।

**सा [2]हस्तिहस्तोपमसङ्गतोरुरनिन्दिता चारुदती सुमध्यमा ।**
**आसाद्य तं वै वरमाल्यधारिणी पार्थं शुभा नागवधूरिव द्विपम् ।।३।।**

हस्तिहस्तोपमौ सङ्गतौ मिलितौ ऊरू यस्याः सा । **अनिन्दिता** निन्दानिमित्तदोषरहिता । चारवो दन्ता यस्याः सा । 'स्त्रियां सञ्ज्ञा-याम्'[3] इति दत्रादेशः 'उगितश्च'[4] इति ङीप् । सञ्ज्ञात्वं तु पारिभाषितम् । अयोदतीत्याद्युदाहरणात् । तदिति केचित् । वस्तुतस्तु 'नासिकोद...'[5] इति ङीपि

---

१. '**चतुष्कपर्दा** युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते ।
तस्यां सुपर्णा वृषणा निषेदतुर्यत्र देवा दधिरे भागधेयम् ।।' इति ।
'**चतुःशिखण्डा** युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते' इति च ।।
- इति च गीताभाष्योद्धृतश्रुतिवचनम् (१२/१)

२. हस्तिहस्तोपमसंहितोरुः स्वनिन्दिता । (इति गी. पाठः)

३. पा. सू (५/४/१४३)

४. पा. सू (४/१/६)

५. नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च । - पा.सू (४/१/५५)

'पद्दन्'[१] इति सूत्रे प्रभृतिग्रहणं प्रकारार्थमिति भाष्याद्युक्तेः ङीप्यपि 'ददादेश' इति बोध्यम् । **तं पार्थं** । **अब्रवीदि**त्युत्तरेणान्वयः । **नागवधूः** हस्तिस्नुषा । 'वधूः पत्न्यां स्नुषानार्योः' इति हेमचन्द्रः । **द्विपं** गजम् ।। ३ ।।

**सा रत्नभूता मनसः प्रियाऽर्थिता सुता विराटस्य यथेन्द्रलक्ष्मीः ।**
**सुदर्शनीया प्रमुखे यशस्विनी प्रीत्याऽब्रवीदर्जुनमायतेक्षणा ।।४।।**

**रत्नभूता** तद्वत्प्रकाशमानानामेव **मनसः प्रिया** मनोहरा । **अर्थिता** माल्याद्यलङ्कारवती । **यथा इन्द्रलक्ष्मीः** स्वर्गसम्पद्देवता तद्वद्दर्शनीया । अर्जुनस्य **प्रमुखे** समक्षमभवत् तस्थाविति यावत् ।। ४ ।।

**सुसंहतोरूं कनकोज्ज्वलत्वचं पार्थः कुमारीं स तदाऽभ्यभाषत ।**
**किमागमः काञ्चनमाल्यधारिणि मृगाक्षि किं त्वं त्वरितेव भामिनि ।**
**किं ते मुखं सुन्दरि न प्रसन्नमाचक्ष्व तत्त्वं मम शीघ्रमङ्गने ।।५।।**

कनकवदुज्ज्वलन्ती त्वक् यस्याः सा । तथा ताम् । **किमागमः** किमर्थमागतासि । **काञ्चनमाल्यधारिणी**त्यत्र वा पादान्त्यस्येति गुरुता । **किं त्वं त्वरितेव असी**त्य-परप्रश्नः ।। ५ ।।

**वैशम्पायन उवाच -**

**स तां दृष्ट्वा विशालाक्षीं राजपुत्रीं सखीं तथा ।**
**प्रसन्नमब्रवीद् राजन् किमागमनमित्युत ।। ६ ।।**

**राजपुत्रीम्** गतम् ।। ६ ।।

**तमब्रवीत् राजपुत्री समुपेत्य नरर्षभम् ।**
**प्रणयं भावयन्ती सा सखीमध्य इदं वचः ।। ७ ।।**

---

१. पद्दन्नोमासूहृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छसप्रभृतिषु । पा. सू. (६/१/६३)

**प्रणयं** स्नेहं विश्वासं वा । 'प्रणयः प्रेम्णि विस्रम्भे याञ्चाप्रसरयोरपि' इति विश्वः । **भावयन्ती** प्रकाशयन्ती ।। ७ ।।

**गावो राष्ट्रस्य कुरुभिः काल्यन्ते नो बृहन्नले ।**
**ता विजेतुं मम भ्राता प्रयास्यति धनुर्धरः ।। ८ ।।**

**नो राष्ट्रस्य गावः कुरुभिः काल्यन्ते** ह्रियन्ते ।। ८ ।।

**न चिरं**[1] **निहतस्तस्य सङ्ग्रामे रथसारथिः ।**
**तेन नास्ति समः सूतो योऽस्य सारथ्यमाचरेत् ।। ९ ।।**

**न चिरं** स्वल्पदिनमध्य एव । **सङ्ग्रामे निहतः** । **समः** तद्योग्यः ।। ९ ।।

**तस्मै प्रयतमानाय सारथ्यार्थं बृहन्नले ।**
**आचचक्षे हयज्ञाने सैरन्ध्री कौशलं तव ।। १० ।।**

**तव कौशलम्** ।। १० ।।

**अर्जुनस्य किलासीस्त्वं सारथिर्दयितः पुरा ।**
**त्वयाऽजयत् सहायेन पृथिवीं पाण्डवर्षभः ।। ११ ।।**
**सा सारथ्यं मम भ्रातुः कुरु साधु बृहन्नले ।**
**पुरा दूरतरं गावो ह्रियन्ते कुरुभिर्हि नः ।। १२ ।।**

**सा** त्वं यावद्दूरतरं **गावो ह्रियन्ते** ततः **पुरा** प्रागेव **सारथ्यं कुरु** ।। १२ ।।

**अथैतद् वचनं मेऽद्य नियुक्ता न करिष्यसि ।**
**प्रणयादुच्यमाना त्वं परित्यक्ष्यामि जीवितम् ।। १३ ।।**

**प्रणयात्** स्नेहात् । **उच्यमाना** कथ्यमाना यदि **न करिष्यसि** । तर्हि **जीवितम्** मत्प्राणान् । **त्यक्ष्यामि** जह्याम् ।। १३ ।।

---

१. नाचिरं (इति गी. पाठः)

**एवमुक्तस्तु सुश्रोण्या तया सख्या परन्तपः ।**
**जगाम राजपुत्रस्य सकाशममितौजसः ॥ १४ ॥**

किं वृथा कथया इति तामुत्तरोत्तरेण कृत्वा दर्शयामीत्येवं ततो नार्जुन इत्याह– **जगामेति** ॥ **राजपुत्रस्य** उत्तरस्य ॥ १४ ॥

**तमाव्रजन्तं चरितं प्रभिन्नमिव कुञ्जरम् ।**
**अन्वगच्छद्विशालाक्षी गजं गजवधूरिव ॥ १५ ॥**

**प्रभिन्नं** मतं गतम् । **विशालाक्षी** उत्तरा । **गजवधूः** शिशुमिवेति । गमनमात्रे निदर्शनम् ॥ १५ ॥

**दूरादेव तु तां प्रेक्ष्य राजपुत्रोऽभ्यभाषत ।**
**त्वया सारथिना पार्थः खाण्डवेऽग्निमतर्पयत् ॥ १६ ॥**

**तां** बृहन्नलाम् । स्वस्वसारं च ॥ १६ ॥

**पृथिवीमजयत् कृत्स्नां कुन्तीपुत्रो धनञ्जयः ।**
**सैरन्ध्री त्वां समाचष्टे सा हि जानाति पाण्डवान् ॥१७॥**

**त्वाम्** एव सारथिं **समाचष्टे** । त्वत्स्वरूपज्ञा सेत्याह– **सेति** ॥ १७ ॥

**संयच्छ मामकानश्वांस्तथैव त्वं बृहन्नले ।**
**कुरुभिर्योत्स्यमानस्य गोधनानि परीप्सतः ॥ १८ ॥**

**मामकान्** मदीयान् । **तथैव** अर्जुनस्येव ॥ १८ ॥

**अर्जुनस्य किलासीस्त्वं सारथिर्दयितः पुरा ।**
**त्वयाऽजयत् सहायेन पृथिवीं पाण्डवर्षभः ॥ १९ ॥**

**एवमुक्ता प्रत्युवाच राजपुत्रं बृहन्नला ।**
**का शक्तिर्मम सारथ्यं कर्तुं सङ्गाममूर्धनि ।। २० ।।**

**गीतं वा यदि वा नृत्यं वादित्रं वा पृथग्विधम् ।**
**तत् करिष्यामि भद्रं ते सारथ्यं तु कुतो मम ।। २१ ।।**

**उत्तर उवाच -**

**बृहन्नले [१]गायनी वा नर्तनी वा पुनर्भव ।**
**क्षिप्रं मे रथमास्थाय निगृह्णीष्व हयोत्तमान् ।। २२ ।।**

**गायनी नर्तनी** । 'गस्थकन्'[२] इत्यतो ग इत्यनुवृत्त्यान्युद्वेति युटि 'आतः'[३] इति युगागमे ङीपि गायनीति । नर्तनीति तु बाहुलकाल्ल्युटि रूपम् । **पुनः** प्रत्यागमनानन्तरम् ।। २२ ।।

**वैशम्पायन उवाच -**

**[४]स तत्र तन्नर्मयुक्तमकरोत् पाण्डवो बहु ।**
**उत्तरायाः प्रमुखतः सर्वं जानन्नरिन्दमः ।। २३ ।।**

**तत्** कवचधारणादिरूपं कर्म । **नर्मयुक्तं** विनोदसहितम् । **सर्वं** कवचधारणादिकम् ।। २३ ।।

**ऊर्ध्वमुत्क्षिप्य कवचं शरीरे प्रत्यमुञ्चत ।**
**कुमार्यस्तत्र तं दृष्ट्वा प्राहसन् पृथुलोचनाः ।। २४ ।।**

---

१. गायनो वा नर्तनो वा । (इति गी. पाठः)

२. पा.सू. (३/१/१४६)

३. पा.सू । (३/४/११०)

४. स तत्र नर्मसंयुक्तं । (इति गी. पाठः)

तदेवाह– **ऊर्ध्वेति** ।। **प्रत्यमुञ्चत** प्राक्षिपत् । **तं** व्यत्यस्तकवचं पृथूनि विस्तीर्णानि लोचनानि यासां ताः ।। २४ ।।

**स तु दृष्ट्वा विमुह्यन्तं स्वयमेवोत्तरस्ततः ।**
**कवचेन महार्हेण समनह्यद् बृहन्नलाम् ।। २५ ।।**

**विमुह्यन्तं** मोहयुक्तवद्वर्तमानम् । **समनह्यद्** बबन्ध ।। २५ ।।

**स बिभ्रत् कवचं चाग्र्यं स्वयमप्यंशुमत्प्रभम् ।**
**ध्वजं च सिंहमुच्छ्रित्य सारथिं[1] समकल्पयत् ।। २६ ।।**

**स्वयम्** उत्तरः अंशुमान् सूर्यः । **सिंहं** तच्चिह्नितं **ध्वजम्** । तत्कर्तव्यं स्वयमेव कृत्वा बृहन्नलां **सारथिं समकल्पयत्** । तत्स्थाने उपवेशयामासेति भावः ।। २६ ।।

**धनूंषि च महार्हाणि बाणांश्च रुचिरान् बहून् ।**
**आदाय प्रययौ वीरः स बृहन्नलसारथिः ।। २७ ।।**

**स** उत्तरः । बृहन्नला सारथिर्यस्य स तथा बृहन्महानग्रज इति यावत् । नलः यमो धर्मात्मा यस्य सः । 'नलो राज्ञि पितृदेवे' इति विश्वः ।। २७ ।।

**अथोत्तरा च कन्याश्च सख्यस्तामब्रुवंस्तदा ।**
**बृहन्नले आनयेथा वासांसि रुचिराणि च ।। २८ ।।**

**पाञ्चालिकार्थं चित्राणि सूक्ष्माणि च मृदूनि च ।**
**विजित्य सङ्ग्रामगतान् भीष्मद्रोणमुखान् कुरून् ।।२९।।**

**पाञ्चालिका** वस्त्रादिनिर्मितपुत्रिका पुत्तलीका वा अपभ्रष्टभाषायां 'गोम्बि' इति । 'पाञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृता' इत्यमरः । 'पाञ्चालिका स्त्रियां वस्त्रपुत्रिकागीतिभेदयोः' इति **मेदिनी** ।। २९ ।।

---

१. सारथ्ये । (इति गी. पाठः)

**एवं ता ब्रुवतीः कन्याः सहिताः पाण्डुनन्दनः ।**
**प्रत्युवाच हसन् पार्थो मेघदुन्दुभिनिस्वनः ।। ३० ।।**

**यद्युत्तरोऽयं सङ्ग्रामे विजेष्यति महारथान् ।**
**अथाहरिष्ये वासांसि दिव्यानि रुचिराणि च ।। ३१ ।।**

**वैशम्पायन उवाच -**

**एवमुक्त्वा तु बीभत्सुस्ततः प्राचोदयद्धयान् ।**
**कुरूनभिमुखः शूरो नानाध्वजपताकिनः ।। ३२ ।।**

**नानाध्वजपताकिनः** गतं कुरून् ।। ३२ ।।

**तमुत्तरं वीक्ष्य रथोत्तमे स्थितं बृहन्नलासारथिनं महाभुजम् ।**
**स्त्रियश्च कन्याश्च सुसंयतव्रताः प्रदक्षिणं चक्रुरथोचुरङ्गनाः ।।३३।।**

बृहन्नलैव सारथिः बृहन्नलासारथिः ततो व्रीह्यादीन् । सुसंयतान्यविच्छिन्नानि व्रतानि यासां ताः प्रदक्षिणं चक्रुः । भाविमङ्गलसूचकशकुनार्थम् ।। ३३ ।।

**यदर्जुनस्यर्षभतुल्यगामिनः पुराऽभवत् खाण्डवदाहमङ्गलम् ।**
**कुरून् समासाद्य रणे बृहन्नले सहोत्तरेणाद्य तदस्तु मङ्गलम् ।।३४।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि सप्तत्रिंशोऽध्यायः ।।**

ऋषभस्य उक्ष्णः तुल्यं गन्तुं शीलमस्यास्तीति तथा तस्य । खाण्डवदाहाद् यन्मङ्गलमभवत्, **तत्तादृशं मङ्गलं** । **समासाद्य** आसादयित्वा स्थितस्य ।।३४।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां सप्तत्रिंशोऽध्यायः ।।**

*****

# ३८. अष्टत्रिंशोऽध्यायः

( अर्जुनेन उत्तरस्य समाश्वासनं समरोद्योगश्च )

**वैशम्पायन उवाच -**

**स राजधान्या निर्याय वैराटिरकुतोभयः ।**
**प्रयाहीत्यब्रवीत् सूतं यत्र ते कुरवोऽगताः ।। १ ।।**

**निर्याय** बहिर्गत्वा । **गताः** गा गृहीत्वा **अगताः** वर्तमाना इति यावत् ।। १ ।।

**समवेतान् कुरून् सर्वाञ्जिगीषूनविजित्य वै ।**
**गास्तेषां क्षिप्रमादाय पुनरेष्याम्यहं पुरम् ।। २ ।।**

तान् तवास्मीति वादिनः । तेषां तदाहृतत्वात् तत्सम्बन्धिनीः । हस्तिनावर्ती गत्वा तेषां गा अपि आनयिष्याम इति दुराशया किमान्ध्यम् ।। २ ।।

**ततस्तांश्चोदयामास सदश्वान् पाण्डुनन्दनः ।**
**ते हया नरसिंहेन चोदिता वातरंहसः ।**
**आलिखन्त इवाकाशमूहुः काञ्चनमालिनः ।। ३ ।।**

वातवद् रंहो वेगो येषां ते तथा । **आकाशमलिखन्त** इव खुरैर्विदारयन्त इव ऊहुः । रथमिति शेषः ।। ३ ।।

**नातिदूरमथो गत्वा मत्स्यपुत्रधनञ्जयौ ।**
**अवेक्षेतामममित्रघ्नौ कुरूणां बलिनां बलम् ।। ४ ।।**

**अमित्रघ्नौ** मूलविभुजादित्वात्कः । **बलं** सैन्यम् ।। ४ ।।

**श्मशानमभितो गत्वा आससाद [१]कुरूनसौ ।**
**तां शमीमन्ववीक्षेतां व्यूढानीकांश्च सर्वशः ॥ ५ ॥**

**तां शमीं** स्वधनुरादिधारिणीम् । **अन्ववेक्षत्** अपश्यत् ॥ ५ ॥

**तदनीकं महत् तेषां विबभौ सागरोपमम् ।**
**सर्पमाणमिवाकाशे वनं बहुलपादपम् ॥ ६ ॥**

**सर्पमाणं** प्रसर्पन्तम् ॥ ६ ॥

**ददृशे पार्थिवो रेणुर्जनितस्तेन सर्पता ।**
**दृष्टिप्रणाशो भूतानां दिवस्पृक् कुरुसत्तमम् ॥ ७ ॥**

**सर्पता तेन** सैन्येन **जनितो रेणुः** धूलिः दृष्टीनां लोचनानां प्रणाशो येन । **दिवस्पृक्** सहस्रधनुःप्रमाणादूर्ध्वं दिवमुच्यते । 'सहस्रधनुषस्तूर्ध्वं द्युशब्देनापि भण्यते'[२] इति प्रथमतात्पर्योक्तेः । तादृशो **ददृशे** ॥ ७ ॥

**तदनीकं महद्दृष्ट्वा गजाश्वरथसङ्कुलम् ।**
**कर्णदुर्योधनकृपैर्गुप्तं शान्तनवेन च ॥ ८ ॥**

**द्रोणेन च सपुत्रेण महेष्वासेन धीमता ।**
**हृष्टरोमा भयोद्विग्नः पार्थं वैराटिरब्रवीत् ॥ ९ ॥**

**उत्तर उवाच -**

**नोत्सहे कुरुभिर्योद्धुं रोमहर्षं हि पश्य मे ।**
**बहुप्रवीरमत्युग्रं देवैरपि दुरासदम् ॥ १० ॥**

---

१. कुरूनथ । (इति गी. पाठः)

२. भागवततात्पर्योद्धृत(२/७/२७)तन्त्रमालावचनम् ।

**बहुप्रवीरं** बहुव्रीहिः ।। १० ।।

**प्रतियोद्धुं न शक्ष्यामि कुरुसैन्यमनन्तकम् ।**
**नाशंसे भारतीं सेनां प्रवेष्टुं भीमकार्मुकाम् ।। ११ ।।**

**प्रवेष्टुमपि नाशंसे** दूरे योद्धुम् ।। ११ ।।

**रथनागाश्वकलिलां पत्तिध्वजसमाकुलाम् ।**
**दृष्ट्वैव हि परानाजौ मनः प्रव्यथतीव मे ।। १२ ।।**

**परान्** अरीन् ।। १२ ।।

**यत्र द्रोणश्च भीष्मश्च कृपः कर्णो विविंशतिः ।**
**अश्वत्थामा विकर्णश्च सोमदत्तश्च बाह्लिकः ।। १३ ।।**

**दुर्योधनस्तथा वीरो राजा च रथिनां वरः ।**
**द्युतिमन्तो महेष्वासाः सर्वे युद्धविशारदाः ।। १४ ।।**

**दृष्ट्वैव हि कुरूनेतान् व्यूढानीकान् प्रहारिणः ।**
**हृषितानि च रोमाणि कश्मलं चागतं मम ।। १५ ।।**

**कश्मलं** मूर्च्छाम् ।। १५ ।।

**वैशम्पायन उवाच -**

**अवियातो वियातस्य मौर्ख्याद् धूर्तस्य पश्यतः ।**
**परिदेवयते मन्दः सकाशे सव्यसाचिनः ।। १६ ।।**

**अवियातः** वैरिमुखे विनयवान् । **वियातस्य** शत्रुमुखे विनयरहितस्य शूरस्येति यावत् । **धूर्तस्य** वेषधारिणः । **सव्यसाचिनः सकाशे** समीपे **परिदेवयते** प्रलापमकरोत् ।। १६ ।।

**त्रिगर्तान् मे पिता यातः शून्ये सम्प्रणिधाय माम् ।**
**सर्वां सेनामुपादाय न मे सन्तीह सैनिकाः ॥ १७ ॥**

शून्ये पुरे ॥ १७ ॥

**सोऽहमेको बहून् बालः कृतास्त्रानकृतश्रमः ।**
**प्रतियोद्धुं न शक्ष्यामि निवर्तस्व बृहन्नले ॥ १८ ॥**

**कृतास्त्रान्** शिक्षितास्त्रान् । **अकृतश्रमः** अशिक्षितास्त्रः ॥ १८ ॥

**बृहन्नलोवाच -**

**भयेन दीनरूपोऽसि द्विषतां हर्षवर्धनः ।**
**न च तावत् कृतं किञ्चित् परैः कर्म रणाजिरे ॥ १९ ॥**

**परैः** शत्रुभिः **रणाजिरे** रणाङ्गणे **तावत् किञ्चिदपि कर्म न कृतं** किमर्थं **भयेन दीनरूपोऽसि** । 'अजिरशिशिर...'[१] इति निपातितः शब्दः । 'अजिरं प्राङ्गणे वाते'[२] इति विश्वः ॥ १९ ॥

**स्वयमेव च मामात्थ वह मां कौरवान् प्रति ।**
**सोऽहं त्वां तत्र नेष्यामि यत्रैते बहुला ध्वजाः ॥ २० ॥**

**सोऽहं** त्वदाज्ञप्तः ॥ २० ॥

**मध्यमामिषगृध्राणां कुरूणामाततायिनाम् ।**
**नेष्यामि त्वां महाबाहो पृथिव्यामपि युद्ध्यताम् ॥२१॥**

---

१. अजिरशिशिरशिथिलशिबिरस्थिरस्फिरस्थविरखदिराः (उणादिसूत्रम् १/५३) - इति किरच् ।
२. अजिरं प्राङ्गणे वाते विषये दुर्दुरे तनौ । - इति मेदिनी ।

**आमिषगृध्राणां** वादिविषयाभिकाङ्क्षावताम् । 'आमिषः सुन्दराकारे रूपादिविषयेऽपि च' इति विश्वः । **पृथिव्यां** तद्विषयेऽपि **युद्ध्यताम्** ।। २१ ।।

**तथा स्त्रीषु प्रतिश्रुत्य पौरुषं पुरुषेषु च ।**
**कत्थमानोऽभिनिर्याय किमर्थं न युयुत्ससे ।। २२ ।।**

**स्त्रीषु** योत्स्यामीति **प्रतिश्रुत्य तथा पुरुषेषु पौरुषं कत्थमानः किमर्थं न युयुत्ससे** योद्धुं नेच्छसि ।। २२ ।।

**न चेद् विजित्य गास्तास्त्वं गृहान् वै प्रतियास्यसि ।**
**प्रहसिष्यन्ति वीरास्त्वां नरा नार्यश्च सङ्गताः ।। २३ ।।**

**गृहान्** 'गृहाः पुंसि च भूम्न्येव' इत्यमरः । **सङ्गताः** मिलिताः सन्तः ।। २३ ।।

**अहमप्यत्र सैरन्ध्र्या ख्याता सारथ्यकर्मणि ।**
**न च शक्ष्याम्यनिर्जित्य गाः प्रयातुं पुरं प्रति ।। २४ ।।**

**गा अनिर्जित्य** । सा हसेदिति भावः ।। २४ ।।

**स्तोत्रेण चैव सैरन्ध्र्यास्तव वाक्येन तेन च ।**
**कथं न युद्ध्येयमहं कुरून् सर्वान् स्थिरो भव ।। २५ ।।**

**कथं न युद्ध्येयम्,** किन्तु युद्ध्येयमेव । **स्थिरो भव** ।। २५ ।।

**उत्तर उवाच -**

**कामं हरन्तु मत्स्यानां भूयांसः कुरवो धनम् ।**
**प्रहसन्तु च मां नार्यो नरा वाऽपि बृहन्नले ।। २६ ।।**

**कामं** यथेच्छम् ।। २६ ।।

[१]युद्धेन नास्ति कार्यं मे गावो गच्छन्तु वाऽपि मे ।
शून्यं मे नगरं चापि पितुश्चैव बिभेम्यहम् ।। २७ ।।

**युद्धेन मे** मम **कार्यं नास्ति । मे पितुः शून्यं नगरं गच्छतु । अहं** सर्वथा यतो **बिभेमि** तस्मादिति पूर्वेणान्वयः ।। २७ ।।

**वैशम्पायन उवाच -**

इत्युक्त्वा प्राद्रवद् भीतो रथात् प्रस्कन्द्य कुण्डली ।
त्यक्त्वा मानं च दर्पं च विसृज्य सशरं धनुः ।। २८ ।।

**बृहन्नलोवाच -**

नैष शूरैः स्मृतो धर्मः क्षत्रियस्य पलायनम् ।
श्रेयस्तु मरणं युद्धे न भीतस्य पलायनम् ।। २९ ।।

एष इति धर्मशब्दापेक्षया पुल्लिङ्गनिर्देशः । 'युद्धे चाप्यपलायनम्'[२] इति गीतागीतेः ।। २९ ।।

**वैशम्पायन उवाच -**

एवमुक्त्वा तु कौन्तेयः सोऽवप्लुत्य रथोत्तमात् ।
तमन्वधावद्धावन्तं राजपुत्रं धनञ्जयः ।। ३० ।।

दीर्घां वेणीं विधुन्वानः साधु रक्ते च वाससी ।
विधूय वेणीं धावन्तमजानन्तोऽर्जुनं तदा ।। ३१ ।।

**विधुन्वानः** कम्पयानः । **अर्जुनमजानन्तः** अर्जुनोऽयमित्यजानन्तः ।। ३१ ।।

---

१. सङ्ग्रामे न च । (इति गी पाठः)

२. गीता (१८/४३)

**सैनिकाः प्राहसन् केचित् तथारूपमवेक्ष्य तम् ।**
**तं शीघ्रमभिधावन्तं सम्प्रेक्ष्य कुरवोऽब्रुवन् ।। ३२ ।।**

**तथा** स्त्रीसदृशं **रूपं** यस्य तम् ।। ३२ ।।

[१]**क एष वेषप्रच्छन्नो भस्मनेव हुताशनः ।**
**किञ्चिदस्य यथा पुंसः किञ्चिदस्य यथा स्त्रियाः ।। ३३ ।।**

वेषेण प्रच्छन्नः **वेषप्रच्छन्नः** । भस्मना हुताशन इव । तथा रूपमित्युक्तमाह– **किञ्चिदिति** ।। ३३ ।।

**सारूप्यमर्जुनस्यैव क्लीबरूपं बिभर्ति च ।**
**तदेवैतच्छिरो ग्रीवं तौ बाहू परिघोपमौ ।**
**तद्वदेवास्य विक्रान्तं नायमन्यो धनञ्जयात् ।। ३४ ।।**

पुरुषसारूप्येऽपि **अर्जुनस्यैव सारूप्यं क्लीबरूपं** षण्डरूपं **बिभर्ति** धारयति । **तदेवैतत्** पूर्वदृष्टमेवाप्राण्यङ्गत्वात् द्वन्द्वैकवद्भावः । किञ्चित् **तद्वद्** अर्जुनवत् । **विक्रान्तं** पादविक्षेपः ।। ३४ ।।

**अमरेष्विव देवेन्द्रो मानुषेषु धनञ्जयः ।**
**एकः कोऽस्मानुपायायादन्यो लोके धनञ्जयात् ।। ३५ ।।**
**एकः पुत्रो विराटस्य शून्ये स निहितः पुरे ।**
**स एष किल निर्यातो बालभावान्न पौरुषात् ।। ३६ ।।**

प्रायेणेत्थं भवेदिति ऊहयन्ति– **एक इति** ।। **निहितः** स्थापितः ।। ३६ ।।

**सत्रेण नूनं च्छन्नं हि चरन्तं पार्थमर्जुनम् ।**
**उत्तरः सारथिं कृत्वा निर्यातो नगराद्बहिः ।। ३७ ।।**

---

१. क एष वेषसञ्छन्नो..... । (इति गी. पाठः)

**तं नूनमेष धावन्तं जिघृक्षति धनञ्जयः ॥ ३८ ॥**

**जिघृक्षति** ग्रहीतुमिच्छति ॥ ३८ ॥

**वैशम्पायन उवाच -**

**इति स्म कुरवः सर्वे विमृशन्तः पृथक् पृथक् ।**
**नच व्यवसितुं किञ्चिदुत्तरं शक्नुवन्ति ते ॥ ३९ ॥**

**उत्तरं** अर्जुनपरिज्ञानानन्तरं कार्यं **व्यवसितुं** निश्चेतुं **न शक्नुवन्ति** ॥ ३९ ॥

**च्छन्नं तदा तं सत्रेण पाण्डवं प्रेक्ष्य भारत ।**
**उत्तरं तु प्रधावन्तमभिद्रुत्य धनञ्जयः ।**
**गत्वा पदशतं तूर्णं केशपक्षे परामृशत् ॥ ४० ॥**

**सोऽर्जुनेन परामृष्टः पर्यदेवयदार्तवत् ।**
**बहुलं कृपणं चैव विराटस्य सुतस्तदा ॥ ४१ ॥**

**केशपक्षे** कचे । **कृपणं** यथा भवति तथा । **आर्तवत्** आर्तः गतम् ॥ ४१ ॥

**उत्तर उवाच -**

**शृणुयास्त्वं हि कल्याणि बृहन्नले सुमध्यमे ।**
**निवर्तय रथं क्षिप्रं [१]जीवन् भद्राणि पश्यति ॥ ४२ ॥**

बृहन्नला च सा सुमध्यमा इति पदमेकम् । बृहन्नलसारथिरित्यादेः सञ्ज्ञात्वानवक्लृप्तेः पुंवद्भावः सम्भवति । आकारद्वयविवक्षया हे **बृहन्नले** हे **कल्याणि सुमध्यमे** इति सम्बोधनं वा । बृहन्नले सुमध्यमे **इति पाठे** वृत्तविच्छित्तिरेवं बहुप्रयोक्तुर्न दोषायेति वा । कुतः तथा तद्वर्तनीतो निवर्तनमित्यतः कीर्तयति । **जीवन्** नरः **भद्राणि** शतानि

---

१. 'जीवन्नरः भद्रशतानि पश्यति ।' - इति वाल्मीकिरामायणे । (५/१३)

बहुमङ्गलानि **पश्यति** विलोकयतीति । 'एति जीवन्तमानन्दः'[१] इति रामायणोक्तेः ।। ४२ ।।

**शातकुम्भस्य शुद्धस्य शतं निष्कान् ददामि ते ।**
**मणीनष्टौ च वैदूर्यान् हेमबद्धान् महाप्रभान् ।। ४३ ।।**

तं प्रलोभ्य पत्तनं नेतुं यतते– **शातकुम्भस्येति** ।। **शुद्धस्य शातकुम्भस्य** निष्ठापिताष्टापदस्य । **निष्कान्** शतम् । निष्कनिष्कर्षस्तु प्राक् कृतः[२] । **अष्टौ मणीन् वैदूर्याणि** सन्ति येषां ते तथा । **हेमबद्धान्** तदागारान् ।। ४३ ।।

**हेमदण्डप्रतिच्छन्नं रथं युक्तं च सुव्रतैः ।**
**मतांश्च दश मातङ्गान् मुञ्च मां त्वं बृहन्नले ।। ४४ ।।**

दण्डोऽत्र ध्वजः । **सुव्रतैः** । सुशिक्षैर्हयैरिति शेषः । **मां मुञ्च** । तव किं वा भवतु त्यज मन्मात्रमिति भावः ।। ४४ ।।

**वैशम्पायन उवाच -**

**एवमादीनि वाक्यानि विलपन्तमचेतसम् ।**
**प्रहस्य पुरुषव्याघ्रो रथस्यान्तिकमानयत् ।। ४५ ।।**

**अचेतसम्** अमनस्कमेतत्कर्मणि । जडप्रायं वा ।। ४५ ।।

**अथैनमब्रवीत् पार्थो भयार्तं नष्टचेतसम् ।**
**यदि नोत्सहसे योद्धुं शत्रुभिः शत्रुकर्षण ।। ४६ ।।**

तं सारथ्ये वा सुमुखीकर्तुं **शत्रुकर्षण** इत्युक्तिः ।। ४६ ।।

१. इति वाल्मीकिरामायणे । (५/३४)
२. १८/१२

**एहि मे त्वं हयान् यच्छ युद्ध्यमानस्य शत्रुभिः ।**
**प्रयाह्येतद् रथानीकं मद्बाहुबलरक्षितः ।। ४७ ।।**

**युद्ध्यमानस्य** मम । सोत्प्रासं तं प्रोत्साहयन्नाह । मम बाह्वोर्बलं तेनाभिरक्षितः इति ।। ४७ ।।

**अप्रधृष्यतमं घोरं गुप्तं वीरैर्महारथैः ।**
**मा भैस्त्वं राजपुत्राग्र्य क्षत्रियोऽसि परन्तप ।। ४८ ।।**

**राजपुत्राग्र्य** राजपुत्रश्रेष्ठ ।। ४८ ।।

**कथं पुरुषशार्दूल शत्रुमध्ये विषीदसि ।**
**अहं वै कुरुभिर्योत्स्ये विजेष्यामि च ते पशून् ।। ४९ ।।**

जयः पङ्क्षाङ्कुरित्यतो **विजेष्यामि पशून्** इति ।। ४९ ।।

**प्रविश्यैतत् रथानीकमप्रधृष्यं दुरासदम् ।**
**यन्ता भव नरश्रेष्ठ योत्स्येऽहं कुरुभिः सह ।। ५० ।।**

**यन्ता** सारथिः ।। ५० ।।

**एवं ब्रुवाणो बीभत्सुर्वैराटिमपराजितः ।**
**समाश्वास्य मुहूर्तं तमुत्तरं भरतर्षभ ।। ५१ ।।**

**मुहूर्तं समाश्वास्य** । तत्र न लवोऽपि लवस्त्यक्त इति द्वितीयया बोध्यते ।।५१।।

**तत एनं विचेष्टन्तमकामं भयपीडितम् ।**
**रथमारोपयामास पार्थः प्रहरतां वरः ।। ५२ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि अष्टत्रिंशोऽध्यायः ।।**

**विचेष्टं चेष्टारहितम्** । **एनं अकामं** समरमनिच्छन्तम् ।। ५२ ।।

।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां अष्टत्रिंशोऽध्यायः ।।

*****

# ३९. एकोनचत्वारिंशोऽध्यायः

( द्रोणकर्तृकार्जुनपराक्रमप्रशंसनम् )

**वैशम्पायन उवाच -**

**तं दृष्ट्वा क्लीबवेषेण रथस्थं नरपुङ्गवम् ।**
**शमीमभिमुखं यान्तं रथमारोप्य चोत्तरम् ।। १ ।।**

**आरोप्य** बलात् ।। १ ।।

**भीष्मद्रोणमुखास्तत्र कुरवो रथिसत्तमाः ।**
**वित्रस्तमनसः सर्वे धनञ्जयकृताद्भयात् ।। २ ।।**

**धनञ्जयकृतात्** धनञ्जय ऊहितः ।। २ ।।

**तानवेक्ष्य हतोत्साहानुत्पातानपि चाद्भुतान् ।**
**गुरुः शस्त्रभृतां श्रेष्ठो भारद्वाजोऽभ्यभाषत ।। ३ ।।**

**हतोत्साहांस्तान्** सैनिकान् ।। ३ ।।

**चण्डाश्च वाताः संवाति रूक्षाः शार्करवर्षिणः ।**
**भस्मवर्णप्रकाशेन तमसा संवृतं नभः ।। ४ ।।**

तानेवोत्पतांच्छृङ्गिग्राहिकयाऽऽह— **चण्डा इति** ।। **चण्डाः** स्वभावतः । **रूक्षाः** शिलानीहारादिसमाहारेण । **शार्करवर्षिणः** शर्कराणां क्षुद्रपाषाणानां इदं शार्करं तच्च तद्वर्षं च तदेषामस्तीति तथा । **शर्करवर्षिण इति पाठे** लिङ्गमशिष्यम् ।। ४ ।।

**रूक्षवर्णाश्च जलदा दृश्यन्तेऽद्भुतदर्शनाः ।**
**निःसरन्ति च कोशेभ्यः शस्त्राणि विविधानि च ।। ५ ।।**

**रूक्षवर्णाः** क्रूरवर्णाः ।। ५ ।।

**शिवाश्च विनदन्त्येता दीप्तायां दिशि दारुणाः ।**
**हयाश्चाश्रूणि मुञ्चन्ति ध्वजाः कम्पन्त्यकम्पिताः ।।६ ।।**

**शिवाः** शृगालनार्यः । स्वरविशेषज्ञानाच्छिवा इत्युक्तिः । उक्तं तृतीये तत्तात्पर्ये च - 'सृगालाश्चापि ठङ्कारैः प्रणेदुरशिवाः शिवाः'[१] इति । [२]'स्वरस्तत्र सृगालानां शिवानां चान्यथास्वरः'[३] इति । **दीप्तायां** धर्मयुक्तायाम् । **अकम्पिताः** केनापि । **कम्पन्ति** कम्पन्ते ।। ६ ।।

**यादृशान्यत्र रूपाणि सन्दृश्यन्ते बहूनि च ।**
**यत्ता भवन्तस्तिष्ठन्तु साध्वसं समुपस्थितम् ।। ७ ।।**

**यादृशानि अत्र रूपाणि** उत्पातस्य । एवं सुबहून्यपि दृश्यन्ते **तस्माद्यत्ताः** सन्तः **तिष्ठध्वं** तिष्ठत ।। ७ ।।

**रक्षध्वमपि चात्मानं व्यूहध्वं वाहिनीमपि ।**
**वैशसं च प्रतीक्षध्वं रक्षध्वं चापि गोधनम् ।। ८ ।।**

**वैशसं** आगच्छत्कदनम् ।। ८ ।।

**एष वीरो महेष्वासः सर्वशस्त्रभृतांवरः ।**
**आगतः क्लीबवेषेण पार्थो नास्त्यत्र संशयः ।। ९ ।।**

---

१. भागवते । (३/१८/९)

२. 'नाशस्तत्र सृगालानां शिवानां चान्यथा स्वरे' । - इति भा.ता.पाठः ।

३. भागवततात्पर्ये (३/१८/९)

**[१]नदीज लङ्केशवनारिकेतुः नगाह्वयो नाम नगारिसूनुः ।**
**एषोऽङ्गनावेषधरः किरीटी जित्वाऽव यं नेष्यति चाद्य गा वः ॥१०॥**

**साम्मुग्धेनोक्त्वा विशिष्याह– नदीजेति ।।** हे **नदीज** गाङ्गेय । **लङ्केशवनारिकेतुः** लङ्केशो रावणस्तस्य यद्वनं अशोकसंज्ञं तस्यारिर्हनूमान् स एव केतौ यस्य स तथा । **नगाह्वयः** नगोऽर्जुनवृक्षः तस्याह्वयो यस्य । नायं प्रसिद्धः । नगारिः पर्वतद्विडिन्द्रः तस्य सूनुः । यं दुर्योधनं **जित्वा वः गाः नेष्यति** । तं राजानम् अव रक्षेत्यर्थः ।।१०।।

**स एष पार्थो विक्रान्तः सव्यसाची परन्तपः ।**
**नायुद्धेन निवर्तेत सर्वैरपि [२]सुरासुरैः ।। ११ ।।**

**अयुद्धेन** युद्धं विना ।। ११ ।।

**क्लेशितश्च वने शूरो वासवेन च शिक्षितः ।**
**अमर्षवशमापन्नो वासवप्रतिमो युधि ।**
**नेहास्य प्रतियोद्धारमहं पश्यामि कौरवाः ।। १२ ।।**

सामर्थ्यविशेषे निमित्तान्तरं चाह– **क्लेशित इति** ।। १२ ।।

**महादेवोऽपि पार्थेन श्रूयते युधि तोषितः ।**
**किरातवेषप्रच्छन्नो गिरौ हिमवति प्रभुः ।। १३ ।।**

---

१. अर्थनिगृह्यकथनंगुह्यभाषा, यथा 'नदीजलङ्केशवनारिकेतुर्नगाह्वयोनामनगारिसूनुः' इत्यदिकम्। हे नदीज भीष्म लङ्केशवनस्य अरिहरनूमान् केतौ यस्य सः अर्जुनः इत्यस्यार्थस्य निगूहनात् गुह्यभाषेत्यर्थः ।
- इति श्रीवादिराजतीर्थश्रीचरणाः (महाभारततात्पर्यनिर्णयभावप्रकाशिकायाम् । - ९/१३८)

२. मरुद्गणैः । इति क्वचित् ।

**कर्ण उवाच -**

**सदा भवान् फाल्गुनस्य गुणैरस्मान् विकत्थसे ।**
**न चार्जुनः कलापूर्णो मम दुर्योधनस्य च ॥ १४ ॥**

**अस्मान् विकत्थसे** निन्दसि । कलया पूर्णः सदृशो नेत्यर्थः ॥ १४ ॥

**दुर्योधन उवाच -**

**यद्येष पार्थो राधेय कृतं कार्यं भवेन्मम ।**
**ज्ञाताः पुनश्चरिष्यन्ति द्वादशाब्दान् विशाम्पते ॥ १५ ॥**

**यद्येषः** आगन्ता । **कार्यं कृतम्** । तदेवाह– **ज्ञाता इति** ॥ **चरिष्यन्ति** वन इति शेषः । **विशांपते** इति स्वदत्ताङ्गदेशाधिपत्याभिमानेन सम्बुद्धिः ॥ १५ ॥

**अथैष कश्चिदेवान्यः क्लीबवेषेण मानवः ।**
**शरैरेनं सुनिशितैः पातयिष्यामि भूतले ॥ १६ ॥**

**वैशम्पायन उवाच -**

**तस्मिन् ब्रुवति तद्वाक्यं धार्तराष्ट्रे परन्तप ।**
**भीष्मो द्रोणः कृपो द्रौणिः पौरुषं तदपूजयन् ॥ १७ ॥**

**॥ इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि एकोनचत्वारिंशोऽध्यायः ॥**

**पौरुषं तदपूजयन्** । स्वगोष्ठीनिष्ठं प्रलापमात्रमेतदित्युपजहसुः ॥ १७ ॥

**॥ इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां एकोनचत्वारिंशोऽध्यायः ॥**

*****

# ४०. चत्वारिंशोऽध्यायः

( शमीवृक्षादस्त्रावतारार्थं उत्तरं प्रति अर्जुनस्य आदेशः । )

**वैशम्पायन उवाच -**

**तां शमीमुपसङ्गम्य पार्थो वैराटिमब्रवीत् ।**
**सुकुमारं समाज्ञाय सङ्ग्रामे नातिकोविदम् ।। १ ।।**

**वैराटिं सुकुमारं** कोमलं **नातिकोविदं** अप्रगल्भम् ।। १ ।।

**समादिष्टो मया क्षिप्रं धनूंष्यवहरोत्तर ।**
**नेमानि हि त्वदीयानि सोढुं शक्ष्यन्ति मे बलम् ।**
**भारं चापि गुरुं सोढुं कुञ्जरं वा प्रमर्दितुम् ।। २ ।।**

**धनूंषि** बहुवनचमाद्यर्थे । धनुश्शरादीन् **अवहर** अवतारय ।। २ ।।

**मम वा बाहुविक्षेपं शत्रूनिह विजेष्यतः ।**
**तस्माद्भूमिञ्जयारोह शमीमेतां पलाशिनीम् ।। ३ ।।**

**बाहुविक्षेपं** वा सोढुं न शक्ष्यन्ति । **विजेष्यतः** विजेष्यमाणस्य । हे **भूमिञ्जय** ।।३।।

**अस्यां हि पाण्डुपुत्राणां धनूंषि निहितान्युत ।**
**युधिष्ठिरस्य भीमस्य बीभत्सोर्यमयोस्तथा ।। ४ ।।**

यमयोरिति **पाण्डुपुत्राणाम्** ।। ४ ।।

**ध्वजाः शराश्च शूराणां दिव्यानि कवचानि च ।**
**अत्र चैतन्महावीर्यं धनुः पार्थस्य गाण्डिवम् ।। ५ ।।**

**महावीर्यं** अत्यन्तदृढम् । **गाण्डीवं** गतम् ।। ५ ।।

**एकं शतसहस्रेण समितं राष्ट्रवर्धनम् ।**
**व्यायामसहमत्यर्थं तृणराजसमं महत् ।। ६ ।।**

**शतसहस्रेण** भारेण **समितं** परिमितम् । 'भारः स्याद्विंशतिस्तुला' इत्युक्तेः । लक्षभारोपेतमित्यर्थः । **व्यायामसहं** सामर्थ्यसहम् । 'व्यायामं पौरुषं श्रमः' इति विश्वः । **तृणराजसमं** तालसमम् । 'तृणराजाह्वयस्तालः' इत्यमरः ।। ६ ।।

**सर्वायुधमहामात्रं शत्रुसम्बाधकारकम् ।**
**सुवर्णविकृतं दिव्यं श्लक्ष्णमायतमव्रणम् ।। ७ ।।**

सर्वायुधेषु महामात्रं अतिप्रमाणं सम्बाधः पीडा । **दिव्यं** दिवि भवम् । **श्लक्ष्णं** मनोहरम्। **आयतं** दीर्घम् । **अव्रणं** निश्छिद्रम् ।। ७ ।।

**अलं भारं गुरुं वोढुं दारुणं चारुदर्शनम् ।**
**तादृशान्येव सर्वाणि बलवन्ति दृढानि च ।**
**युधिष्ठिरस्य भीमस्य बीभत्सोर्यमयोस्तथा ।। ८ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि चत्वारिंशोऽध्यायः ।।**

**वोढुं अलं** समर्थम् । **बीभत्सोर्यादृशं** तादृशान्येव धनूंषि युधिष्ठिरादीनामपीत्यर्थः ।। ८ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां चत्वारिंशोऽध्यायः ।।**

*****

# ४१. एकचत्वारिंशोऽध्यायः

(उत्तरकर्तृकं पाण्डवानां दिव्यधनुरादीनामवतारणम्)

**उत्तर उवाच -**

**अस्मिन् वृक्षे किलोद्बद्धं शरीरमिति नः श्रुतम् ।**
**तदहं राजपुत्रः सन् स्पृशेयं पाणिना कथम् ॥ १ ॥**

**शरीरं** शवस्य ॥ १ ॥

**नैवंविधं मया युक्तमालब्धुं क्षत्रयोनिना ।**
**महता राजपुत्रेण मन्त्रयज्ञविदा सता ॥ २ ॥**

**आलब्धुं** स्प्रष्टुम् । आस्पृशे निमित्तान्युतम्भयति – **क्षत्रयोनिनेत्यादिना** ॥२॥

**स्पृष्टवन्तं शरीरं मां शववाहमिवाशुचिम् ।**
**कथं वाऽव्यवहार्यं वै कुर्वीथास्त्वं बृहन्नले ॥ ३ ॥**

लोकापवादभीरुरहमित्याह–**स्पृष्टवन्तमिति** ॥ हे **बृहन्नले त्वं** माम् **अव्यवहार्यम्** असम्भाष्यं **कथं कुर्वीथाः** । अकार्यं कारयित्वा कथमपवादविषयं कुर्याः ॥३॥

**बृहन्नलोवाच -**

**व्यवहार्यश्च राजेन्द्र शुचिश्चैव भविष्यसि ।**
**धनूंष्येतानि मा भैस्त्वं शरीरं नात्र विद्यते ॥ ४ ॥**

सति शवशरीरे तत्स्पर्शे कथयाशुचित्वादिकं कथं नेयामित्यत आह । **शरीरमत्र** शम्यां **न विद्यत** इति । कथमर्जुनः स्वयं बद्ध्वा तत्तनुमेतर्ह्यनृतमवादीद्धर्मविदिति चेत्, न । सुस्मूर्षतु भवानस्मदीयं मायातनुमिति विवरणम् । नास्तीत्युक्तिमात्रेणार्जुनेच्छायत्तस्य तस्य अदर्शनसम्भवात् ॥ ४ ॥

**दायादं मत्स्यराजस्य कुले जातं मनस्विनम् ।**
**कथं त्वां निन्दितं कर्म कारयेयं नृपात्मज ॥ ५ ॥**

हे **नृपात्मज त्वां निन्दितं कर्म कथं** अहं **कारयेयम्** । 'हृक्रोरन्यतरस्याम्'[1] इति कर्तुः कर्मसञ्ज्ञायां त्वामित्युपपद्यते । 'दायादौ सुतबान्धवौ'[2] इत्युक्तेर्न भ्रातेति वक्तुं नृपात्मजेति सोऽपि कश्चिद्राजा नाभागवन्न भागभोगीत्यतो **दायादं** इति ॥ ५ ॥

**वैशम्पायन उवाच -**

**एवमुक्तः स पार्थेन रथात् प्रस्कन्द्य कुण्डली ।**
**आरुरोह शमीवृक्षं वैराटिरवशस्तदा ॥ ६ ॥**

**अवशः** परतन्त्रः अनिर्वाहात् ॥ ६ ॥

**तमन्वशासच्छत्रुघ्नो रथे तिष्ठन् धनञ्जयः ।**
**अवरोपय वृक्षाग्राद्धनूंष्येतानि मा चिरम् ॥ ७ ॥**

**अन्वशासत्** अशिक्षयत् ॥ ७ ॥

**परिवेष्टनमेतेषां क्षिप्रं चैव व्यपानुद ।**
**सोऽपहृत्य महार्हाणि धनूंषि पृथुवक्षसाम् ।**
**परिवेष्टनपत्राणि विमुच्य समुपानयत् ॥ ८ ॥**

**व्यपानुद** परिहर । परितो वेष्टनं यैस्तानि **पत्राणि** । **समुपानयत्** स्वसमीपमानिनाय ॥ ८ ॥

**तथा सन्नहनान्येषां परिमुच्य समन्ततः ।**
**अपश्यद् गाण्डिवं तत्र चतुर्भिरपरैः सह ॥ ९ ॥**

---

१. पा.सू. (१/४/५३)

२. इत्यमरः ।

**सन्नहनानि** बन्धनानि । तत्कवचनानीति यावत् । **अपरैश्चतुर्भिः** धनुर्भिः ।।९।।

**तेषां विमुच्यमानानां धनुषामर्कवर्चसाम् ।**
**विनिश्चेरुः प्रभा दिव्या ग्रहाणामुदयेष्विव　　।। १० ।।**

**ग्रहाणां** बृहस्पत्यादीनां **प्रभाः** ।। १० ।।

**स तेषां रूपमालोक्य भोगिनामिव जृम्भताम् ।**
**हृष्टरोमा भयोद्विग्नः क्षणेन समपद्यत　　।। ११ ।।**

**जृम्भन्ताम्** गात्रविनिमयं कुर्वतां **भोगिनां** सर्पाणाम् । भयोद्विग्नः **समपद्यत** अभूत् ।। ११ ।।

**संस्पृश्य तानि चापानि भानुमन्ति बृहन्ति च ।**
**वैराटिरर्जुनं राजन्निदं वचनमब्रवीत्　　।। १२ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि एकचत्वारिंशोऽध्यायः ।।**

**भानुमन्ति** गतम् ।। १२ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां एकचत्वारिंशोऽध्यायः ।।**

*****

# ४२. द्विचत्वारिंशोऽध्यायः

**( पाण्डवानामस्त्रशस्त्रविषये उत्तरकर्तृकप्रश्नः । )**

**उत्तर उवाच -**

**बिन्दवो जातरूपस्य शतं यस्मिन् निपातिताः ।**
**सहस्रकोटिसौवर्णाः कस्यैतद्धनुरुत्तमम्　　।। १ ।।**

**यस्मिन्** धनुषि तदुपरीति यावत् । **जातरूपस्य** काञ्चनस्य । 'चामीकरं जातरूपं महारजतकाञ्चने' इत्यमरः । **शतं बिन्दवः निपातिताः सहस्रकोटिसौवर्णाः** सहस्रकोटिसङ्ख्याः सौवर्णा अवान्तरप्रभेदवत्सुवर्णसम्बन्धिनः । अवान्तर-प्रभेदश्चोक्तो बृहदारण्यकभाष्ये -

'मयं तु मानुषं स्वर्णं पीतगान्धर्वमेव च ।
इन्द्रगोपनिभं नाम्ना जाम्बूनदमिति स्मृतम् ।
दैवं चामीकरं नाम प्रोद्यदादित्यसन्निभम् ।
नैजो विशेषः स्वर्णानामेतेषां सर्वदैव च'[१] इत्यादि ।। १ ।।

**वारणा यस्य सौवर्णाः पृष्ठे भासन्ति दंशिताः ।**
**सुपार्श्वं सुग्रहं चैव कस्यैतद्धनुरुत्तमम् ।। २ ।।**

**सौवर्णाः** स्वर्णमयाः । **वारणाः** गजाः **भासन्ति** भासन्ते । **दंशिताः** ससौवर्णावरणाः । **सुग्रहं** मुष्टिग्राह्यस्थले मासृण्याद्युपेतम् ।। २ ।।

**तपनीयस्य शुद्धस्य षष्टिर्यस्येन्द्रगोपकाः ।**
**पृष्ठे विभक्ताः शोभन्ते कस्यैतद्धनुरुत्तमम् ।। ३ ।।**

**शुद्धस्य तपनीयस्य** प्रतप्तचामीकरस्य । **इन्द्रगोपकाः** कीटविशेषाः । **विभक्ताः** विभागशः ।। ३ ।।

**सूर्या यत्र च सौवर्णास्त्रयो भासन्ति दंशिताः ।**
**तेजसा प्रज्वलन्तो हि कस्यैतद्धनुरुत्तमम् ।। ४ ।।**

**शलभा यत्र सौवर्णास्तपनीयविभूषिताः ।**
**सुवर्णमणिचित्रं च कस्यैतद्धनुरुत्तमम् ।। ५ ।।**

**शलभाः** पतङ्गा 'समौ पतङ्गशलभौ' इत्यमरः । सौवर्णाः गतम् । 'तपनीयं

---

१. शारीरब्राह्मणे (६/४/२५)

शातकुम्भम्' इत्यमरः ।। ५ ।।

**इमे च कस्य नाराचाः साहस्रा लोमवाहिनः ।**
**समन्तात् कलधौताग्रा उपासङ्गे हिरण्मये ।। ६ ।।**

**साहस्राः** सहस्रं परिमाणं येषां ते तथा 'शतमानविंशति...'[1] इत्यादिनाण् । लोमानि पक्षिपत्राणि वहन्तीति तथा । कलधौतं रजतं सुवर्णं वा । 'कलधौतं रूप्यहेम्नोः' इति विश्वामरौ । केचित् केचित्तदग्राः । **उपासङ्गे** इषुधौ । 'तूणोपासङ्गतूणीर-निषङ्गा इषुधिर्द्वयोः' इत्यमरः ।। ६ ।।

**विपाठाः पृथवः कस्य गार्ध्रपत्राः शिलाशिताः ।**
**हरिद्रवर्णाः सुमुखा पीताः सर्वायसाः शराः ।। ७ ।।**

**विपाठाः** शराः । एको यौगिकः अपरो रूढः । **पृथवः** दीर्घाः गार्ध्राणि पत्राणि येषां ते तथा । हरिद्रा वरवर्णिनी उपमानत्वेनास्त्येषां ते हरिद्राः ते वर्णाः येषां ते तथा । **सुमुखाः** समीचीनाग्रभागाः **पीताः** कर्मारम्भेण प्रताप्य पायितजलाः ।। ७ ।।

**कस्यायमसितश्चापः पञ्चशार्दूललक्षणः ।**
**वराहकर्णव्यामिश्रान् शरान् धारयते दश ।। ८ ।।**

पञ्चानां मध्ये भयेन पूर्वं विशेषमपश्यन् अनन्तरं किञ्चित्समाहितमानसस्तं पश्यन् पुनः पृच्छति– **कस्येति** ।। पञ्चशार्दूलैर्लक्ष्यत इति **पञ्चशार्दूललक्षणः** **अयमसितश्चापः** । **वराहकर्णव्यामिश्रान्** तत्कर्णाकाराग्रमिश्रान् **शरान्** यान् **दश धारयते** । स कस्येति ।। ८ ।।

---

१. शतमानविंशतिकसहस्रवसनादण् । - पा.सू. (५/१/२७)

**कस्येमे पृथवो दीर्घाश्चन्द्रबिम्बार्धदर्शनाः ।**
**शतानि सप्त तिष्ठन्ति नाराचा रुधिराशनाः ॥ ९ ॥**

**चन्द्रबिम्बार्धदर्शनाः** अर्धचन्द्रवत् दृश्यमानाः ॥ ९ ॥

**कस्येमे शुकपत्राभैः पूर्वैरर्धैः सुवाससः ।**
**उत्तरैरायसैः पीतैर्हेमपुङ्खैः शिलाशितैः ॥ १० ॥**

**शुकपत्राभैः** हरिद्वर्णैः **पूर्वैरर्धैः** उपलक्षिताः **सुवाससः** शोभनपत्रिपत्राः । **उत्तरैः** अर्धैः **आयसैः** तद्विकृतैः **पीतैः** गतम् । **हेमपुङ्खैः** स्वर्णखचिताग्रभागैरुपेता इत्यर्थः ॥ १० ॥

**गुरुभारसहो दिव्यः शात्रवाणां भयङ्करः ।**
**कस्यायं सायको दीर्घः शिलीपृष्ठः शिलीमुखः ॥ ११ ॥**

तद्वत्पृष्ठं पृष्ठभागः मुखभागश्च यस्येत्युभयत्र समासः । 'शिला गण्डपदी भेकी' इत्यमरः ॥ ११ ॥

**वैयाघ्रकोशे निहितो हेमचित्रत्सरुर्महान्[1] ।**
**सुफलश्चित्रकोशश्च किङ्किणीसायको महान् ॥ १२ ॥**

**वैय्याघ्रकोशे** तच्चर्मजन्यकोशे । **सुफलः** समीचीनफलकद्वयोपेतः । 'फलं हेतुसमुत्थे स्यात् फलके' इति विश्वः । **चित्रकोशः** विचित्राच्छादकचर्मोपेतः । [2]**किङ्किणीसायकः** क्षुद्रघण्टासहितः सायकः कस्येति पूर्वार्धः एकखड्गप्रश्नपरः । उत्तरार्धस्त्वपरखड्ग-प्रश्नपरः । [3]**त्सरुः** खड्गमुष्टिः । **सायको**ऽत्र खड्गः । 'शरे खड्गे च सायके' इत्यमरः ॥ १२ ॥

---

१. हेमचित्रो दुरासदः (इति गी. पाठः)

२. किङ्किणी क्षुद्रघण्टिका । इत्यमरः । भागुरिश्च ।

३. 'त्सरुः खड्गादिमुष्टौ स्यान्मेखला तन्निबन्धनम्' इत्यमरः ।

**कस्य हेमत्सरुर्दिव्यः खड्गः परमनिर्मलः ।**
**कस्यायं विमलः खड्गो गव्ये कोशे समर्पितः ।। १३ ।।**

**गव्ये** तच्चर्मनिर्मिते ।। १३ ।।

**हेमत्सरुरनाधृष्यो नैषध्यो भारसाधनः ।**
**कस्य पाश्वनखे कोशे सायको हेमविग्रहः ।। १४ ।।**

**नैषध्यः** निषधदेशभवः । **पाश्वनखे** गोधादिपश्वनखसम्बन्धिनि । **सायकः** गतम् । **पीतः** गतम् ।। १४ ।।

**प्रमाणरूपसम्पन्नः पीत आकाशसन्निभः ।**
**कस्य हेममये कोशे सुतप्ते पावकप्रभे ।। १५ ।।**

**आकाशसन्निभः** नीलिम्ना ।। १५ ।।

**निस्त्रिंशोऽयं गुरुः पीतः सायकः परनिर्व्रणः ।**
**कस्यायमसितः खड्गो हेमबिन्दुभिरावृतः ।। १६ ।।**

निष्क्रान्तः त्रिंशदङ्गुलिभ्य इति **निस्त्रिंशः** । तदधिकपरिमाण इत्यर्थः । **परनिर्व्रणः** शत्रुकृतच्छेदशून्यः ।। १६ ।।

**आशीविषसमस्पर्शः परकायप्रभेदनः ।**
**गुरुभारसहो दिव्यः सपत्नानां भयप्रदः ।। १७ ।।**

**आशीविषसमस्पर्शः** मासृण्येन ।। १७ ।।

**निर्दिशस्व यथातत्त्वं मया पृष्टा बृहन्नले ।**
**विस्मयो मे परो जातो दृष्ट्वा सर्वमिदं महत् ।। १८ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि द्विचत्वारिंशोऽध्यायः ।।**

**निर्दिशस्व** इदमस्येति निर्देशपूर्वकं प्रदर्शयेत्यर्थः ।। १८ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां द्विचत्वारिंशोऽध्यायः ।।**

*****

# ४३. त्रिचत्वारिंशोऽध्यायः

**( बृहन्नलाकृतपाण्डवायुधपरिचयदानम् । )**

**बृहन्नलोवाच -**

**यन्मां पूर्वमिहापृच्छः शत्रुसेनापहारिणम् ।**
**गाण्डीवमेतत् पार्थस्य लोकेषु विदितं धनुः ।। १ ।।**

**शत्रुसेनापहारिणं गाण्डीवम्** इत्यत्र शत्रुसेनापहारिणो ब्रह्मादयो धारकत्वेनास्य सन्तीति तथा । पामादित्वान्मत्त्वर्थे नप्रत्ययः । अपहारिणं अपहारिणा नीतिरूपं अथवा शत्रुसेनापहारिणं मामित्यन्वयः । **एतद् धनुः पार्थस्य** इति **विदितं** प्रसिद्धम् ।। १ ।।

**सर्वायुधमहामात्रं शातकुम्भपरिष्कृतम् ।**
**एतत् तदर्जुनस्यासीद्गाण्डीवं परमायुधम् ।। २ ।।**

सर्वायुधानां महामात्रं प्रधानं श्रेष्ठमिति यावत् । शातकुम्भं सुवर्णम् ।। २ ।।

**यत् तत् शतसहस्रेण सम्मितं राष्ट्रवर्द्धनम् ।**
**येन देवान् मनुष्यांश्च [१]पार्थश्चैकरथो मृधे ।। ३ ।।**

**शतसहस्रेण** लक्षभारेण **सम्मितं** समानम् । **एकरथो**ऽजयदिति शेषः ।। ३ ।।

१. पार्थो विजयते मृधे । (इति गी. पाठः)

**चित्रमुच्चावचैर्वर्णैः श्लक्ष्णमायतमव्रणम् ।**
**देवदानवगन्धर्वैः पूजितं शाश्वतीः समाः ॥ ४ ॥**

उच्चावचैः नैकभेदैः **वर्णैश्चित्रं श्लक्ष्णं** मनोहरं च । **शाश्वतीः समाः** बहुसंवत्सरानभिव्याप्य ॥ ४ ॥

**एतद्वर्षसहस्रं तु ब्रह्मा पूर्वमधारयत् ।**
**ततोऽनन्तरमेवाथ प्रजापतिरधारयत् ॥ ५ ॥**
**त्रीणि पञ्चशतं चैव शक्रोऽशीति च पञ्च च ।**
**सोमः पञ्चशतं राजा तथैव वरुणः शतम् ।**
**पार्थः पञ्च च षष्टिं च वर्षाणि श्वेतवाहनः ॥ ६ ॥**

**ब्रह्मा** चतुर्मुखः । अत्र वरुणवरणपर्यन्तं सर्वत्र वर्षशब्देन दिव्यमेव वर्षं ग्राह्यम् । **प्रजापतिः** रुद्रः । तथैवाचार्योक्तेः[१] । **त्रीणि पञ्च शतम्** अष्टशतवर्षम् । **सोमो राजा वरुणो** वा ॥ ५-६ ॥

**महावीर्यं महादिव्यमेतत् तद्धनुरुत्तमम् ।**
**एतत् पार्थमनुप्राप्तं वरुणाच्चारुदर्शनम् ॥ ७ ॥**

एतद्धार्यं धृतं चेति समुच्चयेनाधारयदित्युक्तेः । पञ्चषष्टिसंवत्सरी घटना त्वेवम् ।

जनमेजयः–

पाण्डवानां तथाऽऽयुष्यं कुत्र वासः कियद्दिनम् ।
एतदाचक्ष्व भगवन् पृच्छते ब्राह्मणोत्तम ॥

---

१. **प्रजापतिः** शिवः शेफो लिङ्गमित्यभिधीयते ।
लिङ्गाभिमानी लोकस्य स्रष्टा गिरिश एव हि ॥ इति शैवपुराणे ।
सममस्त्वनयोर्युद्धमिति प्राह प्रजापतिः ।
वाक्यं शिवस्य तच्छ्रुत्वा शक्रो नेत्याह सत्वरः ॥ इति च भारते ॥
- इति महैतरेयोपनिषदि (२/५)

वैशम्पायनः–

पाण्डवानां तथाऽऽयुष्यं शृणु कौरवनन्दन ।
जगाम हास्तिनपुरं षोडशाब्दो युधिष्ठिरः ॥
भीमः पञ्चदशाब्दस्तु बीभत्सुर्वै चतुर्दशः ।
त्रयोदशाब्दौ तु यमौ जग्मतुर्नागसाह्वयम् ॥
तत्र त्रयोदशाब्दानि धार्तराष्ट्रैः सहोषिताः ।
षण्मासान् वै जतुगृहान्मुक्ता जातो घटोत्कचः ॥
षण्मासानेकचक्रायां वर्षं पाञ्चालके पुरे ।
धार्तराष्ट्रैः सहोषित्वा पञ्चवर्षाणि भारत ॥
इन्द्रप्रस्थे वसन्तस्ते त्रीणि वर्षाणि विंशतिः ।
द्वादशाब्दानथैकं च बभ्रमुर्द्यूतनिर्जिताः ॥
भुक्त्वा षट्त्रिंशतं राज्यं सागरान्तां वसुन्धराम् ।
मासैः षड्भिर्महात्मानः सर्वे कृष्णपरायणाः ॥
राज्ये परीक्षितं स्थाप्य दिष्टां गतिमवाप्नुवन् ।
एवं युधिष्ठरस्यासीदायुरष्टोत्तरं शतम् ॥
अर्जुनात् केशवो ज्येष्ठः षड्भिर्मासैर्महाभुजः ॥'[१] इत्यादिपर्वणि ॥

तथा स्त्रीपर्वणि–

.......................शप्तो चक्रगदाधरः ।
यस्मात् परस्परं घ्नन्तो ज्ञातयः कुरुपाण्डवाः ॥
उपेक्षितास्ते गोविन्द तस्माज्ज्ञातीन् वधिष्यसि ।
त्वमप्युपस्थिते वर्षे षट्त्रिंशे मधुसूदन ॥ इति ॥

---

१. महाभारते कुम्भकोणपाठे । (१/१३४/२-९)

तथा मौसले च - 'जनार्दनः । मेने प्राप्तं स षट्त्रिंशं वर्षं वै केशिसूदनः' । इति स्पष्टमुक्तेः । अर्जुनस्यायुः राज्यकरणं च । षट्त्रिंशसंवत्सरी राज्यम् । अर्जुनतीर्थयात्राकालस्त्वत्र न कीर्तित इति स चेन्द्रप्रस्थावस्थानसमये त्रयोविंशतिशरदात्मके निवेश्यः । स चैकसंवत्सरात्मा । नच 'वने द्वादशवर्षाणि वासायोपजगाम ह । स नो द्वादशवर्षाणि ब्रह्मचारी वने वसेद्' इत्यादिपर्वोक्तेः कथं कथयत कथितमेको वत्सर इति वाच्यम् । मासपरोऽयं वत्सर-शब्दः । न चेदमप्रामाणिकम् । एतत्सजातीये तथोक्तेः । तथाहि वनपर्वणि भीमवचनम्–

अस्माभिरुषिताः सम्यग् वने मासास्त्रयोदश ।
परिमाणेन तान् पश्य तावतः परिवत्सरान् ।
अस्ति मासः प्रतिनिधिर्यथा प्राहुर्मनीषिणः ।
पूतिकानिव सोमस्य तथेदं क्रियतामिति ।। इति ।

आदिपर्वणि वर्गोक्त्या सह नारदवचनं च–

'...........शतादिसङ्ख्यासङ्कोचपरम् ।
शतं दशसहस्रं च सर्वमक्षय्यवाचकम् ।।
परिमाणं शतं त्वेतन्नेदमक्षयवाचकम् ।
यदा च वो ग्राहभूता गृह्णन्तीः पुरुषान् जले ।।
उत्कर्षति जलात् तस्मात् स्थलं पुरुषसत्तमः ।
तदा यूयं पुनः सर्वाः स्वं रूपं प्रतिपत्स्यथ[१] ।...
श्रुत्वा तत्र यथावृत्तमिदं वचनमब्रवीत् ।
दक्षिणे सागरानूपे पञ्चतीर्थानि सन्ति वै ।
पुण्यानि रमणीयानि तानि गच्छत मा चिरम् ।

---

१. महाभारते कुं. पाठे. (२३७/८-१०)

तत्राशु पुरुषव्याघ्रः पाण्डवेयो धनञ्जयः ।
मोक्षयिष्यति शुद्धात्मा दुःखादस्मान्न संशयः[१] ।
अहस्तु मासशब्दोक्तं यत्र चिन्तायुतं व्रजेत् ।
एवं संवत्सराद्यं च विपरीते विपर्ययः ।।

[२]इति नाममहोदधाविति प्रथमतात्पर्ये चोक्तेः । सुभद्रानयनानन्तरमेकचत्वारिंशच्छरदि धनञ्जयाद्धनञ्जयस्य गाण्डीवलाभो लाभश्च खाण्डवताण्डवस्याग्नेः । राजसूयात्पुरा जरासन्धदर्शनकाले चतुर्दशसंवत्सरसम्पत्तिः । अत एव 'पञ्चपञ्चाशदब्दोऽपि बाल एव मतो मम'[३] इति जरासन्धाभिधानं सङ्गच्छते । तदुपरि च परिगणिता वत्सराश्चैकपञ्चाशच्चेति शतोपरि षट्संवत्सरीसम्पत्तिः । इदमेवानुपपत्तिसर्वस्वं सर्वज्ञाचार्या आलोच्य व्याचक्रिरे श्रीमन्महाभारततात्पर्यनिर्णये विंशेऽध्याये ।

'अतः पृथग्वत्सरतो भवत्सु क्रमात् कृष्णा तिष्ठतां योऽन्ययुक्ताम् ।
पश्येद्धोऽसौ वत्सरं तीर्थयात्रां कुर्यादिति स्माथ चक्रुस्तथा ते'[४] इति ।

'स वै संवत्सरं पूर्णं मासं चैकं वने वसन् ।
ततोऽगच्छत्' इत्यादिपर्वस्थवचनमत एव सङ्गच्छते ।।

तत्रैव द्वात्रिंशेऽध्याये–

समारब्धं कलियुगं यदा दुर्योधनोऽपतत् ।
षट्त्रिंशाब्दं पुनः कृष्णः कृतमेवान्ववर्तयत्[५] ।। इति ।।

---

१. महाभारते कुं. पाठे. (२३७/१६-१८)
२. भागवततात्पर्ये (१/१३/२)
३. महाभारततात्पर्यनिर्णये (२१/१४४)
४. महाभारततात्पर्यनिर्णये (२०/१५२)
५. महाभारततात्पर्यनिर्णये (३२/१०)

पुनस्तत्रैव स्थानान्तर एतत्सजातीये धर्मं प्रति भीमवचनापदेशेन

सत्यं पापेष्वपि कर्तुं यदीच्छा तथा मासा द्वादश नः प्रयाताः ।

वेदप्रामाण्याद्वत्सरास्ते हि मासैः सहस्राब्दं सत्रमुक्तं नराणाम्[१] ।। - इति ।।

स च वेदः 'संवत्सरं दीक्षितो भवति । संवत्सरादेवात्मानं पुनीते । मासं दीक्षितो भवति । यो मासः स संवत्सरः' इत्यादिः । नराणां च 'शतायुर्वै पुरुषः' इत्यादेः परमायुःशतशरदात्मकमिति सहस्राब्दसत्रकृतेरसम्भावित त्वात् सङ्कोच्य एवाब्दशब्दः। तथैवास्मिन् वत्सर एकैकाधीनता द्रौपद्या इति तत्समसमयस्यैव युक्तत्वाच्च । अत एवैतच्छ्लोकव्याकृतौ परोऽबिभ्यद्यथा सार्धद्वात्रिंशत्संवत्सरा स्वालोचिता घटेत तथा वर्षशब्दो न संवत्सरवाची । किन्तु वृष्टिद्वयप्रयोजककामनद्वयलक्षकस्तथा चोत्तरायणमेको वत्सरो परश्च दक्षिणायनमित्यवादीन्नावादेदिदमर्थतायां मानमिति न मतिमतश्च मदकृता । अन्ये तु व्यातन्वते । एतत्प्रकरणे यत्र यत्र द्वादशवर्षाणीति वर्तते तत्र तत्र द्वादशशब्दोपरि यथान्वयं मासशब्दोऽध्याहार्यः । वर्षाणीति बहुवचनं 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्'[२] इत्येकस्स्तथा च द्वादशमासीसम्पत्त्या वर्षं सम्पत्स्यत इति वाऽनुकृतमाचार्यवच इति । अन्ये तु औच्छृङ्खलेन नक्षत्रमानेन शक्यमानेतुं द्वादशसंवत्सरीत्यभ्यधुः । कथं सा सप्तसु संवत्सरेषु निविशेतेति न व्यजानन्नित्युपेक्ष्याः ।। ७ ।।

**पूजितं सुरमर्त्येषु बिभर्ति परमं वपुः ।**

**सुपार्श्वं भीमसेनस्य जातरूपग्रहं धनुः ।**

**येन पार्थोऽजयत् कृत्स्नं दिशं प्राचीं परन्तपः ।। ८ ।।**

---

१. महाभारततात्पर्यनिर्णये (२२/१११)

२. पा.सू. (१/२/५८) ।

**सुपार्श्वम्** । नाम्ना गुणेन च । **जातरूपग्रहं** सौवर्णसूर्यादिग्रहोपेतम् । **पार्थो** भीमः ॥ ८ ॥

**इन्द्रगोपकचित्रं च यदेतच्चारुदर्शनम् ।**
**राज्ञो युधिष्ठिरस्यैतद्वैराटे धनुरुत्तमम् ॥ ९ ॥**

इन्द्रगोपकैश्चित्रम् ॥ ९ ॥

**सूर्या यस्मिंस्तु सौवर्णाः प्रकाशन्ते प्रकाशिनः ।**
**तेजसा प्रज्वलन्तो वै नकुलस्यैतदायुधम् ॥ १० ॥**

**सौवर्णाः** काञ्चनमयाः । **प्रकाशिनो** नकुलस्येत्यन्वयः ॥ १० ॥

**शलभा यत्र सौवर्णास्तपनीयविचित्रिताः ।**
**एतन्माद्रीसुतस्यापि सहदेवस्य कार्मुकम् ॥ ११ ॥**

तपनीयं स्वर्णम् । सुवर्णवैचित्र्यं तु [१]प्राग्विवृतमनुसन्धेयम् ॥ ११ ॥

**ये त्विमे क्षुरसङ्काशाः सहस्रा लोमवाहिनः ।**
**एतेऽर्जुनस्य वैराटे शराः सर्पविषोपमाः ॥ १२ ॥**

**क्षुरसङ्काशाः** । क्षुरं च्छेदनद्रव्यं च्छुरिकादिकम् । 'क्षुरं स्याच्छेदनद्रव्ये कोकिलाक्षे च गोक्षुरे' इति विश्वः । **सहस्रा** बहुसङ्ख्याः ॥ १२ ॥

**एते ज्वलन्तः सङ्ग्रामे तेजसा शीघ्रगामिनः ।**
**भवन्ति वीरस्याक्षय्या व्यूहतः समरे रिपून् ॥ १३ ॥**

---

१. अवान्तरप्रभेदश्चोक्तो बृहदारण्यकभाष्ये -
'मयं तु मानुषं स्वर्णं पीतगान्धर्वमेव च ।
इन्द्रगोपनिभं नाम्ना जाम्बूनदमिति स्मृतम् ।
दैवं चामीकरं नाम प्रोद्यदादित्यसन्निभम् ।
नैजो विशेषः स्वर्णानामेतेषां सर्वदैव च' इत्यादि ॥

**अक्षय्याः** । शक्याः क्षय्याः[१] । न तथेत्यक्षय्याः ।। १३ ।।

**ये चेमे पृथवो दीर्घाश्चन्द्रबिम्बार्धदर्शनाः ।**
**एते भीमस्य निशिता रिपुक्षयकराः शराः ।। १४ ।।**

**चन्द्रबिम्बार्धदर्शनाः** अर्धचन्द्राकाराः ।। १४ ।।

**हारिद्रवर्णा ये त्वेते हेमपुङ्खाः शिलासिताः ।**
**नकुलस्य कलापोऽयं पञ्चशार्दूललक्षणः ।। १५ ।।**

**हारिद्रवर्णाः** हरिद्रासवर्णाः । **कलापः** तूणीरः । 'कलापो भूषणे बर्हे तूणीरे' इत्यमरः ।। १६ ।।

**येनासौ व्यजयत् कृत्स्नां प्रतीचीं दिशमाहवे ।**
**कलापो ह्येष तस्यासीन्माद्रीपुत्रस्य धीमतः ।। १६ ।।**

**ये त्विमे भास्कराकाराः सर्वपारसवाः शराः ।**
**एते चित्रक्रियोपेताः सहदेवस्य धीमतः ।। १७ ।।**

**सर्वपारसवाः** गतम् ।। १७ ।।

**ये त्विमे निशिताः पीताः पृथवो दीर्घवाससः ।**
**हेमपुङ्खास्त्रिपर्वाणो राज्ञ एते महाशराः ।। १८ ।।**

**दीर्घवाससः** पत्रवस्त्राः ।। १८ ।।

**यस्त्वयं सायको दीर्घः शिलीपृष्ठः शिलीमुखः ।**
**अर्जुनस्यैष सङ्ग्रामे गुरुभारसहो दृढः ।। १९ ।।**

**सायकः** खड्गः गतम् । गुरुभारं सहत इति तथा ।। १९ ।।

---

१. क्षय्यजय्यौ शक्यार्थे । - पा.सू. (६/१/८१)

वैयाघ्रकोशः सुमहान् भीमसेनस्य सायकः ।
गुरुभारसहो दिव्यः शात्रवाणां भयङ्करः ।। २० ।।

सफलश्चित्रकोशश्च हेमत्सरुरनुत्तमः ।
निस्त्रिंशः कौरवस्यैष धर्मराजस्य धीमतः ।। २१ ।।

**सफलः** शत्रुविशरणकारणम् । फलकोपेतो वा ।। २१ ।।

यस्तु पाञ्चनखे कोशे निहितश्चित्रयोधने ।
नकुलस्यैष निस्त्रिंशो गुरुभारसहो दृढः ।। २२ ।।

**पाञ्चनखे** गतम् ।। २२ ।।

यस्त्वयं विपुलः खड्गो गव्ये कोशे समर्पितः ।
सहदेवस्य विद्ध्येनं सर्वभारसहं दृढम् ।। २३ ।।

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि त्रिचत्वारिंशोऽध्यायः ।।**

**गव्ये कोशे** गतम् ।। २३ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां त्रिचत्वारिंशोऽध्यायः ।।**

*****

# ४४. चतुश्चत्वारिंशोऽध्यायः

( अर्जुनकर्तृकं पाण्डवपरिचयदानम् )

**उत्तर उवाच -**

सुवर्णविकृतानीमान्यायुधानि महात्मनाम् ।
रुचिराणि प्रकाशन्ते पार्थानामाशुकारिणाम् ।। १ ।।

**सुवर्णविकृतानि** स्वर्णबिन्द्वादिखचितानि । **आशुकारिणाम्** । 'आलस्यादमृतं विषम्'[1] इत्युक्तेस्तस्यैव गुणत्वात् ।। १ ।।

**क नु स्विदर्जुनः पार्थः कौरव्यो वा युधिष्ठिरः ।**
**नकुलः सहदेवश्च भीमसेनश्च पाण्डवः ।। २ ।।**

**क नु स्वित्** क्वास्ति । **कौरव्यः** 'कुर्वादिभ्यो ण्यः'[2] कुरुकुलभवः ।। २ ।।

**सर्व एव महात्मानः सर्वामित्रविनाशनाः ।**
**राज्यमक्षैः पराकीर्य न श्रूयन्ते कथञ्चन ।। ३ ।।**

**पराकीर्य** अपास्य । **कथञ्चन** केनापि प्रकारेण **न श्रूयन्ते** ।। ३ ।।

**द्रौपदी क च पाञ्चाली स्त्रीरत्नमिति विश्रुता ।**
**जितानक्षैस्तदा कृष्णा तानेवान्वगमद्वनम् ।। ४ ।।**

**तानन्नु वनमगमद्** इत्यन्वयः ।। ४ ।।

**अर्जुन उवाच -**

**अहमस्म्यर्जुनः पार्थः सभास्तारो युधिष्ठिरः ।**
**बल्लवो भीमसेनश्च पितुस्ते रसपाचकः ।। ५ ।।**

**ते पितुः रसपाचकः** द्विदलादिरसपाचकः । 'रसः सारो वरश्चेति शब्दाः पयार्यवाचकाः'[3] इत्युक्तेः श्रेष्ठपाचक इति वा ।। ५ ।।

**अश्वबन्धोऽथ नकुलः सहदेवोऽथ गोकुले ।**
**सैरन्ध्रीं द्रौपदीं विद्धि यत्कृते कीचका हताः ।। ६ ।।**

---

१. सिद्धमन्नं फलं पक्वं नारीप्रथमयौवनम् ।
कालक्षेपं न कर्तव्यमालस्यादमृतं विषम् ।। - इत्यस्य पूर्णपाठः

२. पा.सू (४/१/१५१)

३. छान्दोग्यभाष्योदाहृतसारनिर्णयवचनम् ।

**गोकुले** गोष्ठे अध्यक्षतया यो वर्तते स सहदेव इत्यर्थः । **यत्कृते** सैरन्ध्री-निमित्तम् ।।६।।

**उत्तर उवाच -**

**दश पार्थस्य नामानि यानि पूर्वं श्रुतानि मे ।**
**प्रब्रूयास्तानि यदि मे श्रद्दध्यां सर्वमेव ते ।। ७ ।।**

**सर्वं** त्वदुक्तम् ।। ७ ।।

**अर्जुन उवाच -**

**हन्त तेऽहं समाचक्षे दश नामानि यानि मे ।**
**वैराटे शृणु तानि त्वं यानि पूर्वं श्रुतानि ते ।। ८ ।।**

**यानि नामानि** मम सन्ति **वैराटे यानि** त्वया च **श्रुतानि** तानि **हन्त ते समाचक्षे** ।। ८ ।।

**एकाग्रमानसो भूत्वा शृणु सर्वं समासतः ।**
**अर्जुनः फाल्गुनो जिष्णुः किरीटी श्वेतवाहनः ।**
**बीभत्सुर्विजयः कृष्णः सव्यसाची धनञ्जयः ।। ९ ।।**

**समासतः** सङ्कोचेन ।। ९ ।।

**उत्तर उवाच -**

**केनासि विजयो नाम केनासि श्वेतवाहनः ।**
**किरीटी नाम केनासि सव्यसाची कथं भवान् ।। १० ।।**

**नाम** नाम्ना **विजय** इति **केन** शब्दप्रवृत्तिनिमित्तेन । एवमुत्तरत्र ।। १० ।।

**अर्जुनः फाल्गुनो जिष्णुः कृष्णो बीभत्सुरेव च ।**
**धनञ्जयश्च केनासि ब्रूहि तन्मम तत्त्वतः ।। ११ ।।**

श्रुतमेतस्य वीरस्य केवला नामहेतवः ।
तत् सर्वं यदि मे ब्रूयाः श्रद्दध्यां सर्वमेव ते ।। १२ ।।

**नामहेतवः केवलाः** कृत्स्नाः श्रुताः 'केवलं ज्ञानिभेदे स्यात् केवलस्त्वेककृत्स्नयोः' इति विश्वः । **तत् सर्वं** शब्दप्रवृत्तिनिमित्तम् ।। १२ ।।

**अर्जुन उवाच -**

सर्वान् जनपदान् जित्वा वित्तमादाय केवलम् ।
मध्ये धनस्य तिष्ठामि तेनाहुर्मां धनञ्जयम् ।। १३ ।।

**केवलम्** अत्यन्तं 'नितान्तं केवलं चोक्तम्' इति विश्वः । **धनस्य मध्ये तिष्ठामि** । सर्वतोऽपि धनप्राप्तिर्ममेति हेतोस्तन्नामेति भावः ।। १३ ।।

अभिप्रयामि सङ्ग्रामे यदहं युद्धदुर्मदान् ।
नाजित्वा च निवर्तामि तेन मां विजयं विदुः ।। १४ ।।

**निवर्तामि** निवर्ते ।। १४ ।।

श्वेताः काञ्चनसन्नाहा रथेऽयुज्यन्त मे हयाः ।
सङ्ग्रामे युद्ध्यमानस्य तेनाहं श्वेतवाहनः ।। १५ ।।

**रथे अयुज्यन्त** युक्ता अभवन् ।। १५ ।।

उत्तराभ्यां फाल्गुनीभ्यां नक्षत्राभ्यामहं दिवा ।
जातो हिमवतः पृष्ठे तेन मां फाल्गुनं विदुः ।। १६ ।।

**उत्तराभ्यां पूर्वाभ्यां** द्वितार्याः **फाल्गुनीभ्यां** तदुभयसन्धिकालजातत्वात् तदुभयनक्षत्रजातत्वव्यपदेशः । **हिमवतः** पर्वतस्य **पृष्ठे** उपरिभागे ।। १६ ।।

पुरा शक्रेण मे दत्तं युद्ध्यतो दानवर्षभैः ।
किरीटं मूर्ध्नि सूर्याभं तेनाहुर्मां किरीटिनम् ।। १७ ।।

**पुरा** निवातकवचकालेयादिवधकाले[1] ॥ १७ ॥

**न कुर्यां कर्म बीभत्सं युद्ध्यमानः कथञ्चन ।**
**तेन देवमनुष्येषु बीभत्सुरिति विश्रुतः ॥ १८ ॥**

**बीभत्सं** चित्तविकारजनकं । **कर्म न कुर्याम्** । **तेन** निमित्तेन । अबीभत्सुरिति वक्तव्ये नलोपः आर्षः । उक्तं च बृहद्देवतायां शौनकेन - 'वर्णस्य वर्णयोर्लोपो वर्णानां व्यञ्जनस्य च'[2] इति । आद्यवर्णलोपो वा ॥ १८ ॥

**उभौ मे दक्षिणौ पाणी गाण्डीवस्य विकर्षणे ।**
**तेन देवमनुष्येषु सव्यसाचीति मां विदुः ॥ १९ ॥**

**दक्षिणौ** समर्थौ । **विकर्षणे** विकर्षणविषये । **देवमनुष्येषु** विद्यमाना जनाः । सव्येनापि सचितुं शरं सन्धितुं शीलमस्यास्तीति तथा ॥ १९ ॥

**पृथिव्यां चतुरन्तायां वर्णो मे दुर्लभः समः ।**
**करोमि कर्म [3]शुभ्रं च तस्मान्मामर्जुनं विदुः ॥ २० ॥**

चत्वारः समुद्रा अन्ते यस्याः सा तस्याम् । **मे समो वर्णः** अवदातो **दुर्लभो** यस्मात् तस्मादर्जुनः । ऋजेर्गत्याद्यर्थादुनन्प्रत्यये रूपम् । **शुभ्रम्** । **तस्माच्च** ॥२०॥

**अहं दुरापो दुर्धर्षो दमनः पाकशासनिः ।**
**तेन देवमनुष्येषु जिष्णुर्नाम्नाऽस्मि विश्रुतः ॥ २१ ॥**

---

१. हयैरुपेतं प्रादान्मे रथं दिव्यं महाप्रभम् ।
बबन्ध चैव मे मूर्ध्नि किरीटमिदमुत्तमम् ॥ -इति महाभारते (३/१६८/७४)
इति तेनार्जुनं शक्रः स्वात्मानं नरदेहगम् ।
जगाद तान् जहीत्येव किरीटं स्वं निबध्य च ॥ -म.भा.ता.नि(२२/३२५)

२. बृहद्देवतावचनम् (२/११६)

३. शुक्लम् । (इति गी. पाठः)

**अहं** अहङ्कारेण **दुरापः** दुष्प्राप्यः । **दुर्धर्षो** धर्षयितुमशक्यः । **दमनः** शिक्षकः । **पाकशासनिः** इति स्वरूपकथनम् । 'अत इञ्'[1] इतीञ् । **विश्रुतः** प्रसिद्धः ।।२१।।

कृष्ण इत्येव दशमं नाम चक्रे पिता मम ।
[2]कृष्णावदातस्य सतः प्रियत्वाद्बालकस्य वै ।। २२ ।।

**पिता** पाण्डुः । एतदपि न डित्थादिवत्साङ्केतिकमित्याह – **कृष्णेति** ।। **कृष्णावदातस्य** श्यामावदातस्य **सतः** । मनः कर्षति हरतीति व्युत्पत्त्या **प्रियत्वाच्च कृष्ण इति नाम चक्रे** ।। २२ ।।

ततः स पार्थं वैराटिरभ्यवादयदन्तिकात् ।
अहं भूमिञ्जयो नाम नाम्नाऽहमपि चोत्तरः ।। २३ ।।

**नाम्नाऽहम् उत्तरः अपि** ।। २३ ।।

दिष्ट्या त्वां पार्थ पश्यामि स्वागतं ते धनञ्जय ।
लोहिताक्ष महाबाहो नागराजकरोपमम् ।। २४ ।।

**नागराजकरोपमं** गतम् ।। २४ ।।

यदज्ञानादवोचं त्वां क्षन्तुमर्हसि तन्मम ।
यतस्त्वया कृतं पूर्वं चित्रं कर्म सुदुष्करम् ।
अतो भयं व्यतीतं मे प्रीतिश्च परमा त्वयि ।। २५ ।।

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि चतुश्चत्वारिंशोऽध्यायः ।।**

---

१. पा.सू. (४/१/९५)

२. ब्रह्मा च शर्वश्च समेत्य कृष्णं प्रणम्य **पार्थस्य च कृष्णनाम** ।
सञ्चक्रतुश्चापि शिक्षाप्रकर्षाच्चक्रुश्च सर्वे स्वास्त्रदाने प्रतिज्ञाम् ।।
- महाभारततात्पर्यनिर्णये । (२०/२३५)

**अवोचम्** अयोग्यं कर्म कुर्वित्यादिरूपम् ।। २५ ।।

।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां चतुश्चत्वारिंशोऽध्यायः ।।

*****

# ४५. पञ्चचत्वारिंशोऽध्यायः

( अर्जुनोत्तरयोर्वार्तालापः, उत्तरस्य भयनिवारणं च । )

**उत्तर उवाच -**

**आस्थाय रुचिरं वीर रथं सारथिना मया ।**
**कतमं यास्यसेऽनीकमुक्तो यास्याम्यहं त्वया ।। १ ।।**

केष्वेकं **कतमम्** । **यास्यसे** यास्यसि । **उक्तः** प्रेरितः **यास्यामि** रथेन । **त्वया** सह । त्वयोक्त इति वा ।। १ ।।

**अर्जुन उवाच -**

**प्रीतोऽस्मि पुरुषव्याघ्र न भयं विद्यते तव ।**
**सर्वान् तुदामि ते शत्रून् रणे रणविशारद ।। २ ।।**

**तुदामि** । धातूनामनेकार्थत्वात् तुदामि ।। २ ।।

**स्वस्थो भव महाबाहो पश्य मां शत्रुभिः सह ।**
**युद्ध्यमानं विमर्देऽस्मिन् कुर्वाणं भैरवं महत् ।। ३ ।।**

**भैरवं** भयङ्करं कर्म ।। ३ ।।

**एतान् सर्वानुपासङ्गान् क्षिप्रं बध्नीहि मे रथे ।**
**एनं चाहर निस्त्रिंशं जातरूपपरिष्कृतम् ।। ४ ।।**

**उपासङ्गान्** बहुवचनमाद्यर्थे । तूणीरगाण्डीवज्यादितत्परिकरान् । **एनं निस्त्रिंशं च बध्नीहि** । एतानानयेत्युक्तौ युधिष्ठिरादीनामायुधानि तत्रैव बध्नीहीति अर्थात् सूचितमिति भावः ।। ४ ।।

**वैशम्पायन उवाच -**

**अर्जुनस्य वचः श्रुत्वा त्वरावानुत्तरस्तदा ।**
**अर्जुनस्यायुधान् गृह्य शीघ्रेणावातरत् ततः ।। ५ ।।**

**आयुधान्** आयुधानि । **गृह्य** प्रगृह्य । **अवतरत्** अवातरत् । **ततः** शमीतः ।। ५ ।।

**अर्जुन उवाच -**

**अहं वै कुरुभिर्योत्स्याम्यवजेष्यामि ते पशून् ।। ६ ।।**
**सङ्कल्पपक्षविक्षेपं बाहुप्राकारतोरणम् ।**
**त्रिदण्डतूणसम्बाधमनेकध्वजसङ्कुलम् ।। ७ ।।**
**ज्याक्षेपणं क्रोधकृतं [१]नेमीनिनददुन्दुभि ।**
**नगरं ते मया गुप्तं रथोपस्थं भविष्यति ।। ८ ।।**

बाहू एव प्राकारतोरणे यस्य । त्रयाणामीषा । पार्श्ववर्तिनौ द्वाविति त्रयाणां दण्डानां समाहारस्त्रिदण्डम् । **त्रिदण्डं** च **तूणौ** च तैः सबाधं दुष्प्रवेशम् । **अनेकध्वजैः सङ्कुलम्** । स्फुटोऽर्थः । ज्येव क्षेपणं पाषाणक्षेपकरज्जुविशेषो यत्र । क्रोधेन कृतं पूर्णम् । **क्रोधकृतम्** । उभयत्राप्येक एवार्थः । नेमि-चक्रप्रान्तभागस्तन्निनदो ध्वनिविशेषो दुन्दुभिस्तनितध्वनिर्यस्मिन् । दुन्दुभीति सुपठम् । **दुन्दुभिमिति पाठे** तद्ध्वनिरूपार्थाधिक्यसूचनाय । अश-नायां हि मृत्युरित्यत्र [२]'सर्वाशनेनेत्यर्थे' बिन्दुरिति बृहद्भाष्यदिशा

---

१. नेमिनिनददुन्दुभिम् । इति क्वचित् ।

२. बिन्दुलोपेनाशनाया मृत्युरित्यर्थः । 'अशनाया हि मृत्युः' इत्युक्तम् । सर्वाशनेनेत्यर्थे बिन्दुः ।

'आधिक्येऽधिकम्' इति बिन्दुरिति ज्ञेयम् । हे वैराटे **मया गुप्तं रथोपस्थं ते नगरं भविष्यति** । अतस्ते **भयं व्येत्विति** चतुर्थेनान्वयः । कीदृशं नगरम् । सङ्कल्पते रथोऽनेनेति सङ्कल्पश्चक्रादिसमूहः । स एव पक्षविक्षेपः पार्श्ववर्तिगृहविन्यास-विशेषो यस्य तत् । 'पक्षो मासार्धके पार्श्वे गृहे साध्यविरोधयोः' इति विश्वः ।। ६-८ ।।

**अधिष्ठितो मया [१]सङ्ख्ये रथो गाण्डीवधन्वना ।**
**अजेयः शत्रुसैन्यानां वैराटे व्येतु ते भयम् ।। ९ ।।**

**गाण्डीवधन्वना मया** इति सामानाधिकरण्यम् । **सैन्यानामजेयः** 'कृत्यानां कर्तरि वा'[२] इति षष्ठी ।। ९ ।।

**उत्तर उवाच -**

**नाहं बिभेमि समरे जानामि त्वां स्थिरं युधि ।**
**केशवेनापि सङ्ग्रामे साक्षादिन्द्रेण वा समम् ।। १० ।।**

**साक्षाद्** इत्युभयान्वयि ।। १० ।।

**इदं तु चिन्तयन्नेवं परिमुह्यामि केवलम् ।**
**निश्चयं चापि दुर्मेधा न गच्छामि कथञ्चन ।। ११ ।।**

**निश्चयं न गच्छामि** । तत्र हेतुः– **दुर्मेधा इति** ।। 'नित्यमसिच् प्रजामेधयोः'[३] इत्यसिच् ।। ११ ।।

---

'आधिक्येऽधिकम्' इति सूत्रात् । - इति बृहद्भाष्ये (३/१/४)

१. सङ्घे (इति क्वचित्) ।

२. पा.सू. (२/३/७१)

३. पा.सू.(५/४/१२२)

**एवं वीराङ्गरूपस्य लक्षणैः सूचितस्य च ।**
**केन कर्मविपाकेन क्लीबत्वमिदमागतम् ॥ १२ ॥**

वीरस्याङ्गानि रूपमाकृतिश्च यस्य तस्य । **लक्षणैः** ज्याघातादिचिह्नैः **उचितस्य** युक्तस्य योग्यस्येति वा ॥ १२ ॥

**मन्ये त्वां क्लीबवेषेण चरन्तं शूलपाणिनम् ।**
**गन्धर्वराजप्रतिमं देवं वाऽपि शतक्रतुम् ॥ १३ ॥**

**शूलपाणिनं** शूलपाणिशब्दाद्व्रीह्यादीनि । 'गन्धर्वाणां चित्ररथः'[1] इत्युक्तेः ॥१३॥

**अर्जुन उवाच -**

**भ्रातुर्नियोगाज्ज्येष्ठस्य संवत्सरमिदं व्रतम् ।**
**चरामि ब्रह्मचर्यं च सत्यमेतद् ब्रवीमि ते ॥ १४ ॥**

उर्वशीशापप्राप्तक्लीबत्वस्य विराटनगरप्रवेशकाले स्वकर्मत्वेन निवेदितस्य ज्येष्ठानुमोदनात् **भ्रातुर्नियोगात्** इत्युक्तिः ॥ १४ ॥

**नास्मि क्लीबो महाबाहो परवान् धर्मसंयुतः ।**
**समाप्तव्रतमुत्तीर्णं विद्धि मां त्वं नृपात्मज ॥ १५ ॥**

**नास्मि क्लीबो** जात्या किन्तु **परवान्** अस्वतन्त्रः शापाधीन इत्यान्तरङ्गिको भावः । **धर्मसंयुतः** प्रतिज्ञापालनरूपधर्मयुक्तः । **समाप्तव्रतं** निस्तीर्णाज्ञातवासव्रतम् । **उत्तीर्णं** द्यूतापद्भ्यः ॥ १५ ॥

**उत्तर उवाच -**

**परमोऽनुग्रहो मेऽद्य यतस्तर्को न मे वृथा ।**
**न हीदृशाः क्लीबरूपा भवन्ति तु नरोत्तम ॥ १६ ॥**

---

१. गीता (१०/२६)

**यतो मे** मम **तर्कः** ऊहः **वृथा** मोघो नाभूत् । तस्मात् **मे** मदुपरि परमोऽनुग्रहः हरेरिति शेषः । तर्काकारमाह– **नहीति** ।। १६ ।।

**सहायवानस्मि रणे युद्ध्येयममरैरपि ।**
**साध्वसं तु प्रणष्टं मे किं करोमि ब्रवीहि मे ।। १७ ।।**

**सहायवान्** त्वदभिन्नसहायवान् । **साध्वसं** भयम् **किं** कर्म ।। १७ ।।

**अहं ते सङ्ग्रहीष्यामि हयान् शत्रुरथारुजान् ।**
**शिक्षितो ह्यस्मि सारथ्ये तीर्थतः पुरुषर्षभ ।। १८ ।।**

**सङ्ग्रहीष्यामि** । 'ग्रहोऽलिटि'[1] इति दीर्घः । पररथानारुजयतीति तथा । रुजो भङ्गे 'इगुपधज्ञा'[2] इति कः । तस्य सम्बुद्धिः । **तीर्थतः** उपाध्यायात् । 'तीर्थं शास्त्राध्वर-क्षेत्रोपायोपाध्यायमन्त्रिषु' इति विश्वः ।। १८ ।।

**दारुको वासुदेवस्य यथा शक्रस्य मातलिः ।**
**तथा मां विद्धि सारथ्ये शिक्षितं नरपुङ्गव ।। १९ ।।**

**यस्य याते न पश्यन्ति भूमौ क्षिप्तं पदं पदम् ।**
**दक्षिणां यो धुरं युक्तः सुग्रीवसदृशो हयः ।। २० ।।**

**यस्य** दक्षिणभागनियुक्तस्य । **याते** गमने सति । **पदंपदं** प्रतिपदं न पश्यन्ति तादृशो वेगविशेष इति भावः । योजितः । सुग्रीवादयश्चत्वार उपमानभूताः कृष्णस्य हयाः । तथाच शेषामरः । 'अश्वाश्च शैब्यसुग्रीवमेघपुष्पाबलाहकाः' इति ।। २० ।।

**योऽयं धुरं धुर्यवरो वामां वहति शोभनः ।।**
**तं मन्ये मेघपुष्पस्य जवेन सदृशं हयम् ।। २१ ।।**

---

१. ग्रहोऽलिटि दीर्घः । - पा.सू.(७/२/३७)

२. इगुपधज्ञाप्रीकिरः कः । - पा.सू. (३/१/१३५)

धुरं वहन्तीति धुर्यास्तेषु वरः 'धुरो यड्ढकौ' [१] इति यत् । 'धूर्वहे धुर्यधारेये' इत्यमरः । **वामां धुरम्** ।। २१ ।।

**योऽयं काञ्चनसन्नाहः पार्ष्णिं वहति शोभनः ।**
**समं शैब्यस्य मन्येऽहं जवेन बलवत्तरम् ।। २२ ।।**

पार्ष्णिं पूर्वश्च पृष्ठभागम् । 'पार्ष्णिः पाश्चात्यभागे स्यात्' [२] इति विश्वः ।।२२ ।।

**योऽयं वहति ते पार्ष्णिं दक्षिणामभितः स्थितः ।**
**बलाहकादपि मतः स जवे वीर्यवत्तरः ।। २३ ।।**

ते त्वत्सम्बन्धिनी **पार्ष्णिं** वहति ।। २४ ।।

**त्वामेवायं रथो वोढुं सङ्ग्रामेऽर्हति धन्विनम् ।**
**त्वं चेमं रथमास्थाय योद्धुमर्हो मतो मम ।। २५ ।।**

**वैशम्पायन उवाच -**

**ततो विमुच्य बाहुभ्यां वलयानि स वीर्यवान् ।**
**चित्रदुन्दुभिसन्नादे [३] प्रत्यमुञ्चत् तदा शुभे [४] ।। २६ ।।**

**वलयानि** शङ्खान् । **चित्रदुन्दुभिसन्नादे** प्रत्यासन्ने सति । **शुभे** कुण्डले इति शेषः । **प्रत्यमुञ्चत्** मुमोच ।। २६ ।।

**कृष्णान् भङ्गिमतः केशान् श्वेतेनोद्ग्रथ्य वाससा ।**
**अथासौ प्राङ्मुखो भूत्वा शुचिः प्रयतमानसः ।। २७ ।।**

---

१. पा.सू. (४/४/७७)
२. 'पार्ष्णिः स्त्रीपुंसयोः पादमूले स्याद् ध्वजिनीकटौ' इति - रन्तिदेवः ।
३. चित्रे काञ्चनसन्नाहे (इति गी. पाठः)
४. तले (इति गी. पाठः)

भङ्गी वक्रता । **श्वेतेन वाससा उद्ग्रथ्य** बद्ध्वा ।। २७ ।।

**अभिदध्यौ महाबाहुः सर्वास्त्राणि रथोत्तमे ।**
**ऊचुश्च पार्थ सर्वाणि प्राञ्जलीनि नृपात्मजम् ।। २८ ।।**

**अस्त्राणि** तदभिमानिनो देवाः ।। २८ ।।

**[1]इमानि स्म महोदार किङ्कराणीन्द्रनन्दन ।**
**प्रणिपत्य ततः पार्थः समालभ्य च पाणिना ।। २९ ।।**

**इमानि** वयं **किं करवाणि स्म** । **प्रणिपत्य** नमस्कृत्य । **समालभ्य** स्पृष्ट्वा ।। २९ ।।

**सर्वाणि मानसानीह भवतेत्यभ्यभाषत ।**
**प्रतिगृह्य ततोऽस्त्राणि प्रहृष्टवदनोऽभवत् ।। ३० ।।**

**मानसानि** स्मृतिविषयाः ।। ३० ।।

**अधिज्यं तरसा कृत्वा गाण्डीवं व्याक्षिपद्धनुः ।**
**तस्य विक्षिप्यमाणस्य धनुषोऽभून्महाध्वनिः ।। ३१ ।।**

**अधिज्यं** सज्यम् । **व्याक्षिपत्** टङ्कारं कृतवान् ।। ३१ ।।

**यथा शैलस्य महतः शैलेनैवावजघ्नतः ।**
**सनिर्घाताऽभवद्भूमिर्दिक्षु वायुर्ववौ भृशम् ।। ३२ ।।**

**सनिर्घाता** निर्घातसहितेव । **भृशं वायुर्ववौ** ।। ३२ ।।

**पपात महती चोल्का दिशो न प्रचकाशिरे ।**
**भ्रान्तध्वजं खं तदाऽऽसीत् प्रकम्पितमहाद्रुमम् ।। ३३ ।।**

**खम्** आकाशं **भ्रान्तध्वजं** भ्रान्ता ध्वजा यस्मिन् तत् । **प्रकम्पितमहाद्रुमम्** ।।३३।।

---

१. इमे स्म परमोदाराः किङ्कराः पाण्डुनन्दन । (इति गी. पाठः)

**तं शब्दं कुरवोऽजानन् विस्फोटमशनेरिव ।**
**यदर्जुनो धनुःश्रेष्ठं बाहुभ्यामाक्षिपद्रथे ।। ३४ ।।**

**शब्दं अशनेः** वज्रस्य **विस्फोटमिव** व्यजानन् ।।३४ ।।

**उत्तर उवाच -**

**एकस्त्वं पाण्डवश्रेष्ठ बहूनेतान् महारथान् ।**
**कथं जेष्यसि सङ्ग्रामे सर्वशस्त्रास्त्रपारगान् ।। ३५ ।।**

**असहायोऽसि कौन्तेय ससहायाश्च कौरवाः ।**
**अत एव महाबाहो भीतस्तिष्ठामि तेऽग्रतः ।। ३६ ।।**

**अत एव** निःसहायत्वादेव ।। ३६ ।।

**उवाच पार्थो मा भैषीः प्रहस्य स्वनवत् तदा ।। ३७ ।।**

**स्वनवत्** ध्वनियुक्तं यथा भवति तथा **प्रहस्य मा भैषीः** भीतो मा भवेति **उवाच** ।। ३७ ।।

**युद्ध्यमानस्य मे वीर गन्धर्वैः सुमहाबलैः ।**
**सहायो घोषयात्रायां [१]कस्तदाऽऽसीत् सखा मम ।।३८।।**

**तथा प्रतिभये तस्मिन् देवदानवसङ्कुले ।**
**खाण्डवे युद्ध्यमानस्य [२]कस्तदाऽऽसीत् सखा मम ।।३९।।**

---

१. हरिश्च ब्रह्मा च - 'एको नैकः सवः कः किं' इति विष्णुसहस्रनामसु, 'मारुते वेधसि ब्रध्ने पुंसि कः' इत्यभिधानात् च । तयोरनुग्रहादेव पार्थस्य विजय आसीत् । इति म.भा.ता.निर्णयादवसीयते - तेजोभङ्गं तत्र सुयोधनस्य पार्थार्थमत्र प्रविधातुमेव ।
बलं ददाबब्दजः केशवश्च गन्धर्वाणां ................ ।। - म.भा.ता.नि (२२/४०९)

२. 'कः विष्णुः तस्य सारथ्यादेव अर्जुनस्य विजय आसीत्' इति भारतादिभिरवगम्यते ।
वधं वव्रे स्वशत्रूणामिन्द्रः पार्थात् स्वरूपतः ।
निवातकवचाख्यानामेषां ब्रह्मा परं ददौ ।।

कः सखा अस्त्रयुद्धत्वाद् भीमादीनां सत्त्वेऽपि सहायाभावोक्तिः ।। ३९ ।।

**निवातकवचैः सार्धं पौलोमैश्च महाबलैः ।**
**युद्ध्यतो देवराजार्थे [१]कः सहायस्तदाऽभवत् ।। ४० ।।**

**देवराजार्थे** गुरुदक्षिणार्थम्[२] । संयुगे प्रसक्ते ।। ४० ।।

**स्वयंवरे तु पाञ्चाल्या राजभिः सह संयुगे ।**
**युद्ध्यतो बहुभिस्तात [३]कः सहायस्तदाऽभवत् ।। ४१ ।।**

**उपजीव्य गुरुं द्रोणं शक्रं वैश्रवणं यमम् ।**
**वरुणं पावकं चैव कृपं कृष्णं च माधवम् ।। ४२ ।।**

---

अवध्यत्वं सुरैर्दैत्यैर्गन्धर्वैपक्षिराक्षसैः ।
पुनरिन्द्रेणार्थितोऽदात् जहीमान् नरदेहवान् ।। इत्यादि ।-म.भा.ता.निर्णये(२२/३२३-३२५)

१. 'कः ब्रह्मा । तस्य वरादेव अर्जुनस्य निवातकवचादीनाम् निग्रहशक्तिरभूत्' इति भारते व्यक्तम् ।

२. तत्रैव तेषां वसतां महात्मनामानन्दिनामब्दचतुष्टये गते ।
पञ्चाब्दमध्याप्य महान्ति चास्त्राणीन्द्रो गुर्वर्थं फल्गुनेनार्थितोऽभूत् ।।
वधं वव्रे स्वशत्रूणामिन्द्रः पार्थात् स्वरूपतः ।
निवातकवचाख्यानामेषां ब्रह्मा वरं ददौ ।।
अवध्यत्वं सुरैर्दैत्यैर्गन्धर्वैः पक्षिराक्षसैः ।
पुनरिन्द्रेणार्थितोऽदात् जहीमान् नरदेहवान् ।।
इति तेनार्जुनं शक्रः स्वात्मानं नरदेहगम् ।
जगाद तान् जहीत्येव किरीटं स्वं निबध्य च ।।-महाभारततात्पर्यनिर्णये(२२/३२२-३२५)

३. मत्स्ययन्त्रभेदनकार्यमपि पार्थस्य हरिवाय्वोरनुग्रहादेव -
तत्रार्जुनः पवनजात् प्रियतोऽप्यनुज्ञावादाय केशवमजं मनसा प्रणम्य ।
कृत्वा गुणान्वितमदो धनुरश्रमेण यन्त्रान्तरेण सा शरैरधुनोच्च लक्ष्यम् ।
- म.भा.ता.निर्णय (२२/१३१)

पिनाकपाणिनं चैव कथमेतान् न योधये ।
रथं वाहय मे शीघ्रं व्येतु ते मानसो ज्वरः ।। ४३ ।।

।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि पञ्चचत्वारिंशोऽध्यायः ।।

**गुरुं द्रोणं** तथास्त्रोपदेष्टॄनेतांश्चोपजीव्य **कथमेतान्** कुरून् **न योधये** । **कृष्णं** यादवम् । वासिष्ठं यादवं चेत्यर्थः । तयोः सर्वप्रकारेण गुरुत्वात् ।। ४३ ।।

।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां पञ्चचत्वारिंशोऽध्यायः ।।

*****

# ४६. षट्चत्वारिंशोऽध्यायः

( अर्जुनध्वजस्यागमनम् अजुरनकर्तृकशङ्खनादः )

**वैशम्पायन उवाच -**

उत्तरं सारथिं कृत्वा शमीं कृत्वा प्रदक्षिणम् ।
आयुधं सर्वमादाय प्रययौ पाण्डवर्षभः ।। १ ।।

**आयुधं** स्वायुधम् ।। १ ।।

ध्वजं सिंहं रथात् तस्मादपनीय महारथः ।
प्रणिधाय शमीमूले प्रायादुत्तरसारथिः ।। २ ।।

**सिंहं** तच्चिह्नितं ध्वजम् । **तस्माद् रथादपनीय** अवरोप्य तं रथं च **शमीमूले प्रणिधाय उत्तरसारथिः** सन् प्रययौ ।। २ ।।

दैवीं मायां रथे युक्तां विहितां विश्वकर्मणा ।
काञ्चनं सिंहलाङ्गूलं ध्वजं वानरलक्षणम् ।। ३ ।।

**मनसा चिन्तयामास प्रसादं पावकस्य च ।**
**स च तच्चिन्तितं ज्ञात्वा ध्वजे [१]भूतान्ययोजयत् ।। ४ ।।**

**सपताकं विचित्राङ्गं सोपासङ्गं महाबलम् ।**
**खात् पपात रथो तूर्णं दिव्यरूपं मनोरमम् ।। ५ ।।**

तद्रथस्य तत्रैव प्रणिधानात् कथमुत्तरसारथिः सन् ययावित्यत आह– **दैवीमिति** ।। **दैवीं** देवसम्बन्धिनीम् । **युक्तां** योजिताम् । **विश्वकर्मणा** त्वष्ट्रा सुरतक्ष्णा **विहितां** कृताम् । **काञ्चनं** स्वर्णमयम् । **सिंहलाङ्गूलम् वानरलक्षणम्** । सिंहलाङ्गूलवानरलक्षणं ध्वजं **मनसा चिन्तयामास** इत्यर्थः । **सिंहलाङ्गूलं** ध्वजस्य पृथक् चिह्नं वा । **प्रसादं** वररूपम् । सोऽग्निः । **तच्चिन्तितम्** तेनार्जुनेन चिन्तितं **सपताकं** विचित्राण्यङ्गानि यस्य तम्। **अपासङ्गं** अप्रतिघम् । स इत्युत्तरान्वयि । तेनोपासङ्गस्य शम्यामेव स्थापितस्य उत्तरहस्ततयैव ग्रहणात् । मायिकस्य रथस्य तत्साहित्यवर्णनमसङ्गतमिति परास्तम्। महारथं **ज्ञात्वा ध्वजे भूतान्ययोजयत्** । तद्योजनेन सह रथप्रेषणमिति भावः । स **रथो**ऽग्निप्रेषितः **खाद्** आकाशात् **पपात** । दिव्यं दिवि भवं रूपं यस्य । **मनोरमम्** ।। ३, ४, ५ ।।

**रथं तमागतं दृष्ट्वा दक्षिणं प्राकरोत् तदा ।**
**रथमास्थाय बीभत्सुः कौन्तेयः श्वेतवाहनः ।। ६ ।।**

**आगतं रथं दृष्ट्वा दक्षिणं प्राकरोत्** प्रदक्षिणमकरोदित्यर्थः । उपसर्गाणां वाचकत्व-पक्षे च्छन्दसि परेऽपि 'व्यवहिताश्च'[२] इत्युक्ते प्रेत्यस्य दक्षिणमित्यनेनान्वयो वा ।। ६ ।।

---

१. भूतान्यदेशयत् । (इति गी. पाठः)
२. पा.सू. (१/४/८२)

**बद्धगोधाङ्गुलित्राणः प्रगृहीतशरासनः ।**
**ततः प्रायादुदीचीं स कपिप्रवरकेतनः ॥ ७ ॥**

**स्वनवन्तं महाशङ्खं बलवानरिमर्दनः ।**
**प्राधमद् बलमास्थाय द्विषतां रोमहर्षणम्[१] ॥ ८ ॥**

**प्राधमत्** 'ध्मा शब्दाग्निसंयोगयोः' इति धातुव्याख्यानात् । शब्दयुक्तमकरोदित्यर्थः । 'प्राध्राध्मा' इति धमादेशः । **रोमहर्षणं** रोमाञ्चोत्पादकम् । **ततः** शङ्खशब्दात् ॥ ८ ॥

**ततस्ते [२]जवना धुर्या जानुभ्यामगमन्महीम् ।**
**उत्तरश्चापि सन्त्रस्तो रथोपस्थ उपाविशत् ॥ ९ ॥**

**संस्थाप्य चाश्वान् कौन्तेयः समुद्यम्य च रश्मिभिः ।**
**उत्तरं च परिष्वज्य समाश्वासयदर्जुनः ॥ १० ॥**

**संस्थाप्य** समाधानं कृत्वा ॥ १० ॥

**अर्जुन उवाच -**

**मा भैस्त्वं राजपुत्राग्र्य क्षत्रियोऽसि परन्तप ।**
**कथं तु पुरुषव्याघ्र शत्रुमध्ये विषीदसि ॥ ११ ॥**

**मा भैः** मा भैषीः ॥ ११ ॥

**श्रुतास्ते शङ्खशब्दाश्च भेरीशब्दाश्च पुष्कलाः ।**
**कुञ्जराणां च नदतां व्यूढानीकेषु तिष्ठताम् ॥ १२ ॥**

---

१. लोमहर्षणम् (इति गी. पाठः)

२. जवनन्तु स्यदे वेगिहये..... । इति मेदिनी ।

**स त्वं कथमिहानेन शङ्खशब्देन भीषितः ।**
**[१]विषण्णरूपो वित्रस्तः पुरुषः प्राकृतो यथा ।। १३ ।।**

**भीषितः** 'भियो हेतुभये षुक्'[२] इति षुगागमः । **वित्रस्तः** अत्रस्तः पूर्वम् । विषण्णं रूपं यस्य स तथा । **प्राकृतः** पामरः ।। १३ ।।

**उत्तर उवाच -**

**श्रुता मे शङ्खशब्दाश्च भेरीशब्दाश्च पुष्कलाः ।**
**कुञ्जराणां निनदतां व्यूढानीकेषु तिष्ठताम् ।। १४ ।।**

**नैवंविधः शङ्खशब्दः पुरा जातु मया श्रुतः ।**
**ध्वजस्य चापि रूपं मे दृष्टपूर्वं न हीदृशम् ।। १५ ।।**

**रूपम्** आकारः ।। १५ ।।

**धनुषश्चैव निर्घोषः श्रुतपूर्वो न मे क्वचित् ।**
**अस्य शङ्खस्य शब्देन धनुषो निस्वनेन च ।। १६ ।।**

**धनुषः** गाण्डीवस्य ।। १६ ।।

**अमानुषाणां शब्देन भूतानां ध्वजवासिनाम् ।**
**रथस्य च निनादेन मनो मुह्यति मे भृशम् ।। १७ ।।**

**अमानुषाणां** मानुषभिन्नानां भूतानाम् ।। १७ ।।

**व्याकुलाश्च दिशः सर्वा हृदयं व्यथतीव मे ।**
**ध्वजेन पिहिताः सर्वा दिशो न प्रतिभान्ति मे ।। १८ ।।**

**पिहिता** आच्छादिताः **दिशः न प्रतिभान्ति** । प्राचीत्वादिना न ज्ञायन्ते ।।१८।।

---

१. विवरणरूपो.. (इति नीलकण्ठीयपाठः)

२. भियो हेतुभये षुक् । - पा.सू. (७/३/४०)

**गाण्डीवस्य च शब्देन कर्णौ मे बधिरीकृतौ ।**
**स मुहूर्तं प्रयातं तु पार्थो वैराटिमब्रवीत् ।। १९ ।।**

**कर्णौ बधिरीकृतौ** शब्दग्रहणासमर्थौ कृतावित्यर्थः । **सः** अर्जुनः **मुहूर्तं** मुहूर्तपर्यन्तं **प्रयातम्** गतम् ।। १९ ।।

**एकान्तं रथमास्थाय पद्भ्यां त्वमवपीडयन् ।**
**दृढं च रश्मीन् संयच्छ शङ्खं ध्मास्याम्यहं पुनः ।। २० ।।**

**एकान्तं** सावधानम् । **रश्मीन्** रज्जूः । **संयच्छ** संयम्य तिष्ठ ।। २० ।।

**वैशम्पायन उवाच -**

**ततः शङ्खमुपाध्मासीत् दारयन्निव पर्वतान् ।**
**गुहा गिरीणां च तदा दिशः शैलांस्तथैव च ।**
**उत्तरश्चापि संलीनो रथोपस्थ उपाविशत् ।। २१ ।।**

**पर्वतान् दारयन्** इवेति शेषः । **गिरीणां गुहाः** पूरयन्ति वा **शैलान्** साधारणान् । **संलीनः** आकुञ्चिताकारः सन् ।। २१ ।।

**तस्य शङ्खस्य शब्देन रथनेमिस्वनेन च ।**
**गाण्डीवस्य च शब्देन पृथिवी समकम्पत ।। २२ ।।**

पृथिवीञ्जयस्य[१] कम्पे 'पृथिवी समकम्पत' इति पृथिवीकम्पः कैमुत्यसिद्ध इत्युत्प्रेक्षयन्ति ।। २२ ।।

**तं समाश्वासयामास पुनरेव धनञ्जयः ।। २३ ।।**

---

१. पृथिवीञ्जयः भूमिञ्जयः उत्तर इत्यर्थः । (४४/२३)

**द्रोण उवाच -**

**यथा रथस्य निर्घोषो यथा मेघ उदीर्यते ।**
**कम्पते च यथा भूमिर्नैषोऽन्यः सव्यसाचिनः ।। २४ ।।**

**रथस्य निर्घोषः यथा सव्यसाचिनः** तथा सव्यसाचिनः सकाशात् । **यथा मेघ उदीर्यते** तथाऽत्रापि मेघ उदीर्यते । यथा तदागमन**भूमिः** कम्पते, तथेदानीमपि कम्पते स **एषः सव्यसाचिनोऽन्यो** नेत्यर्थः ।। २४ ।।

**शस्त्राणि न प्रकाशन्ते प्रहृष्यन्ति न वाजिनः ।**
**अग्नयश्च न भासन्ते समिद्धास्तन्न शोभनम् ।। २५ ।।**

पराभूतिहेतूत्पातानाह– **शस्त्राणीति** ।। **न प्रहृष्यन्ति** हृष्टानि न भवन्ति । **समिद्धा** अपि । **तत्** शस्त्राद्यप्रकाशनं **न शोभनं** जयप्रदं नेत्यर्थः ।। २५ ।।

**प्रत्यादित्यं च नः सर्वे मृगा [१]घोरप्रबन्धिनः ।**
**ध्वजेषु च निलीयन्ते वायसास्तन्न शोभनम् ।। २६ ।।**

**प्रत्यादित्यं** आदित्याभिमुख्येन **घोरप्रबन्धिनः** घोरध्वनिं कुर्वाणा भवन्ति । **नः ध्वजेषु** ।। २६ ।।

**[२]विपरीतं प्रयान्त्येते वायसा मृगपक्षिणः ।**
**शकुनाश्चापसव्या नो वेदयन्ति महद्भयम् ।। २७ ।।**

**विपरीतं प्रयान्ति** । शुभगमनात् । मृगाः हरिणाद्याः पक्षिणः ताक्ष्र्या वा । शकुनाः सव्यगमनेन शुभसूचकाः ।। २७ ।।

**गोमायुरेष सेनायां रुदन् मध्येन धावति ।**
**अनाहतश्च निष्क्रान्तो महद्वेदयते भयम् ।। २८ ।।**

---

१. घोरप्रवादिनः । (इति गी. पाठः)

२. अयं श्लोकार्धः गी. पाठे न पठ्यते ।

**अनाहतः** अताडितः ।। २८ ।।

**भवतां रोमकूपाणि प्रहृष्टान्युपलक्षये ।**
**ध्रुवं विनाशो युद्धेन क्षत्रियाणां प्रदृश्यते ।। २९ ।।**

**ज्योतींषि न प्रकाशन्ते दारुणा मृगपक्षिणः ।**
**उत्पाता विविधा घोरा दृश्यन्ते क्षत्रनाशनाः ।। ३० ।।**

**ज्योतींषि** सूर्यादीनि ।। ३० ।।

**विशेषत इहास्माकं निमित्तानि विनाशने ।**
**उल्काभिश्च प्रदीप्ताभिर्बाध्यते पृतना तव ।**
**वाहनान्यप्रहृष्टानि रुदन्तीव विशाम्पते ।। ३१ ।।**

एतत्पात्रं वयमेवेत्याह– **विशेषत इति** ।। ३१ ।।

**उपासते च सैन्यानि गृध्रास्तव समन्ततः ।**
**तप्स्यसे वाहिनीं दृष्ट्वा पार्थबाणप्रपीडिताम् ।**
**पराभूता च वः सेना न कश्चिद्योद्धुमिच्छति ।। ३२ ।।**

**पार्थबाणप्रपीडिताम्** तथा निश्चितम् । **कश्चित्** तावकः ।। ३२ ।।

**विवर्णमुखभूयिष्ठाः सर्वे योधा विचेतसः ।**
**गाः सम्प्रस्थाप्य तिष्ठामो व्यूढानीकाः प्रहारिणः ।। ३३ ।।**

**।। इति श्रीमन्महाभारते श्रीविराटपर्वणि गोहरणपर्वणि षट्चत्वारिंशोऽध्यायः ।।**

विवर्णमुखाः भूयिष्ठाः भूयांसो येषां ते तथा । **सम्प्रस्थाप्य** पुरं प्रति **प्रहारिणः** प्रहारयुक्ताः ।। ३३ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां षट्चत्वारिंशोऽध्यायः ।।**

*****

# ४७. सप्तचत्वारिंशोऽध्यायः

( सङ्ग्रामविषये कर्णदुर्योधनोर्वार्तालापः )

**वैशम्पायन उवाच -**

**अथ दुर्योधनो राजा समरे भीष्ममब्रवीत् ।**
**द्रोणं च रथशार्दूलं कृपं च सुमहारथम् ॥ १ ॥**

**समरे** रणाङ्गणे ॥ १ ॥

**उक्तोऽयमर्थ आचार्यौ मया कर्णेन चासकृत् ।**
**पुनरेव प्रवक्ष्यामि नहि तृप्यामि तं ब्रुवन् ॥ २ ॥**

**आचार्यौ** द्रोणकृपौ प्रति अयमर्थो वक्ष्यमाणोऽसकृदुक्तः । तमर्थम् ॥ २ ॥

**[१]पराजितैर्हि वस्तव्यं तैर्हि द्वादशवत्सरान् ।**
**वने जनपदेऽज्ञातैरेवमेष पणो हि नः ॥ ३ ॥**

तमेवाह– **पराजितैरिति** ॥ **पराजितैः** द्यूते **वने द्वादशवत्सरान्** । **जनपदे** तु **अज्ञातैः** एकं संवत्सरमभिव्याप्य वस्तव्यमित्येषो **नः पणः** ग्लहः ॥ ३ ॥

**तेषां न तावन्निर्वृत्तं वर्तते तु त्रयोदशम् ।**
**अज्ञातवासं बीभत्सुरथास्माभिः समागतः ॥ ४ ॥**

**तेषां** पाण्डवानां **त्रयोदशं** वर्षं **न निर्वृत्तं** न सम्पूर्णम् **वर्तते** । अवशिष्टमित्यर्थः । **अज्ञातवासं** बहुव्रीहिः । **त्रयोदशं** विशेषणम् । अतो **बीभत्सुरस्माभिः समागत** इति **अथ** मङ्गलं जातमित्यर्थः । अथ स्नपयाम्बभूवेतिवत् । 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ' इत्यमरः ॥ ४ ॥

---

१. पराभूतैर्हि वस्तव्यम् । (इति गी. पाठः)

**अनिवृत्ते तु निर्वासे यदि बीभत्सुरागतः ।**
**पुनर्द्वादशवर्षाणि वने वत्स्यन्ति पाण्डवाः ॥ ५ ॥**

**निर्वासे** त्रयोदशे वर्षे **अनिवृत्ते** असम्पूर्णे सति **वने वत्स्यन्ति** । एकावलोकने सर्वैर्वस्तव्यमिति प्रतिज्ञानात् ॥ ५ ॥

**लोभाद्वा ते न जानीयुरस्मान् वा मोह आविशत् ।**
**हीनातिरिक्तमेतेषां भीष्मो वेदितुमर्हति ॥ ६ ॥**

**लोभात्** राज्यलोभात् । **न जानीयुः** न जानन्ति । **मोहो** न सम्पूर्णमिति भ्रमः । **एतेषां** वासराणां **हीनातिरिक्तं** न्यूनातिरेकम् । **भीष्मो** भवान् । आचार्याविभिमुखीकृत्यै-वमुक्तिः ॥ ६ ॥

**अर्थानां तु पुनर्द्वैधे नित्यं भवति संशयः ।**
**अन्यथाचिन्तितो ह्यर्थः पुनर्भवति सोऽन्यथा ॥ ७ ॥**

भीष्मस्यज्ञानित्वेनतन्निर्णयसामर्थ्येऽपिनास्माकंसइत्याह– **अर्थानामिति** ॥ **अर्थानां** कालादिपदार्थानां **द्वैधे** कोटिद्वयालिङ्गितत्वे **नित्यं संशयो** भवत्येवेत्यर्थः । यद्ययमर्जुनो मत्स्यसहायार्थमस्मान् प्रत्यागच्छेत् तदाऽपि फलितमस्मन्मनोरथद्रुमेणे-त्याह – **अन्यथेति** ॥ **अन्यथाचिन्तितः** कौरवपराभवार्थं कृतोऽयमुद्योगः । **सः अन्यथा** वनवासाय **भवति** स्वापराधेनैव ते नष्टा भविष्यन्ति ॥ ७ ॥

**उत्तरं मार्गमाणानां मत्स्यानां च युयुत्सताम् ।**
**यदि बीभत्सुरायातस्तेषां कस्यापराध्नुमः ॥ ८ ॥**

नास्माकं तत्राक्रम इत्याह– **उत्तरमिति** ॥ उत्तरं गोग्रहं **मार्गमाणानां** अन्वेष-माणानामस्माकं पुर इति शेषः । **मत्स्यानां प्रयुयुत्सतां** युद्धतस्ताननादृत्येत्यर्थः । **तेषां** मध्ये **बीभत्सुरायातः** तर्हि **वयं कस्य** धर्माद्यन्यतमस्य **अपराध्नुमः** ॥ ८ ॥

**त्रिगर्तानां वयं हेतोः मत्स्यान् योद्धुमिहागताः ।**
**मत्स्यानां प्रविकारांस्ते बहूनस्मानवर्णयन् ॥ ९ ॥**

मत्स्यत्रिगर्तसम्मर्दे अगच्छतां युष्माकं कथमर्जुनं प्रति कृतः पर्यनुयोगो नोपतिष्ठेतेत्यतो न वयं स्वतो मत्स्यान् प्रत्यायाता इत्याह– **त्रिगर्तानामिति ।** त्रिगर्तपक्षग्रहोऽपि युष्माकं कुत इत्यत आह– **मत्स्यानामिति** ॥ **ते** त्रिगर्ताः । **प्रविकारान्** अपकारान् **अवर्णयन्** विज्ञापितवन्तः ॥ ९ ॥

**तेषां भयाभिभूतानां तदस्माभिः प्रतिश्रुतम् ।**
**प्रथमं तैर्गृहीतव्यं मत्स्यानां गोधनं महत् ।**
**सप्तम्यामपराह्णे च तथा नस्तैः समाहितम् ॥ १० ॥**

तत् सहाय्यकरणं तत्रापि सङ्केतविशेषोऽभूदित्याह– **प्रथममिति** ॥ **तैः** त्रिगर्तैः । सह **समाहितं** आलोचितम् ॥ १० ॥

**अष्टम्यां पुनरस्माभिरादित्यस्योदयं प्रति ।**
**इमा गावो गृहीतव्या गते मत्स्ये [१]गवापहम् ॥ ११ ॥**

**इमाः** इदानीमानीताः । **मत्स्ये** विराटे **गवापदं** सुशर्मनीतगवां स्थानं प्रति । इति च समाहितमिति पूर्वेणान्वयः ॥ ११ ॥

**ते वा गा नैव पश्यन्ति यदि वा स्युः पराजिताः ।**
**अस्मान् वा ह्युपसङ्गृह्य कुर्युर्मत्स्येन सङ्गतम् ॥ १२ ॥**

एवं स्वसमयबन्धमभिधाय सम्प्रति त्रैगर्तवार्ताज्ञानान्नानाप्रकारेणोत्प्रेक्षयति– **त इति** ॥ **ते** त्रिगर्ताः **गा नैव पश्यन्ति** । स्वसङ्केतितस्थले तदनागमनात् । **पराजिता** मत्स्यैः । **अस्मानुपसङ्गृह्य** स्वापदशायामस्मानाश्रित्य । तदनन्तरं **मत्स्येन** । **सङ्गतं** स्नेहं **कुर्युः** अकुर्वन् वा ॥ १२ ॥

---

१. गवापहम् । इति क्वचित् ।

**अथवा तानपाहाय मत्स्यो जनपदैः सह ।**
**सर्वथा सेनया सार्धं सम्भूतो भीमरूपया ।**
**आयातः केवलां रात्रिमस्मान् [१]योद्धुमुपागतः ।। १३ ।।**

**अथवा मत्स्यः तान्** नीतगवानपि त्रैगर्तान् दूरगमनादिनिमित्तात् **अपहाय जनपदैः** तथा **सर्वथा सेनया** च **सार्धं** । **केवलां रात्रिं** स्वपुरं प्रति आयातः । एतद्दिने च पुनः **सम्भूतः** सेनया मिलितः सन् । **अस्मान् योद्धुमुपागतः** ।।१३।।

**तेषामेवं महावीर्यः कश्चिदेष पुरःसरः ।**
**अस्मान् जेतुमिहायातो मत्स्यो वाऽपि स्वयं भवेत् ।।१४।।**

सेनादीनामदर्शनात् कथमेवमूहनमित्यत आह– **तेषामिति** ।। **तेषां** मत्स्यानाम् । यस्य कस्यचिदेवं धैर्यासम्भवाद्राज्ञैव भाव्यमित्याह – **मत्स्यो वा** इति ।।१४ ।।

**यद्येष राजा मत्स्यानां यदि बीभत्सुरागतः ।**
**सर्वैर्योद्धव्यमस्माभिरिति नः समयः कृतः ।। १५ ।।**

**यदि बीभत्सुरागतः** तथापि बीभत्सौ रागः अनुरागः तस्मात् बीभत्सुरागतः । ल्यब्लो-पनिमित्ता पञ्चमी । तं विहाय **सर्वैर्योद्धव्यं** इत्यर्थः । तदपि सर्वैरस्माभिः अहं च यूयं च वयं च तैः । **समयः** सङ्केतः **कृतः** काले निर्गमकाले । अत एव समयबन्धनिमित्ताद् भीष्मो द्रोणः कृपश्चेति कथमिति योज्यं तान् प्रत्येव वचनात् ।। १५ ।।

**अथ कस्मात् स्थिता ह्येते रथेषु रथसत्तमाः ।**
**भीष्मो द्रोणः कृपश्चैव विकर्णो द्रौणिरेव च ।। १६ ।।**

---

१. योद्धुमिहागतः (इति गी. पाठः) ।

**सम्भ्रान्तमनसः सर्वे काले ह्यस्मिन् महारथाः ।
नान्यत्र युद्धाच्छ्रेयोऽस्ति तथाऽऽत्मा प्रणिधीयताम् ॥१७॥**

**अन्यत्र** अन्यवत् । **आत्मा** मनः । **प्रणिधीयतां** तत्रैव सावधानं क्रियताम् ॥ १७ ॥

**आच्छिन्ने गोधनेऽस्माकमपि देवेन वज्रिणा ।
यमेन वाऽपि सङ्ग्रामे को हास्तिनपुरं व्रजेत् ॥ १८ ॥**

अस्माभिराच्छिन्ने गोधने विषये अस्माकं इन्द्रादिभिरपि सङ्ग्रामे प्रत्यासन्ने तान् जित्वाऽस्मत्पुरं प्रति गत्वा न कोऽपीत्याह– **आच्छिन्न इति** ॥ अपहृत इत्यर्थः । **अपि देवेन वज्रिणा** किम्वर्जुनादिनेति भावः । **हास्तिनपुरं** नागपुरम् । यद्वाऽस्माकं गोधनो स्वापहृतत्वात् स्वसम्बन्धित्वेनोक्तिः । तस्मिन्निद्रादिभिराच्छिन्ने पुनरपहृते सति **सङ्ग्रामे** तान् जित्वा गां प्रत्यावर्त्य यः पुरं व्रजेत् स तादृशः **को**ऽस्ति हेति प्रसिद्धिरिति ॥ १८ ॥

**शरैरेभिः प्रणुन्नानां भग्नानां गहनेऽवने ।
को हि जीवेत् पदातीनां भवेदश्वेषु संशयः ॥ १९ ॥**

एभिरिति स्वाशयगतांल्लक्षीकृत्योक्तिः । **गहने** दुःखे मग्नानां मध्ये । **अवने** रक्षणविषये । **कः** न कोऽपीति **पदातीनां** मध्ये **को जीवेत्** न कोऽपीत्यर्थः । 'गहनं गह्वरं दुःखम्' इति विश्वः । **अश्वेषु संशयो कः भवेत्** नान्यथेति भावः ॥ १९ ॥

**दुर्योधनवचः श्रुत्वा राधेयस्त्वब्रवीद् वचः ।
आचार्यं पृष्ठतः कृत्वा तथा नीतिर्विधीयताम् ॥ २० ॥**

**आचार्यं** द्रोणम् । **पृष्ठतः कृत्वा** पश्चाद्भागे प्रस्थाप्य पाण्डवस्नेहकृतविश्वासादेव-मुक्तिः । **राधेयः** कर्णः ॥ २० ॥

**जानाति हि मतं तेषामतस्त्रासयतीह नः ।**
**अर्जुने चास्य सम्प्रीतिमधिकामुपलक्षये　　।। २१ ।।**

**तेषां** पाण्डवानां **मतं** सम्मतम् । अस्मत्तेजोभङ्गं कर्तव्यतया जानाति । **अतस्त्रासयतीह** । उत्पातादिशंसनेन ।। २१ ।।

**तथा हि दृष्ट्वा बीभत्सुमुपायान्तं प्रशंसति ।**
**यथा सेना न भज्येत तथा नीतिर्विधीयताम्　।। २२ ।।**

**प्रशंसति** स्तौति । **न भज्येत** आचार्योत्पादितभयात् ।। २२ ।।

**ह्रेषितं ह्युपशृण्वाने द्रोणे सर्वं विघट्टितम् ।**
**अदेशिका महारण्ये ग्रीष्मे शत्रुवशं गता ।**
**यथा न विभ्रमेत् सेना तथा नीतिर्विधीयताम् ।। २३ ।।**

**ह्रेषितं** अर्जुनवाजिध्वनिम् । अस्मत्कार्यं **सर्वं विघट्टितम्** विचलितम् । नष्टमिति यावत् । **अदेशिका** देशच्युतानि योजकरहिता वा **महारण्ये** अतिगहने कानने **ग्रीष्मे** निदाघे **शत्रुवशं गता सेना यथा विभ्रमति तथा । यथा न विभ्रमेत् तथा नीतिर्विधीयताम्** । 'ग्रीष्मो नामर्तुरभवन्नातिप्रेयांच्छरीरिणाम्'[१] इति भागवते । [२]'माधवदाघयानम्' इत्यादेश्च ।। २३ ।।

**इष्टा हि पाण्डवा नित्यमाचार्यस्य विशेषतः ।**
**आसयन्नपरार्थाश्च कथ्यते स्म स्वयं तथा　।। २४ ।।**

---

१. भागवते (१०/१६/१)

२. सन्तश्च लुब्धाश्च महर्षिसङ्घा विप्राः कृषिस्थाः खलु माननीयाः ।
　किं किं समिच्छन्ति तथैव सर्वे नेच्छन्ति किं माधवदाघयानम् ।।- इति अन्तर्लापिका सूक्तिः ।
　-मानम्, धनम्, वनम्, दानम्, घनम्, यानम् - माधवदाघयानम् । माधवे, वैशाखे, दाघः, ऊष्मा, तस्मिन् यानं गमनं नेच्छन्ति । - इत्यर्थस्तस्याः ।

**आचार्यस्य** द्रोणस्य **पाण्डवाः** विशेषेण **इष्टाः** ।। २४ ।।

**अश्वानां हेषितं श्रुत्वा कः प्रशंसापरो भवेत् ।**
**स्थाने चापि व्रजन्तो वा सदा हेषन्ति वाजिनः ।। २५ ।।**

अन्यथा **अश्वानां हेषितं** ध्वनिं **श्रुत्वा कः** पुमान् **प्रशंसापरो भवेत् । स्थाने** बन्धनस्थले । उत्तरत्र वक्ष्यमाणमिदं सर्वम् । **स्थाने**[1] युक्तम् । स्थान इति एदन्तमव्ययं गतम् ।। २५ ।।

**सदा च वायवो वान्ति नित्यं वर्षति वासवः ।**
**स्तनयित्नोश्च निर्घोषः श्रूयते बहुशस्तथा ।। २६ ।।**

**किमत्र कार्यं पार्थस्य कथं वा स प्रशस्यते ।**
**अन्यत्र कामाद्द्वेषाद्वा रोषाद्वाऽस्मासु केवलात् ।। २७ ।।**

**पार्थस्य** अर्जुनस्य **कार्यं** तत्कृतं **किं** वर्तते इत्यर्थः । अथ केन निमित्तेन सोऽर्जुनः । **कामात्** शिष्यप्रशंसाभिलाषात् **अस्मासु केवलाद्रोषाद्द्वेषाद्वा** । तं विना निमित्तान्तरं नास्तीत्यभिप्रायः ।। २७ ।।

**आचार्या वै कारुणिकाः प्राज्ञाश्चापापदर्शिनः ।**
**नैते महाभये प्राप्ते सम्प्रष्टव्याः कथञ्चन ।। २८ ।।**

**कारुणिकाः** दयालवः **अपापदर्शिनः** जनद्रोहो न कर्तव्य इति बुद्धिमन्तः । **न सम्प्रष्टव्याः** ।। २८ ।।

**प्रासादेषु विचित्रेषु गोष्ठीषूपवनेषु च ।**
**कथा विचित्राः कुर्वाणाः पण्डितास्तत्र शोभनाः ।। २९ ।।**

---

१. **स्थाने** हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्जते च । - (गीता -११/३६) इतिवत्

**प्रासादेषु गोष्ठीषु** परिषत्सु । 'समज्या परिषद् गोष्ठी' इत्यमरः । **तत्रैव** कथायामेव **शोभनाः** ।। २९ ।।

**बहून्याश्चर्यरूपाणि कुर्वतां जनसंसदि ।**
**इज्यास्त्रे चोपसन्धाने पण्डितास्तत्र शोभनाः ।। ३० ।।**

**बहून्याश्चर्यरूपाणि** ऐन्द्रजालिकादीनि **कुर्वतां** जनानां संसदि । **इज्यास्त्रे** यज्ञयुद्धे । 'स्यूपश्च कपालानि चाग्निहोत्रहवनी' इत्यारभ्य, 'उपला च' इत्यन्तं श्रुत्युक्तमायुधदशकं ग्राह्यम् । **उपसन्धाने** प्रोक्षणादौ ।। ३० ।।

**परेषां विवरज्ञाने मनुष्यचरितेषु च ।**
**हस्त्यश्वरथचर्यासु खरोष्ट्राजादिकर्मणि ।। ३१ ।।**

**विवरज्ञाने** तद्दोषज्ञाने । **मनुष्यचरितेषु** तदाचारविषये । **हस्त्यश्वरथचर्यासु** गजादिलक्षणविषये । **खरोष्ट्रादिकर्मणि** तच्चिकित्सादिव्यापारे ।। ३१ ।।

**गोधनेषु प्रतोलीषु वरद्वारमुखेषु च ।**
**अन्नसंस्कारदेशेषु पण्डितास्तत्र शोभनाः ।। ३२ ।।**

**प्रतोलीषु** रथ्यासु सूत्रादिधारणेन तन्निर्माणे । **अन्नसंस्कारदेशेषु** अस्मिन्नाग्नेय-कोणेऽन्नसंस्कारः कार्य इत्यन्नसंस्कारार्थं यो देशस्तद्विषये तज्ज्ञाने ।। ३२ ।।

**पण्डितान् पृष्ठतः कृत्वा परेषां गुणवादिनः ।**
**विधीयतां तथा नीतिर्यथा वध्येत वै परः ।। ३३ ।।**

**परेषां** शत्रूणाम् । **पृष्ठतः** सैन्यपश्चाद्भागे । **यथा** येन प्रकारेण **परः** शत्रुः । **वध्येत तथा नीतिर्विधीयताम्** ।। ३३ ।।

**गावश्चैव प्रतिष्ठन्तां सेनां व्यूहत मा चिरम् ।**
**आरक्षाश्च विधीयन्तां यत्र योत्स्यामहे परान् ।। ३४ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि सप्तचत्वारिंशोऽध्यायः ।।**

**प्रतिष्ठन्तां** तिष्ठन्तु । **व्यूहत** पद्मादिविधानेन । **आरक्षाः** परितः संरक्षणीयाः । **विधीयन्तां** 'आरक्षः रक्षणीये स्याद्' इति विश्वः । **यत्र** यस्मिन् देशे स्थित्वा **परान् योत्स्यामहे** तत्र **एवं विधीयताम्** ।। ३४ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां सप्तचत्वारिंशोऽध्यायः ।।**

*****

# ४८. अष्टचत्वारिंशोऽध्यायः

**( कर्णस्य बहुधा विकत्थनम् । )**

**कर्ण उवाच -**

**सर्वानायुष्मतोऽभीतान् सन्त्रस्तानिव लक्षये ।**
**अयुद्धमनसश्चैव सर्वांश्चैवानवस्थितान् ।। १ ।।**

**अभीतान्** अभितः अभिमुखान् तान् प्राप्तान् पूर्वमभीतान् वा इदानीं सन्त्रस्तमनसः लक्षये । **अयुद्धमनसः** युद्धोत्साहरहितान् । सर्वन्ति हिंसन्ति शत्रूनिति सर्वाः तान् । 'अर्व शर्व षर्व हिंसायाम्' इति धातुव्याख्यानात् । **अनवस्थितान्** चञ्चल-मनसः ।।१।।

**यद्येष राजा मत्स्यानां यदि बीभत्सुरागतः ।**
**अहमावारयिष्यामि वेलेव मकरालयम् ।। २ ।।**

**मम चापप्रयुक्तानां शराणां नतपर्वणाम् ।**
**नावृत्तिर्गच्छतां तेषां सर्पाणामिव सर्पताम् ।। ३ ।।**

**आवृत्तिः** अकार्यकरणे । **न** । **सर्पताम्** प्रसर्पताम् ।। ३ ।।

**रुक्मपुङ्खाः सुतीक्ष्णाग्रा मुक्ता हस्तवता मया ।**
**छादयन्तु शराः पार्थं शलभा इव पादपम् ।। ४ ।।**

**हस्तवता** लघुहस्तेन ।। ४ ।।

**शराणां पुङ्खसक्तानां मौर्व्याभिहतया दृढम् ।**
**श्रूयतां तलयोः शब्दो भेर्योराहतयोरिव ।। ५ ।।**

**पुङ्खसक्तानां** सम्बन्धाग्रभागानाम् । **शराणां** सताम् । **तलयोराहतया मौर्व्या** जायमानो यः शब्दः स **भेर्योराहतयोः** सत्योः यः शब्दस्तद्वद्भातीत्यर्थः ।। ५ ।।

**समाहितो हि बीभत्सुर्वर्षाण्यष्टौ च पञ्च च ।**
**जातस्नेहश्च युद्धेऽस्मिन् मयि सम्प्रहरिष्यति ।। ६ ।।**

**अष्टौ च पञ्च च** । आहत्य त्रयोदशसंवत्सरान् **समाहितः** युद्धैकमनस्कः । **जातस्नेहः** सम्पन्नाभिलाषः ।। ६ ।।

**पात्रीभूतश्च कौन्तेयो ब्राह्मणो गुणवानिव ।**
**शरौघान् प्रतिगृह्णातु मया मुक्तान् सहस्रशः ।। ७ ।।**

**गुणवान्** श्रोत्रियत्वादिगुणवान् **ब्राह्मणः** यथा दानस्य **पात्रीभूतः** । तथेत्यर्थः ।। ७ ।।

**एष चैव महेष्वासस्त्रिषु लोकेषु विश्रुतः ।**
**अहं चापि नरश्रेष्ठादर्जुनान्नावरः क्वचित् ।। ८ ।।**

**एषः** अर्जुनः । **नावरः** न नीचः ।। ८ ।।

**इतश्चेतश्च निर्मुक्तैः काञ्चनैर्गार्ध्रवाजितैः ।**
**दृश्यतामद्य वै व्योम खद्योतैरिव संवृतम् ।। ९ ।।**

गृध्रस्येमे गार्ध्राः ते वाजाः पक्षाः सञ्जाता एषां ते तथा तैः । 'वाजो निस्वन-पक्षयोः । वेगे पुमान्' इति मेदिनी । **खद्योतैः** ज्योतिरिङ्गणैः ।। ९ ।।

**अद्याहमृणमक्षय्यं पुरा वाचा प्रतिश्रुतम् ।**
**धार्तराष्ट्राय दास्यामि निहत्य समरेऽर्जुनम् ॥ १० ॥**

**पुरा वाचा प्रतिश्रुतं** 'अर्जुनं हनिष्यामि' इति प्रतिज्ञातम् । अक्षय्यं इतोऽतिरिक्ते न क्षेतुमशक्ये **यदृणं** तत् तं **निहत्य दास्यामि** ॥ १० ॥

**अन्तराच्छिद्यमानानां पुङ्खानां व्यतिशीर्यताम् ।**
**शलभानामिवाकाशे प्रचारः सम्प्रदृश्यताम् ॥ ११ ॥**

**अन्तरा** मध्य एव **च्छिद्यमानानां पुङ्खानां** पुङ्खवतां अर्जुनबाणानां त एव **व्यतिशीर्यताम्**। अनेकधा नाशं गच्छतां **प्रचारः** सञ्चारः ॥ ११ ॥

**इन्द्राशनिसमस्पर्शैर्महेन्द्रसमतेजसम् ।**
**अर्दयिष्याम्यहं पार्थमुल्काभिरिव कुञ्जरम् ॥ १२ ॥**

इन्द्राशनिर्वज्रम् । तत्समस्पर्शैर्बाणैः । **उल्काभिः** निर्गतज्वालाभिः ॥ १२ ॥

**रथादतिरथं शूरं सर्वशस्त्रभृतां वरम् ।**
**विवशं पार्थमादास्ये गरुत्मानिव पन्नगम् ॥ १३ ॥**

**अतिरथं विवशं** मद्बाणव्यथितं **पार्थं** रथाद् **आदास्ये** ॥ १३ ॥

**तमग्निमिव दुर्धर्षमसिशक्तिशरेन्धनम् ।**
**पाण्डवाग्निमहं दीप्तं प्रदहन्तमिवाहितम् ॥ १४ ॥**

असिशक्तिशरा एवेन्धनानि ज्वालासाधनानि यस्य तं **आहितं** पात्रम् । शमयिष्यामीत्युत्तरेणान्वयः ॥ १४ ॥

**अश्ववेगपुरोवातो रथौघस्तनयित्नुमान् ।**
**शरधारो महामेघः शमयिष्यामि पाण्डवम् ॥ १५ ॥**

**अश्ववेगपुरोवातः** वृष्टेः पूर्वभावी वायुः । रथौघशब्देन तद्ध्वनिर्लक्ष्यते । तथाच तल्लक्षणः यः स्तनयित्नुर्ध्वनिः, तद्वान् । रथौघा एव स्तनयित्नवो क्षुद्रमेघास्तद्वान् । अत एव **महामेघ** इत्युक्तिः । शर एव धाराः वर्षा धारा यस्य स तथा **महामेघोऽ**हम् ॥ १५ ॥

**मत्कार्मुकविनिर्मुक्ताः पार्थमाशीविषोपमाः ।**
**शराः समभिसर्पन्तु वल्मीकमिव पन्नगाः ॥ १६ ॥**

**सुतेजनै रुग्मपुङ्खैः सुपीतैर्नतपर्वभिः ।**
**आचितं पश्य कौन्तेयं कर्णिकारैरिवाचलम् ॥ १७ ॥**

**सुतेजनैः** शाणोल्लीढैः **सुपीतैः** गतम् । **आचितम्** व्याप्तसर्वाङ्गम् ॥ १७ ॥

**जामदग्न्यान्मया ह्यस्त्रं यत् प्राप्तमृषिसत्तमात् ।**
**तदुपाश्रित्य वीर्यं च युद्ध्येयमपि वासवम् ॥ १८ ॥**

**ध्वजाग्रे वानरस्तिष्ठन् भल्लेन निहतो मया ।**
**अद्यैव पततां भूमौ विनदन् भैरवान् रवान् ॥ १९ ॥**

**शत्रोर्मया विपन्नानां भूतानां ध्वजवासिनाम् ।**
**दिशः प्रतिष्ठमानानामस्तु शब्दो [१]दिवङ्गतम् ॥ २० ॥**

**दिशः** प्रति **प्रतिष्ठमानानां** गच्छतां **दिवङ्गतम्** ॥ २० ॥

**अद्य दुर्योधनस्याहं शल्यं हृदि चिरस्थितम् ।**
**समूलमुद्धरिष्यामि बीभत्सुं पातयन् रथात् ॥ २१ ॥**

**हताश्वं विरथं पार्थं पौरुषे पर्यवस्थितम् ।**
**निःश्वसन्तं यथा नागमद्य पश्यन्तु कौरवाः ॥ २२ ॥**

---

१. दिवङ्गमः (इति गी. पाठः) ।

**पौरुषे पर्यवस्थितम्** अपलायनात् ।। २२ ।।

**कामं गच्छन्तु कुरवो धनमादाय केवलम् ।**
**रथेषु वाऽपि तिष्ठन्तो युद्धं पश्यन्तु मामकम् ।। २३ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि अष्टचत्वारिंशोऽध्यायः ।।**

**केवलं** तिष्ठतु ।। २३ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां अष्टचत्वारिंशोऽध्यायः ।।**

*****

# ४९. एकोनपञ्चाशत्तमोऽध्यायः

( कृपाचार्यकर्तृकं कर्णस्य भर्त्सनम् )

**कृप उवाच -**

**सदैव तव राधेय युद्धे क्रूरतरा मतिः ।**
**नार्थानां प्रकृतिं वेत्सि नानुबन्धमवेक्षसे ।। १ ।।**

**अर्थानां** गवादीनां **प्रकृतिं** स्वभावं **न वेत्सि । अनुबन्धं** तत्साधनमपि **नावेक्षसे** ।।१।।

**माया हि बहवः सन्ति शास्त्राण्याश्रित्य चिन्तिताः ।**
**तेषां युद्धं तु पापिष्ठं बोधयन्ति पुराविदः ।। २ ।।**

**शास्त्राण्याश्रित्य चिन्तिता** विचारिता **बहवः** 'अतो गुणवचनात्' इत्युक्तेः । **मायाः** येषु सन्ति, **तेषां** विवक्षया **युद्धं पापिष्ठम्** इति **पुराविदः** ज्ञानिन इतरान् प्रति **बोधयन्ति** । एतेनार्जुनो माययेदानीं जेतुं न शक्य इति द्योत्यते ।। २ ।।

**देशकालेन संयुक्तं युद्धं विजयदं भवेत् ।**
**हीनकालं तदेवेह फलवन्न भवेत् पुनः[१] ।**
**देशे काले च विक्रान्तं कल्याणाय विधीयते ।। ३ ।।**

'धर्म्याद्धि युद्धात्'[२] इत्यादेर्येषाममायाविनां युद्ध एवं चेज्जयप्रदमित्याह– **देशकालेन संयुक्तमिति** ।। तदुपयुक्तं देशकालेनेत्यर्थः । देशसहितः काल इति वा एकवद्भावो वा । देशश्च कालश्चेनः स्वामी च तैः संयुक्तमिति वा तादृशं युद्धं **विजयदं भवेदित्यन्वयः** । **तदेव** युद्धं पुनः **हीनकालं** अतदुपयुक्तदेशकालस्वामिकं चेत् **फलवन्न भवेदित्यर्थः** । **देशे काले च विक्रान्तं** विक्रमः । **कल्याणाय विधीयत** इत्यर्थः ।।३।।

**आनुकूल्येन कार्याणामन्तरं संविधीयते ।**
**भारं हि रथकारस्य न व्यवस्यन्ति पण्डिताः ।। ४ ।।**

**कार्याणामानुकूल्येन** तत्तत्कार्यानुसारेण **अन्तरम्** अवकाशः । 'सन्नद्धोऽयं पतेत् किम्?' इत्याद्याभाणकमभणन् भणन् रथकारदृष्टान्तं सूतोऽसीति मर्म स्पृशन्निव तदनुरूपं निरूपयन् कृपो वक्ति– **भारमिति** ।। रथकारस्य यौगिकशब्दः । द्रविणं गणलाभलोभेन तव मनोरथानुरूपो रथोऽयमिति च दतो रथकारस्योपरि भारं नैर्भयं कर्तव्यत्वेन **पण्डिताः न व्यवस्यन्ति** । न निश्चिन्वन्ति । **हि** प्रसिद्धिमाह । अनेन तव वचनोपरि परिपतनमर्जुनोपरि न नो मनसे रुरुच इति ध्वन्यते । देशादिकमालोचनीयमिति भावः ।। ४ ।।

**परिचिन्त्य तु पार्थेन सन्निपातो न ते क्षमः ।**
**एकः कुरूनभ्यगच्छदेकश्चाग्निमतर्पयत् ।। ५ ।।**

---

१. फलं न लभते पुनः । (इति गी. पाठः)

२. इति गीतासु (२/३१)

हे **परिचिन्त्य** । कथं कथयति कर्णस्तद्भवेदित्यालोचनविषयः । कर्ण । **पार्थेन** सन्निपातः । द्वैरथेन गमनम् । **न क्षमः** न योग्यः । परिचिन्त्य स्थितानामस्माकं क्षमो योग्यो नेति भातीति केचित् । तुना सूचितामनास्थां कर्णवर्णने जनयन् पार्थविक्रमान् वक्तुमुपक्रमते– **एक** इति ॥ **कुरून्** पाञ्चालनगरगमनसमये । खाण्डवदाहे ॥ ५ ॥

**एकश्च पञ्च वर्षाणि ब्रह्मचर्यमधारयत् ।**
**एकः सुभद्रामारोप्य द्वैरथे कृष्णमाह्वयत् ॥ ६ ॥**

अस्त्राद्ययातयामतो उपोद्घलकमालपति– **एको ब्रह्मचर्यमधारयदिति** । **कृष्णम् आह्वयत्** । तद्वदभूत् ॥ ६ ॥

**एकः किरातरूपेण स्थितं रुद्रमयोधयत् ।**
**अस्मिन्नेव वने पार्थो हृतां कृष्णामवाजयत् ॥ ७ ॥**

**अयोधयत्** युयुधे । **कृष्णां** द्रौपदीम् । **हृताम्** जयद्रथेन । **अवेति** कूजितोऽ**जयदि**-त्यन्वयः । **अवाजयदि**त्यखण्डः शब्दः अजयदिति वा ॥ ७ ॥

**एकश्च पञ्चवर्षाणि शक्रादस्त्राण्यशिक्षत ।**
**एकः सोऽयमरीन् जित्वा कुरूणामकरोद्यशः ॥ ८ ॥**

**अरीन्** दिग्विजयकाले **कुरूणां** धर्मादीनाम् ॥ ८ ॥

**एको गन्धर्वराजानं चित्रसेनमरिन्दमः ।**
**विजिग्ये तरसा [१]सङ्ख्ये सेनां प्राप्य सुदुर्जयाम् ॥ ९ ॥**

कर्णवर्णितमेतदाकर्णितं वा तिष्ठत्विदं तु त्वदनुभवसिद्धमित्याह– **एक इति** ॥ **गन्धर्वराजानं** गतम् । **एकः** सैन्यविहीनः । चित्ररथस्यैव चित्रसेन इति नामान्तरम् । विचित्रसेनासहितमिति वा ॥ ९ ॥

---

१. सङ्खे (इति क्वचित्) ।

**तथा निवातकवचाः कालखञ्जाश्च दानवाः ।**
**दैवतैरप्यवध्यास्ते [१]एकेन युधि पातिताः ॥ १० ॥**

**दैवतैरप्यवध्याः** [२]ब्रह्मवरदानात् ॥ १० ॥

**एकेन हि त्वया कर्ण किं नामेह कृतं पुरा ।**
**एकैकेन यथा तेषां भूमिपाला वशे कृताः ॥ ११ ॥**

किं कर्म नाम **किं** कृतमिति वा । तवाह्वयः क्व ख्यापित इति यावत् । **तेषां** पाण्डवानां मध्ये ॥ ११ ॥

**इन्द्रोऽपि हि न पार्थेन संयुगे योद्धुमर्हति ।**
**यस्तेनाशंसते योद्धुं कर्तव्यं तस्य भेषजम् ॥ १२ ॥**

**संयुगे** प्रसक्ते । **आशंसते** वाञ्छति । **तस्य भेषजं कर्तव्यम्** । उन्मादविशेषोऽयमिति शिरो भित्त्वा औषधं स्थापनीयमिति भावः ॥ १२ ॥

**आशीविषस्य क्रुद्धस्य पाणिमुद्यम्य दक्षिणम् ।**
**अवमुच्य प्रदेशिन्या दंष्ट्रामादातुमिच्छसि ॥ १३ ॥**

**आशीविषस्य** । **'दंष्ट्राम्' 'दक्षिणम्'** इत्युक्तिस्तु कथञ्चिद्दशने विषपरिहारार्थं वामहस्तच्छेदेऽपि दक्षिणेन निर्वाहो भवति । तस्यैवोक्तप्रकारेण च्छेदे सर्वात्मना यजनादिसत्कर्मोपघात इत्यतिशायितमौर्ख्यद्योतनार्थम् । **अवमुच्य** स्थापयित्वा । **प्रदेशिन्या** तर्जन्या । यस्तेनाशंसते योद्धुं स एतादृश इत्यन्वयः । एवमुत्तरत्र ॥१३ ॥

---

१. एकेन स्वन्तस्थेन विष्णुना - 'एको नैकः' इति विष्णुसहस्रनामसु पाठात् ।

२. निवातकवचाख्यानामेषां ब्रह्मा परं ददौ ॥
अवध्यत्वं सुरैर्दैत्यैर्गन्धर्वैपक्षिराक्षसैः ।
पुनरिन्द्रेणार्थितोऽदात् जहीमान् नरदेहवान् ॥ इत्यादि ।-म.भा.ता.निर्णये(२२/३२३-३२४)

**अथवा कुञ्जरं मत्तमेक एव चरन् वने ।**
**अनङ्कुशं समारुह्य नगरं गन्तुमिच्छसि ॥ १४ ॥**

कथञ्चित् स्वेच्छानुसारेण **वने** सञ्चारेऽपि तदारोहेण नगरगमनं यथा दुःशकं तथेत्यर्थः ॥ १४ ॥

**समिद्धं पावकं चैव घृतमेदोवसाहुतम् ।**
**घृताक्तचीरवासास्त्वं मध्येनोत्सर्तुमिच्छसि ॥ १५ ॥**

घृतमेदोवसाभिर्हुतम् । घृताक्तं चीरं वासो यस्य स तथा । **उत्सर्तुं** उत्सर्पितुम् ॥ १५ ॥

**आत्मानं बन्धयित्वा तु कण्ठे बद्ध्वा तु वा शिलाम् ।**
**समुद्रं प्रतरेद्दोर्भ्यां तत्र किं नाम पौरुषम् ॥ १६ ॥**

**बन्धयित्वा** शणचीरैः । **कण्ठे शिलां बद्ध्वा** । **प्रतरेत्** तरितुमिच्छति । **तत्र** तरणे **किंनाम पौरुषं** पराक्रमः । शरीरस्य बद्धत्वात् ॥ १६ ॥

**अकृतास्त्रः कृतास्त्रं वै बलवन्तं सुदुर्बलः ।**
**तादृशं कर्ण यः पार्थं योद्धुमिच्छेत् स दुर्मतिः ॥ १७ ॥**

तादृशं **कृतास्त्रं बलवन्तं** च पार्थं **यो योद्धुमिच्छेत् स दुर्मति**रेव ॥ १७ ॥

**अस्माभिर्ह्येष निकृतो वर्षाणीह त्रयोदश ।**
**सिंहः पाशविनिर्मुक्तो न नः शेषं करिष्यति ॥ १८ ॥**

**निकृतो** वञ्चितः । **पाशविनिर्मुक्तः सिंह** इव ॥ १८ ॥

**एकान्ते पार्थमासीनं कूपोऽग्निमिव संवृतम् ।**
**अज्ञानादभ्यवस्कन्द्य प्राप्ताः स्मो भयमुत्तमम् ॥ १९ ॥**

अत्र वर्तत इत्यज्ञातत्वात् **एकान्ते** इत्युक्तं **संवृतं** तृणादिसञ्छन्नम् । **अभ्यवस्कन्द्य** पतित्वा ।। १९ ।।

**सह युद्ध्यामहे पार्थमागतं युद्धदुर्मदम् ।**
**सेना तिष्ठतु सन्नद्धा व्यूढानीकाः प्रहारिणः ।। २० ।।**

**सह** मिलित्वा **सेना** गजादिरूपा । **प्रहारिणः** तु **व्यूढानीकाः** तिष्ठन्तु ।। २० ।।

**द्रोणो दुर्योधनो भीष्मो भवान् द्रौणिस्तथा वयम् ।**
**सर्वे युद्ध्यामहे पार्थं कर्ण मा साहसं कृथाः ।। २१ ।।**

**स**हेत्युक्तं विशदयति– **द्रोण इति** ।। **वयं** चेति षड्रथाः । **साहसं** एकाकितया गमनरूपम् ।। २१ ।।

**वयं व्यवसितं पार्थं वज्रपाणिमिवोद्यतम् ।**
**षड्रथा प्रतियुद्ध्येम तिष्ठेम यदि संहताः ।। २२ ।।**

**वयं यदि संहता** मिलिताः **तिष्ठेम** तर्हि **व्यवसितं** अवश्यं योद्धव्यमिति । व्यवसायवन्तम् । **प्रतियुद्ध्येम** युद्ध्येमहि ।। २२ ।।

**व्यूढानीकानि सैन्यानि यत्ताः परमधन्विनः ।**
**युद्ध्यामहेऽर्जुनं सङ्ख्ये दानवा वासवं यथा ।। २३ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि एकोनपञ्चाशत्तमोऽध्यायः ।।**

**यत्ताः** सन्नद्धाः । अन्ततः पराजयस्य निश्चितत्वात् **दानवा यथा** इत्युक्तिः ।।२३।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां एकोनपञ्चाशत्तमोऽध्यायः ।।**

*****

# ५०. पञ्चाशत्तमोऽध्यायः

( अश्वत्थाम्न उद्गारः, कर्णस्य भर्त्सनं च )

**अश्वत्थामोवाच -**

**नच तावज्जिता गावो नच सीमान्तरं गताः ।**
**न हास्तिनापुरं प्राप्तास्त्वं च कर्ण विकत्थसे ।। १ ।।**

आचार्यं प्रत्यनार्यवचनमसहमानोऽश्वत्थामा प्राह– **नचेति** ।। **नच तावज्जिताः** । परपराजयपूर्वकं **हास्तिनपुरं प्राप्ताः** नापि तथा **सीमान्तरं गता** यतोऽतो न जिता इत्यन्वयः । एवं स्थिते त्वं **विकत्थसे** । चित्रमिति भावः ।। १ ।।

**सङ्ग्रामान् सुबहून् जित्वा लब्ध्वा च विपुलं धनम् ।**
**विजित्य च परां सेनां नाहुः किञ्चन पौरुषम् ।। २ ।।**

वीरधर्मोऽयमित्याह– **सङ्ग्रामानिति** ।। सङ्ग्रामजयो नाम तत्कर्तृद्वारा ज्ञेयः । **पौरुषं नाहुः** ।। २ ।।

**दहत्यग्निरवाक्यस्तु तूष्णीं भाति दिवाकरः ।**
**तूष्णीं धारयते लोकान् वसुधा सचराचरान् ।। ३ ।।**

**अवाक्यः** न विद्यते वाक्यं यस्य सः । तत्तद्वर्णैर्वर्तितमेवमिति तं वक्ति ।। ३ ।।

**चातुर्वर्ण्यस्य कर्माणि विहितानि स्वयम्भुवा ।**
**धनं यैरधिगन्तव्यं यच्च कुर्वन्न दुष्यति ।। ४ ।।**

**चातुर्वर्ण्यस्येति** ।। चत्वारो वर्णाः चातुर्वर्ण्यम् । स्वार्थे ष्यञ् । स्वयं भगवतो भवतीति स तेन ब्रह्मणा । **यैः** कर्मभिः । **यच्च** कर्म । **न दुष्यति** दोषवान् न भवति ।। ४ ।।

**अधीत्य ब्राह्मणो वेदान् याजयेत यजेत वा ।**
**क्षत्रियो धनुराश्रित्य यजेच्चैव न याजयेत् ।। ५ ।।**

चतुर्वर्णानां कर्माणि शृङ्गिग्राहिकतया वक्ति– **अधीत्येति** ।। अन्यान् याजयेत् । स्वयं यजेत च । **धनुराश्रित्य** तदुपजीव्येत्यर्थः ।। ५ ।।

**वैश्योऽधिगम्य वित्तानि ब्रह्मकर्माणि कारयेत् ।**
**शूद्रः शुश्रूषणं कुर्यात् त्रिषु वर्णेषु नित्यशः ।**
**वन्दनायोगविधिभिर्वैतसीं वृत्तिमास्थितः ।। ६ ।।**

**ब्रह्मकर्माणि** ब्राह्मणकर्तृकयज्ञादीनि । वेदोदितानीति वा कारयेत् कुर्यादित्यर्थः । **त्रिषु वर्णेषु** ब्राह्मणादिषु वन्दना युजन्तोऽयं शब्दः । तस्य योगः सम्बन्धः । तस्य ये विधयः प्रकारास्तैः **वैतसीं** वेतससम्बन्धिनीं प्रावण्यमिति यावत् ।। ६ ।।

**वर्तमाना यथाशास्त्रं प्राप्य चापि महीमिमाम् ।**
**सत्कुर्वन्ति महाभागा गुरून् सुविगुणानपि ।। ७ ।।**

यदर्थमस्यारम्भस्तदिदानीमाह– **वर्तमाना इति** ।। **यथाशास्त्रं** तदनतिक्रम्य । तत्रापि क्षत्रियाः । **इमां महीं प्राप्य** । **सु** अत्यन्तं **विगुणानपि सत्कुर्वन्ति** ।। ७ ।।

**प्राप्य द्यूतेन को राज्यं क्षत्रियस्तोष्टुमर्हति ।**
**तथा नृशंसरूपेण यथाऽन्यः प्राकृतो जनः ।। ८ ।।**

एवं स्थिते **द्यूतेन राज्यं प्राप्य** अत्यन्तं विगुणान् द्रोणादीन् आचार्यान् पृष्ठतः कृत्वेत्यादिना विनिन्द्यात्मानस्तोष्टुं स्तोतुमर्हतीति दुर्योधनं कटाक्षीकृत्य कर्णं प्रत्युक्तिः । 'ष्टुञ् स्तुतौ' तस्मात्तुमुन् । आर्षं षत्वम् । तोष्टुमिति च्छेदे सन्तोषं प्राप्तुमित्यर्थः । **यथा प्राकृतः** पामरो **जनः** यथा सम्यक् **नृशंसरूपेण** हिंसकव्यापारेणात्मानं स्तोतुमर्हति, तथा कः क्षत्रियस्तोष्टुमर्हतीति व्यतिरेकदृष्टान्तः ।।८।।

**अथावाप्तेषु वित्तेषु को विकत्थेद्विचक्षणः ।**
**निकृत्या वञ्चनायोगैश्चरन् वैतंसिको यथा ।। ९ ।।**

**अथावाप्तेषु** नृशंसव्यापारेण प्राप्तेषु सत्सु । वञ्चना युजन्तः, तद्योगैरुपायैः । **वैतंसिको** मांसविक्रेतृपुरुषविशेषः । 'वैतसिकः कौटिकश्च मांसिकश्च त्रयं समाः' इत्यमरः । **चरन् यथा** कत्थते तथा **निकृत्या** वञ्चनया द्यूतादिव्यापारेण चरन् को विचक्षणः **विकत्थेत्** विकत्थेत ।। ९ ।।

**कतमद्द्वैरथं युद्धं यत्राजैषीद्धनञ्जयम् ।**
**नकुलं सहदेवं च धनं येषां त्वया हृतम् ।। १० ।।**

**यत्र धनजयं** त्वं **अजैषीः** जितवानसि । तत् **कतमं द्वैरथं युद्धं** किं कीदृक् **येषां** पाण्डवानाम् ।। १० ।।

**युधिष्ठिरो जितः कस्मिन् भीमश्च बलिनांवरः ।**
**इन्द्रप्रस्थं त्वया कस्मिन् सङ्ग्रामे विजितं पुरा ।। ११ ।।**

**कस्मिन्** समरे समये वा । **इन्द्रप्रस्थं** तन्नामकं पुरम् । **विजितं** तज्जयश्चैतज्जय-द्वारा । **विजितं** स्वाधीनतां प्राप्तमिति वा ।। ११ ।।

**तथैव कतमद् युद्धं यस्मिन् कृष्णा जिता त्वया ।**
**एकवस्त्रा सभां नीता दुष्टकर्मन् रजस्वला ।। १२ ।।**

**कृष्णा** द्रौपदी । **एकवस्त्रा** अनुत्तरीयेति । नैकान्ते तदपीत्याह– **सभामिति** ।। हे **दुष्टकर्मन्** एवमादिदुर्व्यापार । **रजस्वला** । वलजन्तः । अथ 'रजस्वला स्त्रीधर्मिणी' इत्यमरः ।। १२ ।।

**मूलमेषां महत् कृत्तं सारार्थी चन्दनं यथा ।**
**कर्म कारयिथाः सूत तत्र किं विदुरोऽब्रवीत् ।। १३ ।।**

तत्कालेयं व्यापारो भवतः शोभन्ते । परन्तु व्यापादनसम्पादनं कुरूणामेवान्तत इत्याह । **एषां कुरूणां मूलमेव कृत्तं** च्छिन्नमिति । तत्रानुरूपं निदर्शनमाह ।

**साराथी** स्थिरांशार्थम् । **चन्दनं** मलयजं तन्मूलं कर्तयति । यथेति वर एव सार-समृद्धेः । यत्र हे **सूत** । अश्वत्थाम्नो रहस्याज्ञानाद्वा ज्ञानाद्वा भवतु मर्मस्पृग्वचन-मिति सूतेति सम्बोधनम् । **कर्म** एतद्रूपम् । **कारयिथाः** । मुख्यः सख्युरालोचनादान इत्येवमुक्तिः । **तत्र** तत्समये । **विदुरः किमब्रवीत्** । तत्रसाक्षी सिद्धमिति भावः ।। १३ ।।

**यथाशक्ति मनुष्याणां शममालक्षयामहे ।**
**अन्येषां चैव सत्त्वानामपि कीटपिपीलिकैः ।। १४ ।।**

प्रायः प्रायो मतिं मतमिदमित्यावेदयति– **यथाशक्तीति** ।। **अन्येषां सत्त्वानां** जन्तूनाम् । **कीटपिपीलिकैः** कीटाश्च पिपीलिकाश्च तेषां समाहारः कीटपिपीलिकम् । तत्र तच्च तैः अविशेषेण सर्वैरित्यर्थः । 'शनैर्याति पिपीलिकैः' इति प्रयोगात् पुंस्त्वमपीति स्वामीति भानुः । कीटाश्च पिपीलिकाश्च तैः । विभाषा वृक्षसूत्रभाष्ये फलसेनावनस्पतिमयशकुनि-क्षुद्रजन्तुधान्यतृणानां द्वन्द्वो विभाषैकवद्भवति बहुप्रकृतिरिति वक्तव्यम् । क्षुद्रजन्तु । पूकालिक्षम् । पूकालिका इत्युक्तेर्बहुवचनं सम्भवति । **शमं** शान्तिम् । सुखं कृतम् । **आलक्षयामहे** । किमु नेति शेषः । **मनुष्याणां** किमुतेति । यथाह नीतिवित् -

तृणेनापि समं सख्यं कर्तव्यं भूतिमिच्छता ।
अर्कपुष्पावमानेन महेन्द्रोऽभूत् पदच्युतः ।।

इति । 'सर्वभूतसुहृच्छान्तः' इत्यादेः । 'प्राचिकोल्का पिपीलिका' इति लिङ्गशेषामरः । लिङ्गाशिष्योक्तेः पिपीलिकैरिति वा ।। १४ ।।

**द्रौपद्याः सम्परिक्लेशं न क्षन्तुं पाण्डवोऽर्हति ।**
**क्षयाय धार्तराष्ट्राणां प्रादुर्भूतो धनञ्जयः ।। १५ ।।**

**पाण्डवो** अर्जुनः **प्रादुर्भूत** इत्युक्त्या देवता ध्वन्यते ।। १५ ।।

**त्वं पुनः पण्डितो भूत्वा वाचं वक्तुमिहेच्छसि ।**
**वैरान्तकरणो जिष्णुर्न नः शेषं करिष्यति ।। १६ ।।**

**वाचं वक्तुं** व्यवहर्तुम् । **पण्डितो भूत्वा** इत्यनेन मौर्ख्यं द्योत्यते । **वैरान्तकरणः** स्ववैरावसानकर्ता । **नः** मध्ये । एकं वा । **शेषं** शिष्टम् । अवशेषं वा **करिष्यति** । एवं चेद्देववरशान्तिर्भवतीति भावः ।। १६ ।।

**नैष देवान् न गन्धर्वान् नासुरान् न च राक्षसान् ।**
**भयादिह न युद्ध्येत कुन्तीपुत्रो धनञ्जयः ।। १७ ।।**

**यं यमेषो हि सङ्क्रुद्धः सङ्ग्रामे निपतिष्यति ।**
**क्षिप्रं गरुडवेगो वा निहत्य तमिहेष्यति ।। १८ ।।**

भूयात् । तेभ्यो भीतेः । **एषो** अर्जुनः **यं यं** प्रति **सङ्क्रुद्धः निपतिष्यति** । तं तं गतं **निहत्य इह** स्वस्थाने **एष्यति** तदप्यनायासेनेति निदर्शेन दर्शयति– **गरुडवेगो वेति** । वेगवान् गरुडः । अहिं 'न लोप'[1] इतिवत् प्रातिपदिकनिर्देशः । अन्यथा 'एतत्तदोः सुलोपोऽकोरनञ् समासे हलि'[2] इत्युक्तेः 'हषि च'[3] इत्युक्त्वा प्राप्तेः '**यं यमेषो हि**' इति निर्देशो न स्यात् ।। १७-१८ ।।

**त्वत्तो विशिष्टं वीर्येण धनुष्यमरराट्समम् ।**
**वासुदेवसमं वीर्ये तं पार्थं को न पूजयेत् ।। १९ ।।**

---

१. न लोपो नञः । पा.सू. (६/३/७३)

२. पा.सू. (६/१/१३२)

३. पा.सू. (६/१/११४)

हे कर्ण **त्वत्तो विशिष्टं** उत्तमम् ।। १९ ।।

**देवं दैवेन युद्ध्येत मानुषेण च मानुषम् ।**
**अस्त्रं ह्यस्त्रेण यो हन्यात् कोऽर्जुनेन समः पुमान् ।। २० ।।**

**दैवं** देवताकर्मणा युद्ध्यन्तं दैवेन कर्मणा **युद्ध्येत** । अथवा **दैवेनास्त्रेण** दैवमस्त्रं मा हन्यादिति योज्यम् ।। २० ।।

**पुत्रादनन्तरं शिष्यः इति धर्मविदो विदुः ।**
**एतेनापि निमित्तेन प्रियो द्रोणस्य पाण्डवः ।। २१ ।।**

एवं कर्णं प्रत्युक्त्वा दुर्योधनं कटाक्षीकृत्याह– **पुत्रादिति** ।। २१ ।।

**यथा त्वमकरोद्द्यूतमिन्द्रप्रस्थं यथाऽऽहरः ।**
**यथाऽनैषीः सभां कृष्णां तथा युद्ध्यस्व पाण्डवम् ।।२२।।**

**अनैषीः** प्रापितवानसि । **तथा** तेनैव प्रकारेण ।। २२ ।।

**अयं ते मातुलः प्राज्ञः क्षत्रधर्मस्य कोविदः ।**
**दुर्द्यूतदेवी गान्धारः शकुनिर्युद्ध्यतामिह ।। २३ ।।**

**अयं** पुरःस्थितः ।। २३ ।।

**नाक्षान् क्षिपति गाण्डीवं न कृतं द्वापरं न च ।**
**ज्वलतो निशितान् बाणांस्तांस्तान् क्षिपति गाण्डिवम् ।।२४।।**

**गाण्डीवं अक्षान्** पाशान् । नक्षिपति किन्तु बाणान् । **न कृतं द्वापरं नचेति** । अत्र त्रेताकली अपि उपलक्षणीयौ । तथा चात्र एकबिन्द्वङ्कितोऽक्षः कलिः । तद्द्वयाङ्कितो द्वापरः । त्रयाङ्कितस्त्रेता । चतुरङ्कितः कृतमिति सङ्केतः । एवं गाण्डीवं कृताद्यस्त्रान् नक्षिपतीत्यर्थः । **तांस्तान्** तत्तदाकाङ्क्षाप्रतिनिधीन् ।। २४ ।।

**नहि गाण्डीवनिर्मुक्ताः गार्ध्रपक्षाः सुतेजनाः ।**
**नान्तरेष्ववतिष्ठन्ते गिरीणामपि दारणाः ।। २५ ।।**

**अन्तरेषु** मध्येनान्तरेष्वित्यखण्डशब्दः ।। २५ ।।

**अन्तकः शमनो मृत्युस्तथाऽग्निर्वडवामुखः ।**
**कुर्युरेते क्वचिच्छेषं नतु क्रुद्धो धनञ्जयः ।। २६ ।।**

**अन्तको** रुद्रः । **शमनो** यमराट् **मृत्युः** यमदूतः । **वडवामुखोऽग्निः** प्रलयकालिकः इति **एते** ।। २६ ।।

**यथा सभायां द्यूतं त्वं मातुलेन सहाकरोः ।**
**तथा युद्ध्यस्व सङ्ग्रामे सौबलेन सुरक्षितः ।। २७ ।।**

**युद्ध्यतां काममाचार्यो नाहं योत्स्ये धनञ्जयम् ।**
**मत्स्यो ह्यस्माभिरायोध्यो यद्यागच्छेद्गवां पदम् ।। २८ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि पञ्चाशत्तमोऽध्यायः ।।**

**आचार्यो** मत्पिता । **गवाम्** अस्माभिरपहृतानाम् ।। २८ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां पञ्चाशत्तमोऽध्यायः ।।**

*****

# ५१. एकपञ्चाशत्तमोऽध्यायः

**( भीष्मकर्तृकदुर्योधनादिसान्त्वनम् )**

**भीष्म उवाच -**

**साधु पश्यति वै द्रौणिः कृपः साध्वनुपश्यति ।**
**कर्णस्तु क्षत्रधर्मेण केवलं योद्धुमिच्छति ।। १ ।।**

पुरतः कार्यगौरवात् सर्वान् सुमुखीकुर्वन् भीष्मो वक्ति– **साध्विति** ।। **योद्धुमिच्छति** इति यत्तदपि साधु ।। १ ।।

**आचार्यो नाभिवक्तव्यः पुरुषेण विजानता ।**
**देशकालौ तु सम्प्रेक्ष्य योद्धव्यमिति मे मतिः ।। २ ।।**

**आचार्यो** द्रोणः । **नाभिवक्तव्यः** 'आचार्यं पृष्ठतः कृत्वा' इत्यादि दुर्भाषणैर्न निन्दनीयः । 'अभिप्रेयसो' इत्यत्र 'काठकखण्डार्थे' अभिरवज्ञानार्थः[1] इत्युक्तेः । देशो विराटसम्बन्धी । कालस्त्वर्जुनसमागममुहूर्तरूपः ।। २ ।।

**यस्य सूर्यसमाः पञ्च सपत्नाः स्युः प्रहारिणः ।**
**कथमभ्युदये तेषां न प्रमुह्येत पण्डितः ।। ३ ।।**

**तेषां** सपत्नानाम् । **अभ्युदये** उच्छ्राये । को न मुह्येत मुह्येदेव ।। ३ ।।

**स्वार्थे सर्वे विमुह्यन्ति येऽपि धर्मविदो जनाः ।**
**तस्माद्राजन् ब्रवीम्येष वाक्यं ते यदि रोचते ।। ४ ।।**

**स्वार्थे** स्वकार्ये प्रत्युपस्थिते । **धर्मविदोऽपि** इत्यन्वयः । **तस्मात्** त्वच्चित्तस्य व्यग्रत्वात् ।। ४ ।।

**कर्णो हि यदवोचत् त्वां तेजःसञ्जननाय तत् ।**
**आचार्यपुत्रः क्षमतां महत् कार्यमुपस्थितम् ।। ५ ।।**

**तेजःसञ्जननाय** ईर्ष्यया बलाभिवृद्ध्यर्थम् । **आचार्यपुत्रः** अश्वत्थामा ।। ५ ।।

**नायं कालो विरोधस्य कौन्तेये समुपस्थिते ।**
**क्षन्तव्यं भवता सर्वमाचार्येण कृपेण च ।। ६ ।।**

---

१. अभितो अवज्ञाय । - इति श्रीव्यासतीर्थीये ।
अभि निपातानामनेकार्थत्वादवज्ञायेत्यर्थः । - इति श्रीराघवेन्द्रतीर्थीयकाठकोपनिषदर्थसङ्ग्रहे ।

द्रोणं प्रत्याह– **क्षन्तव्यमिति** ।। **भवता** आचार्येण ।। ६ ।।

**भवतां हि कृतास्त्रत्वं यथाऽऽदित्ये प्रभा तथा ।**
**यथा चन्द्रमसो लक्ष्मीः सर्वथा नापकृष्यते ।। ७ ।।**

**कृतास्त्रत्वं** शिक्षितास्त्रत्वं **आदित्ये यथा प्रभा**, तथागमापायरहितम् । **लक्ष्मीः** शोभा ।। ७ ।।

**एवं भवत्सु ब्राह्मण्यं ब्रह्मास्त्रं च प्रतिष्ठितम् ।**
**चत्वार एकतो वेदाः क्षात्रमेकत्र दृश्यते ।। ८ ।।**

**एकतः** एकस्मिन् पुरुषे । **क्षात्रमेकत्र** पुरुषान्तरे ।। ८ ।।

**नैतत् समस्तमुभयं कस्मिंश्चिदपि शुश्रुमः ।**
**अन्यत्र भारताचार्यात् सपुत्रादिति मे मतिः ।। ९ ।।**

एवम् **एतत्समस्तं** सङ्गम् **उभयं** ब्राह्मणक्षत्रियसर्वस्वरूपं परस्परपरिहारेण वर्तमानं **भारताचार्यात्** भवतोऽन्यस्मिन् कस्मिन्नपि पुरुषे **न शुश्रुम** इत्यन्वयः ।। ९ ।।

**वेदान्ताश्च पुराणानि इतिहासं पुरातनम् ।**
**जामदग्न्यमृते राजन् को द्रोणादधिको भवेत् ।। १० ।।**

दुर्योधनं प्रत्याह– **वेदान्ता इति** ।। उपनिषद इत्यर्थः । **पुराणानि** मात्स्यादीनि । **इतिहासम्** पुरावृत्तम् । **जामदग्न्यं** परशुरामम् ।। १० ।।

**ब्रह्मास्त्रं चैव वेदाश्च नैतदन्यत्र दृश्यते ।**
**आचार्यपुत्र क्षमतां नायं कालो विभेदने ।। ११ ।।**

हे **आचार्यपुत्र,** भवान् **क्षमताम्** । **अन्यत्र** त्वदन्यत्र ।। ११ ।।

**सर्वे संहत्य युद्ध्यामः पाकशासनिमागतम् ।। १२ ।।**

**दुर्योधन उवाच -**

**बलस्य व्यसनानीह यान्युक्तानि मनीषिभिः ।**
**मुख्यो भेदो हि तेषां तु पापिष्ठो विदुषां मतः ॥ १३ ॥**

**बलस्य** सैन्यस्य । **व्यसनानि** च्छिद्राणि तेषां मध्ये **भेदो** विरोधः **मुख्यो** मतः ॥ १३ ॥

**अश्वत्थामोवाच -**

**नैवं न्याय्यमिदं वाच्यमस्माकं पुरुषर्षभ ।**
**किन्तु रोषपरीतेन गुरुणा भाषिता गुणाः ॥ १४ ॥**

अर्जुनगुणोदीरणेन वयं भिन्ना इति न भ्रामितव्यं त्वयेत्याह– **नैवमिति** ॥ इदं सैन्यस्य भेदरूपं व्यसनं **अस्माकं वाच्यम्** इति यदुक्तं तत्, **न्याय्यं न** भवतीत्यर्थः। कुत इत्यत आह– **किन्त्विति** ॥ रोषः शिष्यविप्रकृतिजन्यः । तत्परीतेन व्याप्तेन। गुणास्तदीयाः ॥ १४ ॥

**शत्रोरपि गुणा ग्राह्या दोषा वाच्या गुरोरपि ।**
**सर्वथा सर्वयत्नेन पुत्रे शिष्ये हितं वदेत् ॥ १५ ॥**

नैतेऽवाच्या इत्याह– **शत्रोरिति** ॥ **हितं वदेत्** इति हेतोः 'सेनां व्यूहतया चिरम्' इत्याद्युक्तमिति शेषः ॥ १५ ॥

**दुर्योधन उवाच -**

**आचार्य एव क्षमतां शान्तिरत्र विधीयताम् ।**
**अभिद्यमाने तु गुरौ तद् वृत्तं रोषकारितम् ॥ १६ ॥**

**एष आचार्यो** द्रोणः अपकृतोऽसौ कथं क्षमत इत्यत आह– **शान्तिरिति** ॥ गुरौ द्रोणे अभिद्यमाने सति । शेषकारित अवशेषितं न कृतं भवेत् । किन्तु

सर्वकार्यं पूर्णमेव कृतमिति भावः । 'अविद्यमाने तु गुरौ' इति पाठे शेषकारितं अवशिष्टं सर्वमपि कार्यं न कृतं भवेदित्यर्थः । प्रथमं वाक्यं 'साधु पश्यति वै द्रौणिः' । 'कर्णस्तु क्षत्रधर्मेण' । 'आचार्यो नाभिवक्तव्यः' इत्यादिरूपम् । असावहमसौ नीतिरिव ।। १६ ।।

**वैशम्पायन उवाच -**

**ततो दुर्योधनो द्रोणं क्षमयामास भारत ।**
**सह कर्णेन भीष्मेण कृपेण च महात्मना ।। १७ ।।**

**द्रोण उवाच -**

**यदेतत् प्रथमं वाक्यं भीष्मः शान्तनवोऽब्रवीत् ।**
**तेनैवाहं प्रसन्नो वै नीतिरत्र विधीयताम् ।। १८ ।।**

**यथा दुर्योधनं पार्थो नायं पश्यति सैनिकान् ।**
**साहसाद्यदि वा मोहात् तथा नीतिर्विधीयताम् ।। १९ ।।**

तामेवाह– **यथेति** ।। **अयं पार्थः** तथा **सैनिकांश्च न पश्यति** । **साहसात्** सौवात् । **मोहात्** दुर्योधनादेः मोहं प्रापय्येति वा ।। १९ ।।

**वनवासे ह्यनिर्वृत्ते दर्शयेन्न धनञ्जयः ।**
**धनं चालभमानोऽत्र नाद्य तत् क्षन्तुमर्हति ।। २० ।।**

**अनिर्वृत्ते** असमाप्ते । **न दर्शयेत्** आत्मामिति शेषः । **धनं** स्वराज्यरूपम् । गोधनं वा । **तत्** कौरवापकृतम् ।। २० ।।

**यथा नायं समायुञ्ज्याद् [१]धार्तराष्ट्रं कथञ्चन ।**
**न च सेना पराजय्या तथा नीतिर्विधीयताम् ।। २१ ।।**

१. धार्तराष्ट्रान् (इति गी. पाठः)

**धार्तराष्ट्रं** दुर्योधनम् । **सेना यथा न पराजय्या** न पराजेतुं शक्या **तथा** व्यूहरचनादिना **नीतिर्विधीयताम्** ।। २१ ।।

**उक्तं दुर्योधनेनापि पुरस्तात् वाक्यमीदृशम् ।**
**तदनुस्मृत्य गाङ्गेय यथावद्वक्तुमर्हसि ।। २२ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि एकपञ्चाशत्तमोऽध्यायः ।।**

**ईदृशं** सन्देहास्पदमर्जुनमुद्दिश्य **पुरस्तात् दुर्योधनेनापि** वाक्यमज्ञातवासो न सम्पूर्ण इत्यादिरूपमुक्तम् । तदप्यनुसृत्य तन्न यद्वक्तव्यं **तद्वक्तुमर्हसि** ।। २२ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां एकपञ्चाशत्तमोऽध्यायः ।।**

*****

# ५२. द्विपञ्चाशत्तमोऽध्यायः

**( भीष्मादीनां विनिश्चयः । )**

**भीष्म उवाच -**

**कलाः काष्ठाश्च युज्यन्ते मुहूर्ताश्च दिनानि च ।**
**अर्धमासाश्च मासाश्च नक्षत्राणि ग्रहास्तथा ।। १ ।।**

द्रोणोक्तो भीष्मः शास्त्रसम्मत्या दुर्योधनप्रश्नस्योत्तरमाह– **कला इति** ।। **कलाः** त्रिंशत्काष्ठाः अष्टादशनिमेषाः । 'अष्टादशनिमेषास्तु काष्ठास्त्रिंशस्तु ताः कलाः' इत्यमरः । **युज्यन्ते** परस्परं मिलित्वा कालविशेषसञ्ज्ञाभाजो भवन्ति । **मुहूर्ताः** घटिकाद्वयात्मिकाः । **दिनानि** त्रिंशत्परिमिताहोरात्रात्मकानि । **अर्धमासाः** पक्षाः **मासाः** पक्षद्वयात्मानः । अत एतद्ग्रहणं वक्ष्यमाणचान्द्रमानस्य प्रामाणिकत्वद्योतनार्थम् । तेन सौरमानेऽस्यानुपयोगाद् व्यर्थवचनता भीष्मस्येति शङ्कानवकाश इति ध्येयम् । **नक्षत्राणि** अश्विन्यादीनि **ग्रहाः** सूर्यादयः ।। १ ।।

**ऋतवश्चापि युज्यन्ते यथा संवत्सरा अपि ।**
**एवं कालविभागेन कालचक्रं प्रवर्तते ॥ २ ॥**

**ऋतवः** मासद्वयात्मकाः । **कालविभागेन** अवान्तरकालविभागेन ॥ २ ॥

**तेषां कालातिरेकेण ज्योतिषां च व्यतिक्रमात् ।**
**पञ्चमे पञ्चमे वर्षे द्वौ मासावुपजायतः ॥ ३ ॥**

**तेषां** नक्षत्रादीनां कालात् स्वक्लृप्ताद् योऽतिरेकः वृद्धिरूपस्तस्मात् । **ज्योतिषां** सूर्यादीनां च व्यतिक्रमाद्गतिविशेषाच्च **पञ्चमे पञ्चमे वर्षे द्वौ मासौ** अधिकौ **उपजायतः** उपजायन्ते ॥ ३ ॥

**एषामभ्यधिका मासाः पञ्च च द्वादश क्षपाः ।**
**त्रयोदशानां वर्षाणामिति मे [१]धीयते मतिः ॥ ४ ॥**

एवञ्चैषां पाण्डवानां त्रयोदशानां वर्षाणां मिलित्वा पञ्चमासाः द्वादशक्षपाः अत्र क्षपाशब्देनाक्षपरिमितार्धदिनं ग्राह्यम् । एवञ्च षट् दिनानि अभ्यधिकानि इति मे धीयते मतिः । अयं भावः । सार्धवर्षद्वयस्यैकोऽधिमासो जायते । एवमाहत्य त्रयोदशवर्षाणां षट्दिनाधिकपञ्चका भवन्ति । ता न गणयित्वा त्रयोदशमासात्मककालस्याप्येकसंवत्सरात्मत्वमेव देवपितृकार्यादिष्विवाङ्गीकृत्य क्लृप्तकालो न जात इति दुर्योधनाद्यभिप्रयः। पाण्डवानां तु देवादिकार्ये तथात्वेऽपि लौकिके समयविशेषेऽस्मिन् अधिकमासस्याप्युपरितनवर्षघटकत्वमङ्गीकृत्य द्वादशमासस्यैवैकवर्षत्वमिति गणनायां सङ्केतपूर्तिर्जातेति हृदयमिति सोमवंश्यानामस्माकमयमेव कालो मुख्य इत्यर्थः ॥४ ॥

**सर्वं यथावच्चरितं यद्यदेभिः प्ररिश्रुतम् ।**
**एवमेतद् ध्रुवं ज्ञात्वा ततो बीभत्सुरागतः ॥ ५ ॥**

---

१. वर्तते मतिः (इति गी. पाठः) ।

**एभिः** पाण्डवैः **यद्यत् प्रतिश्रुतं** वनवासाज्ञातवासादिरूपं तत्तद्यथावत्सम्यगेव **चरितं** कृतम् । एवं मदुक्तरीत्या गणनया एतत्त्रयोदशसंवत्सरपूर्णत्वं **ज्ञात्वा बीभत्सुः** द्रुतम् **आगतः** ।। ५ ।।

**सर्वे चैव महात्मानः सर्वे धर्मार्थकोविदाः ।**
**येषां युधिष्ठिरो राजा कस्माद्धर्मेऽपराध्नुयुः ।। ६ ।।**

राज्यलोभादकाल एवागत इति किं न स्यादित्यतो नैते तथाभूता इति वक्तुं तद्गुणानाह कैश्चिच्छ्लोकैः – **सर्व इति** ।। **युधिष्ठिरः** साक्षाद्धर्ममूर्तिः **राजा येषां** ते । धर्मविषये **कस्मादपराध्नुयुः** । तदतिक्रमं कुर्युरिति यावत् ।। ६ ।।

**अलुब्धाश्चैव कौन्तेयाः कृतवन्तश्च दुष्करम् ।**
**न चापि केवलं राज्यमिच्छेयुस्तेऽनुपायतः ।। ७ ।।**

**तदैव ते हि [१]विक्रान्तमीषुः कौरवनन्दनाः ।**
**धर्मपाशनिबद्धास्तु न चेलुः क्षत्रियव्रतात् ।। ८ ।।**

**तदैव** द्रौपद्याः सभानयनकाल एव । **विक्रान्तं** पराक्रान्तम् **ईषुः** ऐच्छन् । परन्तु **धर्मपाशनिबद्धा** इति कृत्वा **क्षत्रियव्रतात्** स्वप्रतिज्ञायाः **न चेलुः** ।। ८ ।।

**यच्चानृत इति ख्यायाद्यः स गच्छेत् पराभवम् ।**
**वृणुयुर्मरणं पार्था नानृतत्वं कथञ्चन ।। ९ ।।**

यः अर्जुनस्य विरचनं वचनं वाऽनृतमिति ख्यायात् प्रकथयेत् स च पराभवं गच्छेत् ।। ९ ।।

**प्राप्तकाले तु प्राप्तव्यं नोत्सृजेयुर्नरर्षभाः ।**
**अपि वज्रभृता गुप्तं तथावीर्या हि पाण्डवाः ।। १० ।।**

---

१. विक्रान्तुमीषुः (इति गी. पाठः) ।

**प्राप्तकाले** योग्यसमये । **प्राप्तव्यं** भागं **वज्रभृता गुप्तम्** **अपि** तथा वीर्यं येषां ते तथा ॥ १० ॥

**प्रतियुध्येम समरे सर्वशस्त्रभृतां वरम् ।**
**तस्माद्यदत्र कल्याणं लोके सद्भिरनुष्ठितम् ।**
**तत् संविधीयतां शीघ्रं मा वो ह्यर्थोऽभ्यगात् परम् ॥११॥**

**अत्र** एतद्विषये । **कल्याणं** क्षेमं । **नो** अस्माकम् **अर्थः** प्रस्तुतगवादिरूपः ॥ ११ ॥

**न हि पश्यामि सङ्ग्रामे कदाचिदपि कौरव ।**
**[1]एकान्तसिद्धिं राजेन्द्र सम्प्राप्तश्च धनञ्जयः ॥ १२ ॥**

वयमेव जेष्याम इति निश्चयो न कार्य इत्याह– **नहीति** । **एकान्तसिद्धिं** एकस्यैव विजयरूपिणीम् । तत्रापि प्रतिभटो न यादृशतादृश इत्याह - **सम्प्राप्तश्च धनञ्जय** इति ॥ १२ ॥

**सम्प्रवृत्ते तु सङ्ग्रामे भावाभावौ जयाजयौ ।**
**अवश्यमेकं स्पृशतो दृष्टमेतदसंशयम् ॥ १३ ॥**

**भावाभावौ** जीवनविनाशौ । **एकम्** अन्यतरम् ॥ १३ ॥

**तस्माद्युद्धोचितं कर्म कर्म वा धर्मसंहितम् ।**
**क्रियतामाशु राजेन्द्र सम्प्राप्तश्च धनञ्जयः ॥ १४ ॥**

**युद्धोचितं** व्यूहनादिरूपम् । **धर्मसंहितं** धर्मसहितम् । राज्यप्रदानरूपम् । **कर्म आशु क्रियताम्** । तत्र हेतुः– **सम्प्राप्त इति** ॥ १४ ॥

---

१. युद्धसिद्धिर्हि चञ्चला । (वाल्मीकिरामायणे ५/४६/१७))

**दुर्योधन उवाच**

**नाहं राज्यं प्रदास्यामि पाण्डवानां पितामह ।**
**युद्धोपचारिकं यत् तु तच्छीघ्रं प्रविधीयताम् ।। १५ ।।**

**युद्धोपचारिकं** तदुपयुक्तम् ।। १५ ।।

**भीष्म उवाच -**

**अत्र या मामिका बुद्धिः श्रूयतां यदि रोचते ।**
**सर्वथा हि मया श्रेयो वक्तव्यं कुरुनन्दन ।। १६ ।।**

**मामिका** 'मामकनरकयोः'[१] इतीत्वम् । सञ्ज्ञाच्छन्दसोर्नियमितत्वेनाणन्तत्वेऽपि न ङीप् । मदीया ।। १६ ।।

**क्षिप्रं बलं चतुर्भागं गृह्य गच्छ पुरं प्रति ।**
**ततो परश्चतुर्भागो गाः समादाय गच्छतु ।। १७ ।।**

**चतुर्भागं** चतुर्थं भागं **पुरं** नागपुरम् । अपरश्चतुर्भागश्चतुर्थांशः । 'अन्तेषु रेमिरे धीराः' इत्यादाविव तृतीयस्यापि एतद्विवक्षया चतुर्थत्वं ज्ञेयम् ।। १७ ।।

**वयं चार्धेन सैन्येन प्रतियोत्स्याम पाण्डवम् ।**
**अहं द्रोणश्च कर्णश्च अश्वत्थामा कृपस्तथा ।। १८ ।।**

**अर्धेन** अवशिष्टभागद्वयेन **सैन्येन प्रतियोत्स्याम** प्रतियोत्स्यामः ।। १८ ।।

**प्रतियोत्स्याम बीभत्सुमागतं कृतनिश्चयम् ।**
**मत्स्यं वा पुनरायातमागतं वा शतक्रतुम् ।। १९ ।।**

**कृतनिश्चयं** एतान् पराभावयामीति निश्चयवन्तम् ।। १९ ।।

---

१. मामकनरकयोरुपसङ्ख्यानम् । - वार्तिकम् ।

**वैशम्पायन उवाच -**

**तद्वाक्यं रुरुचे तेषां भीष्मेणोक्तं महात्मना ।**

**तथाहि कृतवान् राजा कौरवाणामनन्तरम् ।। २० ।।**

तत् प्रसिद्धम् । यद्वा **महात्मना भीष्मेण** भयानकेन **अर्जुनेन** निमित्तेन उक्तम् । **तद्वाक्यं तेषां रुरुच** इत्यन्वयः । भीष्मेण राज्यप्रदानं विनाऽस्यार्थस्यानभिप्रेतेन तेषामिति षष्ठी । **कौरवाणां राजा अनन्तरं** तदुत्त्यनन्तरम् ।। २० ।।

**भीष्मः प्रस्थाप्य राजानं गोधनं तदनन्तरम् ।**

**सेनामुख्यान्यवस्थाप्य व्यूहितुं सम्प्रचक्रमे ।। २१ ।।**

व्यूहितुं व्यूहं कर्तुम् ।। २१ ।।

**भीष्म उवाच -**

**आचार्य मध्ये तिष्ठ त्वमश्वत्थामा तु सव्यतः ।**

**कृपः शारद्वतो धीमान् पार्श्वं रक्षतु दक्षिणम् ।। २२ ।।**

**सव्यतः** सेनावामभागे । **शारद्वतः** भार्गवान्मध्यस्थत्वेन 'शरद्वच्छुनक...'[1] इति न फक् । किन्तु 'तस्यापत्यम्'[2] इत्यण् । शरद्वत्पुत्रः ।। २२ ।।

**अग्रतः सूतपुत्रस्तु कर्णस्तिष्ठतु दंशितः ।**

**अहं सर्वस्य सैन्यस्य पश्चात् स्थास्यामि पालयन् ।।२३।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि द्विपञ्चाशत्तमोऽध्यायः ।।**

**अग्रतः सूतपुत्रः कर्णः** ।। २३ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां द्विपञ्चाशत्तमोऽध्यायः ।।**

*****

---

१. शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु । - पा.सू. (४/१/१०२)

२. तस्यापत्यम् । - पा.सू. (४/१/९२)

# ५३. त्रिपञ्चाशत्तमोऽध्यायः

( अर्जुनेन विराटस्य गवां विनिवर्तनम् । )

**वैशम्पायन उवाच -**

**तथा व्यूढेष्वनीकेषु कौरवेयेषु भारत ।**
**उपायादर्जुनस्तूर्णं रथघोषेण नादयन् ॥ १ ॥**

**व्यूढेषु** वहेः निष्ठायां सम्प्रसारणे ढत्वे ढलोपे दीर्घे च रूपम् । **नादयन्** दिश इति शेषः ॥ १ ॥

**ददृशुस्ते ध्वजाग्रं वै शुश्रुवुश्च महास्वनम् ।**
**दोधूयमानस्य भृशं गाण्डीवस्य च निस्वनम् ॥ २ ॥**

**दोधूयमानस्य** सपताकस्य ध्वजस्य **महास्वनम्** ॥ २ ॥

**ततस्तु सर्वमालोक्य द्रोणो वचनमब्रवीत् ।**
**महारथमनुप्राप्तं दृष्ट्वा गाण्डीवधन्विनम् ॥ ३ ॥**

**सर्वं** रथादिकम् **आलोक्य गाण्डीवधन्विनं** प्रत्यक्षतो **दृष्ट्वा** च **वचनमब्रवीत्** ॥३॥

**द्रोण उवाच**

**एतद्ध्वजाग्रं पार्थस्य दूरतः सम्प्रकाशते ।**
**एष घोषो रथस्याजौ रोरवीति च वानरः ॥ ४ ॥**

**आजौ** युद्धे । श्रूयमाण एष घोषः **रथस्य** तद्रथस्यैव । **वानरः** हनूमान् । **रोरवीति** अतिशयेन पुनःपुनर्वा शब्दं करोति ॥ ४ ॥

**एष तिष्ठन् रथश्रेष्ठेऽरथे च रथिनां वरः ।**
**उत्कर्षति धनुःश्रेष्ठं गाण्डीवमशनिस्वनम् ॥ ५ ॥**

**अरथे** सहायार्थं प्रतिरथरहिते **उत्कर्षति** परिकर्षति ॥ ५ ॥

**इमौ च बाणौ सहितौ पादयोर्मे व्यवस्थितौ ।**
**अपरौ चाप्यतिक्रान्तौ कर्णौ संस्पृश्य मे शरौ ।। ६ ।।**

**मे** पादयोरुपरि **स्थितौ** । **कर्णौ संस्पृश्यातिक्रान्तौ** केवलं स्पृष्ट्वा विनिर्गतौ ।। ६ ।।

**निरुष्य हि वने वासं कृत्वा कर्मातिमानुषम् ।**
**अभिवादयते पार्थः श्रोत्रे च परिपृच्छति ।। ७ ।।**

तदभिप्रायं स्वयमेवाह– **निरुष्येति** ।। **वने निरुष्य वासम्** अज्ञातवासं **कृत्वा अतिमानुषं कर्म** स्वर्गगमनादिरूपं कृत्वा माम् **अभिवादयते** । एतद्व्याजेन पादसमीपं प्राप्ताभ्याम् अनुज्ञा युद्धार्थं देयेति **श्रोत्रे च** द्वाभ्यां **परिपृच्छति** ।। ७ ।।

**चिरदृष्टोऽयमस्माभिः प्रज्ञावान् बान्धवप्रियः ।**
**अतीव ज्वलितो लक्ष्म्या पाण्डुपुत्रो धनञ्जयः ।। ८ ।।**

**बान्धवप्रियः** स्वजनेभ्योऽपि प्रियः । **लक्ष्म्या** वीरप्रभया ।। ८ ।।

**रथी शरी चारुतली निषङ्गी शङ्खी पताकी कवची किरीटी ।**
**खड्गी च धन्वी च विभाति पार्थः शिखी वृतः स्रग्भिरिवाज्यसिक्तः ।९।**

चारु च तत्तलं तलत्रं च चारुतलं, तदस्यास्तीति तथा । पताकी शिखादिः एवं **शिखी** अग्निः । **स्रग्भिः** बहुवचनमाद्यर्थे । स्रगादिभिः वृतः ।। ९ ।।

**अर्जुन उवाच -**

**इषुपाते च सेनाया हयान् संयच्छ सारथे ।**
**यावत् समीक्षे सैन्येऽस्मिन् क्वासौ कुरुकुलाधमः ।।१०।।**

**सेनायाः इषुपाते** तत्परिमिते देशे । **कुरुकुलाधमो** दुर्योधनो **असौ क्व वर्तत** इति **यावत् समीक्षे** तावत् **हयान् संयच्छ** ।। १० ।।

**सर्वानेताननादृत्य दृष्ट्वा तमतिमानिनम् ।**
**तस्य मूर्ध्नि पतिष्यामि तत एते पराजिताः ।। ११ ।।**

**तस्य** दुर्योधनस्य **मूर्ध्नि पतिष्यामि** । एवमेव हि लोकव्यवहारः । शरान् पातयिष्यामीत्यभिप्रायः । **ततः** तत्पराजयादेव ।। ११ ।।

**एष व्यवस्थितो द्रोणो द्रौणिश्च तदनन्तरम् ।**
**भीष्मः कृपश्च कर्णश्च महेष्वासाः समागताः ।। १२ ।।**

सर्वेऽपि व्यवस्थिताः ।। १२ ।।

**राजानं नात्र पश्यामि गाः समादाय गच्छति ।**
**दक्षिणं मार्गमास्थाय शङ्के जीवपरायणः ।। १३ ।।**

कुतो गत इत्यतो वक्ति– **शङ्के** इति ।। १३ ।।

**उत्सृज्यैतद्रथानीकं गच्छ यत्र सुयोधनः ।**
**तत्रैव योत्स्ये वैराटे नास्ति युद्धं निरामिषम् ।**
**तं च जित्वा निवर्तिष्ये गाः समादाय वै पुनः ।। १४ ।।**

**योत्स्ये निरामिषं** मुख्यविषयीभूतराजरहितम् ।। १४ ।।

**वैशम्पायन उवाच -**

**एवमुक्तः स वैराटिर्हयान् संयम्य यत्नतः ।**
**नियम्य च ततो रश्मीन् यत्र ते कुरुपुङ्गवाः ।**
**अचोदयत् ततो वाहान् यत्र दुर्योधनस्ततः ।। १५ ।।**

**हयान् संयम्य** स्थितो वैराटिरेवमुक्तः सन् **यत्र ते कुरुपुङ्गवाः** द्रोणाद्याः **ततो** मार्गाद् **रश्मीन् नियम्य** प्रत्यावर्त्य यत्र दुर्योधनस्ततस्तन्मार्गेण **वाहान-चोदयत्** ।। १५ ।।

**उत्सृज्य रथवंशं तु प्रयाते श्वेतवाहने ।**
**अभिप्रायं विदित्वा तु कृपो वचनमब्रवीत् ।। १६ ।।**

**रथवंशं** तत्समूहम् । **अभिप्रायम्** अर्जुनस्य ।। १६ ।।

**नैषोऽन्तरेण राजानं बीभत्सुः स्थातुमिच्छति ।**
**तस्य पार्ष्णिं ग्रहीष्यामो जवेनाभिप्रयास्यतः ।**
**न ह्येनमतिसङ्क्रुद्धमेको युद्ध्येत संयुगे ।। १७ ।।**

तमेवाह– **नेति** ।। **राजानमन्तरेण** विना **एषो न स्थातुमिच्छति** । **तस्य** अर्जुनस्य **ग्रहीष्यामः** । सर्वे कुत एवमित्यत आह– **नहीति** ।। १७ ।।

**अन्यो देवात् सहस्राक्षात् कृष्णाद्वा देवकीसुतात् ।**
**आचार्याच्च सपुत्राद्वा भारद्वाजान्महारथात् ।। १८ ।।**

एकश्चेद्योद्धा एतदन्यतमो भवेदित्याह– **अन्य इति** ।। **भारद्वाजाद्** आचार्यात् ।।१८।।

**किं नो गावः करिष्यन्ति धनं वा विपुलं तथा ।**
**दुर्योधनः पार्थजले पुरा नौरिव मज्जति ।। १९ ।।**

दुर्योधनार्थं गमने गावो नीयन्त इत्यतो वक्ति– **किं न इति** ।। **नो** अभीष्टं **किं करिष्यन्ति** । **दुर्योधनः पार्थजले मज्जति** तत् **पुरा** वयं उदन्वति **मज्जतो नौरिव** तत्पार्ष्णिं ग्रहीष्याम इत्यर्थः ।। १९ ।।

**तथैव गत्वा बीभत्सुर्नाम विश्राव्य चात्मनः ।**
**शलभैरिव तां सेनां शरैः शीघ्रमवाकिरत् ।। २० ।।**

यथा सङ्कल्पितवान् तथेत्यर्थः । **आत्मनो नाम विश्राव्य** अर्जुनोऽहमागत इत्युद्घोष्य । **शलभैः** पतङ्गैः **इव** सङ्घचैः **शरैः अवाकिरत्** आच्छादितवान् ।।२० ।।

**कीर्यमाणाः शरौघैस्तु योधास्ते पार्थचोदितैः ।**
**नापश्यन्नावृतां भूमिं नान्तरिक्षं पतत्रिभिः ॥ २१ ॥**

**पतत्रिभिः** आवृतम् ॥ २१ ॥

**तेषामापततां युद्धे नापयानेऽभवन्मतिः ।**
**शीघ्रत्वमेव पार्थस्य पूजयन्ति स्म चेतसा ॥ २२ ॥**

आपततां बाणानां सकाशात् **तेषां** योधानाम् **अपयाने मतिर्नाभवत्** । सर्वतो बाणावृतत्वादिति भावः ॥ २२ ॥

**ततः शङ्खं प्रदध्मौ स द्विषतां लोमहर्षणम् ।**
**विस्फार्य च धनुःश्रेष्ठं ध्वजे भूतान्यचोदयत् ॥ २३ ॥**

**भूतान्यचोदयत्** ध्वनिं कर्तुम् ॥ २३ ॥

**तस्य शङ्खस्य शब्देन रथनेमिस्वनेन च ।**
**गाण्डीवस्य च घोषेण पृथिवी समपकम्पत ॥ २४ ॥**

**गाण्डीवस्य** धनुष इति सामानाधिकरण्यम् । **भूतानां घोषेण** इत्यन्वयो द्रष्टव्यः ॥ २४ ॥

**अमानुषाणां भूतानां तेषां च ध्वजवासिनाम् ।**
**ऊर्ध्वं पुच्छान् विधुन्वाना [१]रम्भमाणाः समन्ततः ।**
**गावः प्रतिन्यवर्तन्त दिशमास्थाय दक्षिणाम् ॥ २५ ॥**

**॥ इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि त्रिपञ्चाशत्तमोऽध्यायः ॥**

---

१. रेभमाणाः । (इति गी. पाठः)

**ऊर्ध्वं पुच्छान् विधुन्वानाः** कम्पयन्त्यः 'पुच्छोऽस्त्री' इत्यमरः । **रम्भमाणाः** हम्बारवं कुर्वाणाः **दक्षिणां दिशम्** ।। २५ ।।

।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां त्रिपञ्चाशत्तमोऽध्यायः ।।

*****

# ५४. चतुःपञ्चाशत्तमोऽध्यायः

( अर्जुनकर्तृककर्णाद्याक्रमणम्, कर्णविकर्णादीनां पराभवश्च । )

**वैशम्पायन उवाच -**

**स शत्रुसेनां तरसा प्रणुद्य गास्ता विजित्याथ धनुर्धराग्र्यः ।**
**दुर्योधनायाभिमुखं प्रयातो भूयो रणं सोऽभिचिकीर्षमाणः ।।१।।**

**ताः गाः** तद्गृहीता । **भूयः** पुनः **रणं** युद्धं **चिकीर्षमाणः** कर्तुमिच्छन् ।। १ ।।

**गोषु प्रयातासु जवेन मत्स्यान् किरीटिनं कृतकार्यं च मत्वा ।**
**दुर्योधनायाभिमुखं प्रयातं कुरुप्रवीराः सहसाभिपेतुः ।। २ ।।**

**गोषु मत्स्यान्** । एकैकराशिस्थानविवक्षया बहुवचनम् । **प्रयातासु** सतीषु । प्रयातेष्विति **पाठे** गावो ग्राम्याश्च गावो वृषभाश्च । 'पुमान् स्त्रिया'[1] इत्येकशेषसम्भवो ज्ञेयः । 'ग्राम्यपशु...'[2] इति स्त्रीशेषो वा प्रयातशब्दस्तु नपुंसकलिङ्गः । उपपत्तिस्तु प्रागुक्ता अनुसन्धेया ।। २ ।।

**तेषामनीकानि बहूनि गाढं व्यूढानि दृष्ट्वा बहुलध्वजानि ।**
**मत्स्यस्य पुत्रं द्विषतां निहन्ता वैराटिमामन्त्र्य ततोऽभ्युवाच ।।३।।**

१. पा.सू. (१/२/६७)

२. ग्राम्यपशुसङ्घेष्वतरुणेषु स्त्री । पा.सू. (१/२/७३)

**गाढं** दृढं यथा भवति तथा । **व्यूढानि द्विषतां निहन्ता** अर्जुनः । तृजयम् । **मत्स्यस्य पुत्रं** उत्तरं **वैराटिम्** । वैरं गवापहारजं आटयति बहिर्निःसारयत्यर्जुनद्वारेति स तम् । 'अचः'[1] इति इरिः । अतो नान्यतरातिरेकः । **केचित्** – मत्स्यपुत्रं तद्गोत्रापत्यम् । वैराटिं विराटौरसमिति व्यातन्वते । **आमन्त्र्य** सम्बोद्ध्य ।।३ ।।

**एतेन तूर्णं प्रतिपादयेमान् श्वेतान् हयान् काञ्चनरश्मियोक्त्रान् ।**
**जवेन सर्वेण कुरु प्रयत्नमासादयेऽहं कुरुसिंहवृन्दम् ।। ४ ।।**

**एतेन** मार्गेण **काञ्चनरश्मियोक्त्रान्** काञ्चनानि रश्मियोक्त्राणि रज्जुकण्टकबन्धनानि एषां तान् । 'आबन्धो योत्रं योक्त्रम्' इत्यमरः । **सर्वेण जवेन प्रयत्नं कुरु** । कुरुसिंहानां **वृन्दं** समूहम् ।। ४ ।।

**गजो गजेनेव मया दुरात्मा योद्धुं समाकाङ्क्षति सूतपुत्रः ।**
**तमेव मां प्रापय राजपुत्र दुर्योधनापाश्रयजातदर्पम् ।। ५ ।।**

दुर्योधनापाश्रयेण तदाश्रयबलेन जातो दर्पो यस्य तम् ।। ५ ।।

**स तैर्हयैर्वातजवैर्बृहद्भिः पुत्रो विराटस्य सुवर्णकक्षैः ।**
**व्यध्वंसयद्यद्रथिनामनीकं ततोऽवहत् पाण्डवमाजिमध्ये ।।६।।**

**बृहद्भिः** पुष्टैः **सुवर्णकक्षैः** स्वर्णमयाश्च पश्चाद्भागबन्धनविशेषोपेतैः । 'कक्षा स्यादन्तरीयस्य पश्चादञ्चलपल्लवे' इति मेदिनी । **व्यध्वंसयत्** व्यदारयत् । मार्गं चकारेति यावत् । **अवहत्** प्रापयामास ।। ६ ।।

**तं चित्रसेनो विशिखैर्विपाटैः सङ्ग्रामजिच्छत्रुसहो जयश्च ।**
**प्रत्युद्ययुर्भारतमापतन्तं महारथाः कर्णमभीप्समानम् ।।७।।**

**विपाटैः** स्थलदण्डैः **विशिखैः** बाणैः **कर्णं अभीप्समानं** योद्धुमिच्छन्तम् ।।७ ।।

---

१. पा.सू. (६/४/१३८)

**ततः स तेषां पुरुषप्रवीरः शरासनार्चिः शरवेगतापः ।**
**व्रातान् रथानामदहत् समन्युर्वनं यथाऽग्निः कुरुपुङ्गवानाम् ॥ ८ ॥**

**शरासनं** धनुरेवार्चींषि यस्य । **कुरुपुङ्गवानां रथानां व्रातान्** समूहान् । 'व्रातसङ्घातसञ्चयाः' इत्यमरः । अग्निरिति दार्ष्टान्तिकेऽप्यन्वेति ॥ ८ ॥

**तस्मिंस्तु युद्धे तुमुले प्रवृत्ते पार्थं विकर्णोऽतिरथं रथेन ।**
**विपाटवर्षेण कुरुप्रवीरो भीमेन भीमानुजमाससाद ॥ ९ ॥**

**विकर्णो** दुर्योधनानुजः । **भीमेन विपाटवर्षेण** ॥ ९ ॥

**ततो विकर्णस्य धनुर्विकृष्य जाम्बूनदाग्र्योपचितं दृढज्यम् ।**
**अपातयत् तं ध्वजमस्य मथ्य च्छिन्नध्वजः सोऽप्यपयाज्जवेन ॥१०॥**

**धनुः** गाण्डीवम् । **विकर्णस्य ध्वजम्** । **मथ्य** विमथ्य । चूर्णयित्वेति यावत् ॥ १० ॥

**तं शात्रवाणां गणबाधितारं कर्माणि कुर्वन्तममानुषाणि ।**
**शत्रुन्तपः पार्थममृष्यमाणः समार्दयच्छरवर्षेण पार्थम् ॥ ११ ॥**

शात्रवाणां यो गणस्तस्य बाधितारम् । **शत्रुन्तपः** तन्नामकः । **पार्थं** अर्जुनम् । पार्थं पातीति पः । 'आत' इति योगविभागात् कः । **तदर्थं** दुर्योधनार्थमिति यावत् । स्वपातार्थमिति वा । 'पातने पः समाख्यातः' 'पः स्यात् पाने च पातरि' इति अनेकार्थधात्वर्थमञ्जरी ॥ ११ ॥

**स तेन राज्ञाऽतिरथेन विद्धो विगाहमानो ध्वजिनीं कुरूणाम् ।**
**शत्रुन्तपं पञ्चभिराशु विद्ध्वा ततोऽस्य सूतं दशभिर्जघान॥१२॥**

**ततः स विद्धो भरतर्षभेण बाणेन गात्रावरणातिगेन ।**
**गतासुराजौ निपपात भूमौ नगो नगाग्रानिव वातरुग्णः ।। १३ ।।**

गात्रावरणं कवचं तदत्येतीति तेन बाणेन विद्धः सन् । **नगो** वृक्षः । **नगाग्रान्** पर्वताग्रान्। **वातरुग्णः** वायुना भङ्गं प्रापितः । रुजो भङ्गे, 'ओदितश्च'[1] इति निष्ठानत्वम् ।। १३ ।।

**नरर्षभास्तेन नरर्षभेण वीरा रणे वीरतरेण भग्नाः ।**
**चकम्पिरे वातवशेन काले प्रकम्पितानीव महावनानि ।। १४ ।।**

**हतास्तु पार्थेन नरप्रवीरा गतासवोर्व्यां सुषुपुः सुवेषाः ।**
**वसुप्रदा वासवतुल्यवीर्याः पराजिता वासवजेन [2]सङ्ख्ये ।।१५ ।।**

**गतासवोर्व्या**मित्यत्र सन्धिरार्षः । **वसुप्रदाः** वदान्याः ।। १५ ।।

**सुवर्णकार्ष्णायसवर्मनद्धा नागा यथा हैमवताः प्रवृद्धाः ।**
**तथा स शत्रून् समरे विनिघ्नन् गाण्डीवधन्वा पुरुषप्रवीरः ।।१६।।**

**हैमवताः** हिमवदुद्भवाः ।। १६ ।।

**चचार सङ्ख्ये विदिशो दिशश्च दहन्निवाग्निर्वनमातपान्ते ।**
**प्रकीर्णपर्णानि यथा वसन्ते विशातयित्वा पवनोऽम्बुदांश्च ।। १७ ।।**

**आतपान्ते** ग्रीष्मर्तौ । **वसन्ते** विकीर्णपर्णानि । **'वसन्ते** सर्वसस्यानां जायते पत्रशातनम्' इत्युक्तेः । **विशातयित्वा** शुष्कीकृत्य ।। १७ ।।

---

१. पा.सू. (८/२/४५)
२. 'सङ्घे' इति क्वचित् ।

**तथा सपत्नान् विकिरन् किरीटी चचार [१]सङ्ख्येऽतिरथो रथेन ।**
**शोणाश्ववाहस्य हयान् निहत्य वैकर्तनभ्रातुरदीनसत्त्वः ।**
**एकेन सङ्ग्रामजितः शरेण शिरो जहाराथ किरीटमाली ॥१८॥**

खे आकाशे नुदन् वहन् यथा चरतीति पूरणीयम् । **शोणाश्वा** एव वाहा वाहका यस्य तस्य । **सङ्ग्रामजितः** तन्नामकस्य वैकर्तनभ्रातुः ॥ १८ ॥

**तस्मिन् हते भ्रातरि सूतपुत्रो वैकर्तनो वीर्यमथाददानः ।**
**प्रगृह्य दन्ताविव नागराजो महर्षभं व्याघ्र इवाभ्यधावत् ॥१९॥**

**आददानः** आविष्कुर्वन् । **व्याघ्र इव** च ॥ १९ ॥

**स पाण्डवं द्वादशभिः पृषत्कैर्वैकर्तनः शीघ्रमथो जघान ।**
**विव्याध गात्रेषु हयाश्च सर्वान् विराटपुत्रं च करे निजघ्ने ॥२०॥**

**पृषत्कैः** बाणैः **निजघ्ने** निजघान ॥ २० ॥

**तमापतन्तं सहसा किरीटी वैकर्तनं वै तरसाऽभिपत्य ।**
**प्रगृह्य वेगं न्यपतज्जवेन नागं गरुत्मानिव चित्रपक्षः ॥२१॥**

**अभिपत्य** प्राप्य **वेगं प्रगृह्य** । **जवेन गरुत्मानिव न्यपतत्** ॥ २१ ॥

**तावुत्तमौ सर्वधनुर्धराणां महाबलौ सर्वसपत्नसाहौ ।**
**कर्णस्य पार्थस्य निशम्य युद्धं दिदृक्षमाणाः कुरवोऽभितस्थुः २**

सर्वसपत्नान् सहेत इति **सर्वसपत्नसाहौ** कर्मण्यण् । तत्र तत्र स्थिताः । **निशम्य युद्धं दिदृक्षमाणाः** दिदृक्षन्तः सन्तः ॥ २२ ॥

---

१. 'सङ्ख्येऽतिरथो ।' इति क्वचित् ।

**स पाण्डवस्तूर्णमुदीर्णकोपः कृतागसं कर्णमुदीक्ष्य हर्षात् ।**
**क्षणेन साश्वं सरथं ससारथिमन्तर्दधे घोरशरौघवृष्ट्या ॥ २३ ॥**

**सः पाण्डवः कर्णं** ससारं यथा निरन्नः थि बह्वन्नं हर्षात् सरति तथेति । 'अन्नं थम्' इति श्रुतिः । 'अतिथिं बह्वन्नम्' इति तत्त्वप्रकाशिकोक्तेः इकारोऽतिशये[1] । कृतागसं दुष्टचतुष्टयनिविष्टत्वात् । **अन्तर्दधे** । अन्तर्धापयामास ॥ २३ ॥

**ततः सुविद्धाः सरथाः सनागा योधा विनेदुर्भरतर्षभाणाम् ।**
**अन्तर्हिता भीष्ममुखाः सहाश्वाः किरीटिना कीर्णरथाः पृषत्कैः॥२४॥**

**कीर्णरथाः** चूर्णीकृतरथाः ॥ २४ ॥

**स चापि तानर्जुनबाहुमुक्तान् शरान् शरौघैः प्रतिहत्य कर्णः ।**
**तस्थौ महात्मा सधनुः सबाणः स विष्फुलिङ्गोऽग्निरिवाशुकर्णः॥२५॥**

**स** कर्ण इत्यन्वयः । **प्रतिहत्य कर्णः तस्थौ । आशु** शत्रून् कर्णयति । भिनत्तीति **आशुकर्णः**। 'कर्ण विभेदने' इति धात्वन्तरमित्यन्यत्र इत्युक्तेः । अतो न पौनरुक्त्यम् ॥ २५ ॥

**ततस्त्वभूद् वै तलतालशब्दः सशङ्खभेरीपणवप्रणादः ।**
**प्रक्ष्वेडितज्यातलनिस्वनं तं वैकर्तनं पूजयतां कुरूणाम् ॥ २६ ॥**

**तलतालशब्दः** तलास्फालनजन्यः शब्दः । 'तालः करास्फालने स्यात्' इति मेदिनी । प्रक्ष्वेलनज्यातलयोः निस्वनो येन **तं वैकर्तनम्** ॥ २६ ॥

**उद्धूतलाङ्गूलमहापताकध्वजोत्तमांसाकुलभीषणान्तम् ।**
**गाण्डीवनिर्ह्रादकृतप्रणादं किरीटिनं प्रेक्ष्य ननाद कर्णः ॥ २७ ॥**

---

१. 'तृतीयोऽतिशये' इति हि महाव्याकरणसूत्रम् ।

उद्धूता लाङ्गूलमहापताका यस्मिन् । अत्र लाङ्गूलशब्देन ध्वजे लम्बमानौ लाङ्गूलाकारौ चलखण्डविशेषौ ग्राह्यौ । आकुलेन व्यग्रत्वेन सहिताः साकुलाः । तेषां भीषणम् । ध्वजोत्तमम् । तं **किरीटिनं** च ।। २७ ।।

**स चापि वैकर्तनमर्दयित्वा साश्वं ससूतं सरथं पृषत्कैः ।**
**तमाववर्ष प्रसभं किरीटी पितामहं द्रोणकृपौ च दृष्ट्वा ।।२८।।**

**स चापि पार्थं बहुभिः पृषत्कैर्वैकर्तनो मेघ इवाभ्यवर्षत् ।**
**तथैव कर्णं च किरीटमाली सञ्छादयामास शितैः पृषत्कैः ।।२९।।**

किरीटेन मालते शोभते तद्धत्त इति वा तथा ।। २८ ।।

**तयोः सुतीक्ष्णान् सृजतोः शरौघान् महाशरौघास्त्रविवर्धने रणे ।**
**रथे विलग्नाविव चन्द्रसूर्यौ घनान्तरेणानुददर्श लोकः ।। ३० ।।**

महाशरौघास्त्राणां विवर्धनमभिवर्धनच्छेदनं वा यस्मिन् मेघस्थानीयाः शरौघाः । गगनस्थानीयो रथः चन्दसूर्यस्थानीयौ कर्णार्जुनौ इति ज्ञेयम् ।। ३० ।।

**अथाशुकारी चतुरो हयांश्च विव्याध कर्णो निशितैः किरीटिनः ।**
**त्रिभिश्च यन्तारममृष्यमाणो विव्याध तूर्णं त्रिभिरस्य केतुम् ।।३१।।**

**ततोऽभिविद्धः समरावमर्दी प्रबोधितः सिंह इव प्रसुप्तः ।**
**गाण्डीवधन्वा ऋषभः कुरूणामजिह्मगैः कर्णमियाय जिष्णुः ।।३२।।**

अर्जुनस्य समरे अवमर्दितुं प्रबाधितुं शीलमस्यास्तीति तथा । **इयाय** 'इट किट कटी गतौ' इत्यत्र प्रश्लिष्टस्यायतेरेतैर्वा लिटि रूपम् ।। ३१-३२ ।।

**शरास्त्रवृष्ट्या निहतो महात्मा प्रादुश्चकारातिमनुष्यकर्म ।**
**प्रच्छादयत्कर्णरथं पृषत्कैः लोकानिमान् सूर्य इवांशुजालैः।।३३।।**

**स हस्तिनेवाभिहतो गजेन्द्रः प्रगृह्य भल्लान् निशितान्निषङ्गात् ।**
**आकर्णपूर्णं च धनुर्विकृष्य विव्याध गात्रेष्वथ सूतपुत्रम् ।।३४।।**

**निषङ्गात्** तूणीरात् । सनामत्वाच्चित्राङ्गदरीत्या बाणमुखेन कर्णं विद्रावयेति कर्णपर्यन्तं ज्यासमासज्जनेन आमन्त्रयामासेति ध्वनिः ।। ३४ ।।

**अथास्य बाहूरुशिरोललाटं ग्रीवां वराङ्गानि परावमर्दी ।**
**शितैश्च बाणैर्युधि निर्बिभेद गाण्डीवमुक्तैरशनिप्रकाशैः ।।३५।।**

**वराङ्गानि** श्रेष्ठानवयवान् । अतो न शिरोऽतिरेकः । अङ्ग इत्युक्तेर्न णत्वमिति केचित् । वस्तुतस्तु 'कुमति च'[1] इति णत्वं प्रकृते प्राप्नोति तदपि युवादित्वात् परिहरणीयम् । अङ्ग इत्यस्य भाष्ये प्रत्याख्याततत्वात् ।। ३५ ।।

**स पार्थमुक्तैरिषुभिः प्रणुन्नो गजो गजेनेव जितस्तरस्वी ।**
**विहाय सङ्ग्रामशिरः प्रयातो वैकर्तनः पाण्डवबाणतप्तः ।। ३६ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि चतुःपञ्चाशत्तमोऽध्यायः ।।**

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां चतुःपञ्चाशत्तमोऽध्यायः ।।**

*****

# ५५. पञ्चपञ्चाशत्तमोऽध्यायः

**( अर्जुनकर्तृकघोरसङ्ग्रामः, अर्जुनकृपाचार्ययोः समागमः । )**

**वैशम्पायन उवाच -**

**अपयाते तु राधेये दुर्योधनपुरोगमाः ।**
**अनीकेन यथा स्वेन शरैराच्छन्त पाण्डवम् ।। १ ।।**

---

१. पा.सू. (८/४/१३)

**राधेये** राधापुत्रे । **यथा** सम्यक् । शरवरैः तान् मुञ्चतः । **आर्च्छन्त** प्राप्ताः ॥१॥

**बहुधा तस्य सैन्यस्य व्यूढस्यापततः शरैः ।**
**अधारयत वेगं स वेलेव तु महोदधेः ॥ २ ॥**

**बहुधा वेगं** जवम् । अपरत्र प्रवाहम् । **सोऽ**र्जुनः । 'वेगो जवे प्रवाहे च' इति विश्वः ॥ २ ॥

**ततः प्रहस्य बीभत्सुः कौन्तेयः श्वेतवाहनः ।**
**दिव्यमस्त्रं प्रकुर्वाणः प्रत्यायात् रथसत्तमः ॥ ३ ॥**

**दिव्यं** दिवि भवम् । तत्रेन्द्रादिसम्पादितम् । प्रकरणं चात्रामोचनम् । आभिमुख्येनाययौ ॥ ३ ॥

**यथा रश्मिभिरादित्यः प्रच्छादयति मेदिनीम् ।**
**तथा गाण्डीवनिर्मुक्तैः शरैः पार्थो दिशो दश ॥ ४ ॥**

**दश दिशः** च्छादयामास ॥ ४ ॥

**न रथानां न चाश्वानां न गजानां न वर्मणाम् ।**
**अनिविद्धं शितैर्बाणैरासीद्व्यङ्गुलमन्तरम् ॥ ५ ॥**

रथादीनां मध्ये किञ्चिद् **द्व्यङ्गुलम्** । तत्पुरुषस्य त्यच् समासान्तः । **अन्तरं** अंशः । **अनिविद्धं** नितरामविद्धम् अताडितम् नासीत् । सर्वोऽप्यवयवस्ताडित इति भावः ॥ ५ ॥

**दिव्ययोगाच्च पार्थस्य हयानामुत्तरस्य च ।**
**शिक्षाशिल्पोपपन्नत्वादस्त्राणां च [1]परिक्रमात् ।**
**वीर्यवत्त्वं द्रुतं चाग्र्यं दृष्ट्वा जिष्णोरपूजयन् ॥ ६ ॥**

---

१. परिक्रमात् । इति गी पाठः ।

दिव्यो योगो पूर्वार्थसम्पत्तिः । तस्मात् । 'योगो पूर्वार्थसम्प्राप्तौ' इति विश्वः । **हयानां** तथा **उत्तरस्य** । **शिक्षाशिल्पोपपन्नत्वात्** हयानां शिक्षोपपन्नत्वम् । उत्तरस्य च लघुकरतारूपशिल्पोपपन्नत्वं चेति क्रमात् तस्मात् । **अस्त्राणां** तद्विषये परिक्लमः कायग्लानिः तस्मात् । **अस्त्राणां** सकाशात् । परिक्लमं प्राप्यापीति वा । **अस्त्राणां** तद्विमोचनविषये । **परिक्लमाच्छ्रमवर्जनादिति** वा । 'पञ्चम्यपाङ्परिभिः'[1] इति पञ्चमी । 'अपपरि....'[2] इति समासः । **वीर्यवत्त्वम्** । **अग्र्य**मिति विशेषणे वीर्येऽन्वेति । अग्र्यवीर्यवत्त्वं **द्रुतं** द्रुतिं च । अभीतेः **जिष्णोर्दृष्ट्वाऽपूजयन्** । शत्रवेऽपीति शेषः ।। ६ ।।

**कालाग्निमिव बीभत्सुं निर्दहन्तमिव प्रजाः ।**
**नारयः प्रेक्षितुं शेकुर्ज्वलन्तमिव पावकम् ।। ७ ।।**

**कालाग्निमिव निर्दहन्तं पावकमिव** च **ज्वलन्तं बीभत्सुं प्रजाः** साधारणजना इवातिदुराग्रहगृहीता बलिनो अरयोऽपि **प्रेक्षितुं न शेकुरिति** योजना ।। ७ ।।

**तानि ग्रस्तान्यनीकानि रेजुरर्जुनमार्गणैः ।**
**शैलं प्रति बलाभ्राणि व्याप्तानीवार्करश्मिभिः ।। ८ ।।**

**शैलं** पर्वतं **प्रति बलाभ्राणि** इतस्ततः चलन्त्यभ्राणि गत्वा **अर्करश्मिभिर्व्याप्तानि** सन्ति यथा राजन्ति तथेत्यर्थः । 'बल ह्वल सञ्चलने' इति धातोः ।। ८ ।।

**अशोकानां वनानीव च्छन्नानि बहुशः शुभैः ।**
**रेजुः पार्थशरैस्तत्र तदा सैन्यानि भारत ।। ९ ।।**

**शुभैः** मनोहरैः पुष्पादिभिरिव ।। ९ ।।

---

१. पा.सू. (२/३/१०)

२. अपपरिबहिरञ्चवः पञ्चम्या । - पा.सू. (२/१/१२)

**स्रजोऽर्जुनशरैः शीर्णं शुष्यत्पुष्पं हिरण्मयम् ।**
**च्छत्राणि च पताकाश्च खे दधार सदागतिः ॥ १० ॥**

**स्रजः** सम्बन्धि । **शुष्यत्पुष्पं हिरण्मयम्** इति कृत्वाऽर्जुनशरैः **शीर्णं** च्छन्नं तथा **च्छत्राणि पताकाश्च खे दधार** मध्ये बाणव्याप्त्या न पातः ॥ १० ॥

[१]**स्ववलत्रासनात् त्रस्ताः परिपेतुर्दिशो दश ।**
**रथाङ्गदेशानादाय पार्थच्छिन्नयुगा हयाः ॥ ११ ॥**

**स्ववलः** स्वपरिवर्तकः सारथिः तत्त्रासनात् पातादिरूपात् **त्रस्ताः** । **हयाः रथाङ्गदेशान्** वक्त्राद्येकदेशान् स्वावयवलग्नानादाय **परिपेतुः** । कण्ठे युगे न बन्धात् कथमेतदित्यतो वक्ति– **पार्थेति** ॥ ११ ॥

**कर्णकक्षविषाणेषु अन्तरोष्ठेषु चैव ह ।**
**मर्मस्वङ्गेषु चाहत्यापातयन् समरे गजान् ॥ १२ ॥**

[२]काले विपरीते स्वीय एव स्वशत्रुरित्याह– **कर्णेति** ॥ कक्षः बाहुमूलं 'बाहुमूले उभौ कक्षौ' इत्यमरः । कर्णकक्षविषाणं च तच्च तानि तेषु । **अन्तरोष्ठेषु** ओष्ठान्तप्रदेशेषु । अन्येष्वपि **मर्मस्वङ्गेषु आहत्य** भयेन सम्यक् ताडयित्वा **पातयन्** अपातयन् ॥ १२ ॥

**कौरवाग्रगजानां तु शरीरैर्गतचेतसाम् ।**
**क्षणेन संवृता भूमिर्मेघैरिव नभस्तलम् ॥ १३ ॥**

---

१. स्वबलत्रासनात् । इति गी. पाठः ।

२. स धेनुकस्तं निजपार्ष्णिपद्भ्यां प्रताडयन् गाढमसह्यसत्त्वः ।
प्रगृह्य तावुत्क्षिपतो बलस्य खलः सहायोऽभवदस्तमायः ॥.....
अग्रे निधाय स्वविषाणयुग्ममुग्रोऽच्युतं प्रत्यगमत् सहायम् ।
दोष्णा तदुत्पाटयतो मुरारेः कुर्वन् शिरोभारजिहीर्षयेव ॥
- इति रुग्मिणीशविजये । (५/२४, १०/७)

**गतचेतसां** गतचेतनानाम् ।। १३ ।।

**युगान्तसमये सर्वं यथा स्थावरजङ्गमम् ।**
**कालक्षयमशेषेण दहत्यग्रशिखः शिखी ।। १४ ।।**

**तद्वत् पार्थो महाराज ददाह समरे रिपून् ।**
**ततः सर्वास्त्रतेजोभिर्धनुषो निस्वनेन च ।। १५ ।।**

कालेन क्षयोपचयो यस्य तम् । 'क्षयो रोगान्तरे वेश्म कल्पान्तापचयेष्वपि' इति विश्वः । **अग्रशिखः** ऊर्ध्वशिखः । बहुव्रीहिः । **शिखी** वह्निः । **रिपून् ददाह सर्वास्त्रतेजोभिः** इति वक्ष्यमाणमत्रापि सम्बद्ध्यते ।। १४-१५ ।।

**शब्देनामानुषाणां च भूतानां ध्वजवासिनाम् ।**
**भैरवं शब्दमत्यर्थं वानरस्य च कुर्वतः ।। १६ ।।**

**वानरस्य** सकाशात् ।। १६ ।।

**दैवारिपाच्च बीभत्सुस्तस्मिन् दौर्योधने वने ।**
**भयमुत्पादयामास बलवानरिमर्दनः ।। १७ ।।**

देवारीन् दैत्यान् स्वकुक्षौ निक्षिप्य रक्षतीति देवारिपः समुद्रस्तस्मिन् भवो दैवारिपो वारिजस्तस्मात् ।। १७ ।।

**रथशक्तिममित्राणां प्रागेव निरसन् भुवि ।**
**सोऽपयात् सहसा पश्चात् सहसाच्चाभ्युपेयिवान् ।।१८।।**

**अमित्राणां रथशक्तिं** रथावयवविशेषं **प्रागेव** बाणचर्षणकाल एव **भुवि निरसन्** निरस्यन् । गत्याद्यर्थस्यासतेर्वा रूपम् । **पश्चादपायाद्** योद्धभावादिति भावः । यदि कश्चित् दृश्येत तं प्रति **सहसा** जवात् **चाभ्युपेयिवान्** ।। १८ ।।

**शरव्रातैः सुतीक्ष्णाग्रैः समादिष्टैः खगैरिव ।**
**अर्जुनस्तु खमावव्रे लोहितप्राशनैः खगैः ॥ १९ ॥**

**समादिष्टैः** ज्यायुक्तैः **आवव्रे** । पक्षिभिरिव **लोहितप्राशनैः** रक्तपैः । **खगैः** आकाशसञ्चारिभिः ॥ १८ ॥

**अत्रमध्ये यथाऽर्कस्य रश्मयस्तिग्मचेतसः ।**
**दिशासु च तथा राजन्नसङ्ख्याताः शरास्तदा ॥ २० ॥**

**अत्रमध्ये** अमत्रमध्ये । 'पात्रामत्रे च भाजनम्' इत्यमरः । मध्यममलोप आर्षः । यदाह शौनको बृहद्देवतायां 'वर्णस्य वर्णयोर्लोपो बहूनां व्यञ्जनस्य च । अत्राणीति कपिर्नाभा दनोयामीत्यघासु च ॥'[१] इति । अष्टमाष्टकतृतीयाध्यायचतुर्दशवर्गीयायां तथा प्रथमाष्टकद्वितीयाध्यायपञ्चदशवर्गीयायां ऋचि एकवर्णलोपस्योदाहरणे । तथाहि अत्राप्यस्मै षड्भिः संरम्भति । अमत्राणीति भाव्ये मलोपः । तथा 'तत्त्वायामि ब्रह्मणा वन्दमानः' इत्यत्र याचामीति वक्तव्ये चालोपेन यामीत्युक्तिरिति[२] । वर्णद्वयलोपोदाहरणं च अष्टमाष्टकचतुर्थाध्यायप्रथमवर्गीयायां ऋचि । प्रियातष्टानिमे कपिरित्यस्यां वृषाकपिरिति वचनीये कपिरित्यालपनम् । पुनस्तत्रैव द्वितीयाध्यायप्रथमवर्गीयायामृचि 'अयं नाभा वदति वल्गु वः'[३] इत्यस्यां नेदिष्टेति त्रयाणां वर्णानां लोप इति बहुविप्लवः । तथा द्वितीयाष्टकचतुर्थाध्यायषोडशवर्गीयायां 'दनो विश इन्द्र'[४] इत्यस्यां च दानमनस इति वक्तव्ये दन इति वचनेनापरेषां लोपः । यास्कोऽपि ।

१. बृहद्देवतावचनम् (२/११६)

२. इतः परम् - (श्रीमदस्मद्गुभाष्ये तु एवं गुणो...(यत्व)मतो व्रजामि सदा शरण्यं शरणं वेदवाचेति व्याख्यानं तु केवलभगवत्प्रीतिमात्राशासकस्य भाष्यकृत ।–अन्यावर्षकयाचनादिकमसम्भावितमिति तथा प्रवृत्तमिति ज्ञेयम् ।) - इति अधिकं पठ्यते क्वचित् ।

३. ऋग्वेदे । (१०/६२/४)

४. ऋग्वेदे । (१/१७४/२)

दनो दानमनस इति निरूचे । पुनरष्टमाष्टकतृतीयाध्यायद्वाविंशतिवर्गीयायां । 'अघासु हन्यन्ते गावः'[१] इत्यस्यामू इति व्यञ्जनत्यजनेनोक्तिरिति । ततश्चायं श्लोकार्थः । यथा मध्ये मन्त्रम् । कलिने जले । तत्र तिग्मतेजसोऽर्कस्य रश्मयः किरणाः प्रसरणधरिण्या लाभादतिसङ्कुचिततयाश्नन्ति । अथवा मत्रे सम्यग्धूततया प्रतिफलनयोग्ये किरणप्रकिरणे ते स्थलेऽल्पीयसी न मिमते । तथा अर्जुनशरा असङ्ख्याता इति दिशासु यावद्रणधरिणि । तदुपरि सतीषु न ममुः । प्राचीनरीत्या हलन्ततया टापि दिशेति । अजाद्यत इति सूत्रभाष्यादिदिशा दिश अतिसर्जन इति दिशेरिगुपधज्ञाप्रीकिरः क इति कप्रत्ययेऽदन्तत्वाटटापि दिशेति भवतीति विवेकः । वस्तुतस्तु अत्र मध्य इत्यस्यैवमर्थः । अत्र जलं । तथाहि याज्ञिकाः अत्र स्वधेति वदन्ति । तत्सम्प्रदायज्ञाश्च विवृण्वते । पिण्डोपरि वारि क्षेप्यमिति । एतत्पक्षे जलस्य धूतस्येति न पूरणीयमिति लाघवम् । क्वचिदन्नमध्य इति पाठः । सोऽपि सुन्दरः । वेदनिघण्टौ एकशतजलानामसुगभीरं गम्भीरम् । ई अन्नं हवि सद्मेति पाठात् । अन्नमध्ये जलमध्य इति तदर्थः । अथवा प्रतिफलनोपयुक्तमिति तिग्मं तेजो जलं तस्य मध्य इत्यर्थः । तत्रैव शुक्रं तेजः । स्वधेति पाठात् अत्रैतासु दिशास्वित्यत्रेत्यस्यान्वयः । तात्पर्यं तु ग्रन्थग्रथकस्यार्जुनचातुर्यं ज्ञेयम् ।। २० ।।

**सकृदेवानतं शेकू रथमभ्यसितुं परे ।**
**अलभ्यः पुनरश्वैस्तु रथात्[२] सोऽपि प्रपादयेत् ।। २१ ।।**

**परे** वैरिणः । **रथं सकृद्** एकवारम् । द्रष्टुं **शेकुः** । विना तद्दर्शनं मारणसम्भवात् । **अभ्यसितुं** परिचेतुम् । न शेकुः । तत्क्षणे मृतेरिति भावः । **अश्वैः** द्रुतं गच्छद्भिः । तत्त्वरया **लभ्यः** । **स** चार्जुनः । रथात् रथिकान् **प्रपादयेत्** ।। २१ ।।

१. ऋग्वेदे । (१०/८५/१३)

२. सोऽतिप्रपादयेत् (इति गी. पाठः) ।

**ते शरा द्विट्शरीरेषु यथैव न ससज्जिरे ।**
**द्विडनीकेषु बीभत्सोर्न ससज्जे रथस्तथा ॥ २२ ॥**

**ते** पार्थमुक्ताः **शराः यथैव न ससज्जिरे** सक्ता नाभवन् । पारङ्गता इति यावत् । **तथा रथो**ऽपि **न ससज्जे** ॥ २२ ॥

**स तद्विक्षोभयामास ह्यरातिबलमञ्जसा ।**
**अनन्तभोगो भुजगः क्रीडन्निव महार्णवम् ॥ २३ ॥**

**अनन्तभोगो** बहुफणः भुजङ्गः शेषः । यथा **महार्णवं** क्षोभयति लयकाले । तद्वत् । 'भोगे सुखेऽस्त्र्यादिभृतावहेश्च फणकाययोः' इत्यमरः ॥ २३ ॥

**अस्यतो नित्यमत्यर्थं सर्वमेवातिगस्तथा ।**
**अश्रुतः श्रूयते भूतैर्धनुर्घोषः किरीटिनः ॥ २४ ॥**

**अस्यतः** बाणान् क्षिपतः **किरीटिनः धनुर्घोषः सर्वं** सरवं सशब्दं पदार्थजातम् । **अतिगः** अतिक्रान्तः सन् **भूतैः** प्राणिभिः ॥ २७ ॥

**सन्ततास्तत्र मातङ्गा बाणैरल्पान्तरान्तरैः ।**
**संवृतास्तेन दृश्यन्ते मेघा इव गभस्तिभिः ॥ २५ ॥**

**दिशोऽनुभ्रमतः सर्वाः सव्यदक्षिणमस्यतः ।**
**सततं दृश्यते युद्धे सायकासनमण्डलम् ॥ २६ ॥**

**पतन्त्यरूपेषु यथा चक्षूंषि न कदाचन ।**
**नालक्ष्येषु शराः पेतुस्तथा गाण्डीवधन्वनः ॥ २७ ॥**

**मार्गो गजसहस्रस्य युगपद्गच्छतो वने ।**
**यथा भवेत् तथा जज्ञे रथमार्गः किरीटिनः ॥ २८ ॥**

कदा **युगपद्गच्छतः** पौर्वापर्यं विहाय पङ्क्तिशो गच्छत इत्यर्थः ॥ २८ ॥

**नूनं पार्थजयैषित्वाच्छक्रः सर्वामरैः सह ।**
**हन्त्यस्मानित्यमन्यन्त पार्थेन निहताः परे ॥ २९ ॥**

**पार्थजयैषित्वात्** तज्जयापेक्षित्वात् । एतद्व्याजेन **अस्मान् हन्ति** ।

**घ्नन्तमत्यर्थमहितान् विजयं तत्र मेनिरे ।**
**कालमर्जुनरूपेण संहरन्तमिव प्रजाः ॥ ३० ॥**

**विजयं** परिभवमुद्दिश्य हि तान् **घ्नन्तम्** अर्जुनं न **मेनिरे** । किन्तु काल एवार्जुनरूपेण **प्रजाः** संहरतीति कालमेव **मेनिरे** । इवशब्द एवार्थे ॥ ३० ॥

**कुरुसेनाशरीराणि पार्थेनैवाहतान्यपि ।**
**सेदुः पार्थहतानीव पार्थकर्मानुशासनात् ॥ ३१ ॥**

**पार्थेन** अर्जुनेन **अहतान्यपि** अताडितान्यपि **पार्थहतानीव** सेदुः शीर्णान्यभवन् । कुतः **पार्थकर्मानुशासनात्** तत्पराक्रमश्रवणादेवेति भावः ॥ ३१ ॥

**ओषधीनां शिरांसीव द्विषच्छीर्षाणि सोऽन्वयात् ।**
**अवनेशुः कुरूणां हि वीर्याण्यर्जुनजाद्भयात् ॥ ३२ ॥**

**ओषधीनां शिरांसि** कृषीवल इव **द्विषच्छीर्षाणि सो**ऽर्जुनः **अन्वयात्** गमयामास ॥ ३२ ॥

**अर्जुनानिलभिन्नानि वनान्यर्जुनविद्विषाम् ।**
**चक्रुर्लोहितधाराभिर्धरणीं लोहितान्तराम् ॥ ३३ ॥**

**अर्जुनविद्विषां** कौरवाणां **वनानि** वृक्षसमूहाः शरीराणीति यावत् । 'एकायनोऽसौ द्विफलस्त्रिमूलश्चतूरसः ......... दशच्छदी द्विखगो ह्यादिवृक्षः ॥'[1] इत्यादौ

१. एकायनोऽसौ द्विफलस्त्रिमूलश्चतूरसः पञ्चशिफः षडात्मा ।
सप्तत्वगष्टविटपो नवाक्षो दशच्छदी द्विखगो ह्यादिवृक्षः ॥ - इति श्रीमद्भागवते (१०/२/२८)

शरीरस्य वृक्षत्वेनोत्प्रेक्षणात् तत्समूहस्य वनत्वम् । अर्जुन एवानिलो वायुः तच्छिन्नं निच्छिन्नानीति यावत् । लोहितधाराभिः रक्तधाराभिः लोहितान्तरां रक्त-मध्याम् ।। ३३ ।।

**लोहितेन समायुक्तैः पांसुभिः पवनोद्धृतैः ।**
**बभूवुर्लोहितास्तत्र भृशमादित्यरश्मयः ।। ३४ ।।**

**पवनोद्धृतैः** वायूत्क्षिप्तैः ।। ३४ ।।

**सार्कं खं तत्क्षणेनासीत् सन्ध्यायामिव लोहितम् ।**
**अप्यस्तं प्राप्य सूर्योऽपि निवर्तेत न पाण्डवः ।। ३५ ।।**

**सार्कं** ससूर्यं **खम्** आकाशं **सन्ध्यायामिव** तत्काल इव **लोहितं** रक्तम**आसीत्** ।। एतदवस्थं सूर्यं दृष्ट्वा तच्छरपीडिता योधा एवमाहुरित्याह— **अपीति** ।। एतद्व्याजेन **अस्तमपि प्राप्य सूर्योऽपि निवर्तेत पाण्डवः** तु **न निवर्तेत** । तस्मात् कष्टमिति ।। ३५ ।।

**तान् सर्वान् समरे शूरः पौरुषे समवस्थितान् ।**
**दिव्यैरस्त्रैरचिन्त्यात्मा सर्वानाच्छेद् धनुर्धरान् ।। ३६ ।।**

**सर्वान्** हिंसकान् । 'अर्व षर्व हिंसायाम्' इति धातोः रूपम् । **आच्छेत्** प्राप युयुधे इति यावत् ।। ३६ ।।

**स तु द्रोणं त्रिसप्तत्या क्षुरप्राणां समार्पयत् ।**
**दुःसहं दशभिर्बाणैर्द्रौणिमष्टाभिरेव च ।। ३७ ।।**

**इतः परं श्रूयमाणं 'स तु द्रोणं त्रिसप्तत्या क्षुरप्राणां समार्पयत्' इत्यर्धं प्रक्षिप्तम्** । 'यदि मे प्रथमं द्रोणः शरीरे प्रहरिष्यति, ततोऽस्य प्रहरिष्यामि' इत्युत्तरग्रन्थस्वार-स्यात् । यदि च शरीरताडनांश एव प्रथमतस्ताडनोत्प्रेक्षा तत्र वर्ण्यते, तर्हि तदविरोधेनात्रापि क्षुरप्राणां त्रिसप्तत्या त्रिसप्ततिसङ्ख्याकान् क्षुरप्रान् द्रोणं

तत्समीपे इतस्ततः प्रचिक्षेपेत्यर्थे बोध्यः । अत एव दुःसहादीन् विव्याधेति वक्ष्यति । अत्र समार्पयदिति मृदूक्तिः । अष्टाभिः 'अष्टन आ विभक्तौ'[१] इति आत्त्वम् ॥३७॥

**दुःशासनं द्वादशभिः कृपं शारद्वतं त्रिभिः ।**
**भीष्मं शान्तनवं षष्ट्या राजानं च शतेन ह ।**
**कर्णं च कर्णिना कर्णे विव्याध परवीरहा ॥ ३८ ॥**

**कर्णिना** बाणविशेषेण ॥ ३८ ॥

**तस्मिन् विद्धे महेष्वासे कर्णे सर्वास्त्रकोविदे ।**
**हताश्वसूते विरथे ततोऽनीकमभज्यत ॥ ३९ ॥**
**तत् प्रभग्नं बलं दृष्ट्वा पार्थमाजिस्थितं पुनः ।**
**अभिप्रायं समाज्ञाय वैराटिरिदमब्रवीत् ॥ ४० ॥**

**अभिप्रायं** पार्थस्य ॥ ४० ॥

**आस्थाय रुचिरं जिष्णो रथं सारथिना मया ।**
**कतमं यास्यसेऽनीकमुक्तो यास्याम्यहं त्वया ॥ ४१ ॥**

**यास्यसे** यास्यसि ॥ ४१ ॥

**अर्जुन उवाच -**

**लोहिताश्वमरिष्टं यं वैयाघ्रमनुपश्यसि ।**
**नीलां पताकमाश्रित्य रथे तिष्ठन्तमुत्तर ॥ ४२ ॥**

**लोहिताश्वं** बहुव्रीहिः । **अरिष्टं वैयाघ्रं** व्याघ्रचर्मचिह्नितं **नीलां पताकामाश्रित्य** एतां स्थापयित्वेत्यर्थः । **रथे तिष्ठन्तम्** यमनुपश्यसि ॥ ४२ ॥

---

१. पा.सू. (७/२/८४)

**कृपस्यैतदनीकाग्र्यं प्रापयस्वैतदेव माम् ।**
**एतस्य दर्शयिष्यामि शीघ्रास्त्रं दृढधन्विनः ॥ ४३ ॥**

तस्य **कृपस्य** । **दृढधन्विनः** । **एतस्य** कृपस्य **शीघ्रास्त्रं** अस्त्रलाघवमित्यर्थः ॥४३॥

**ध्वजे कमण्डलुर्यस्य शातकौम्भमयः शुभः ।**
**आचार्य एष हि द्रोणः सर्वशस्त्रभृतां वरः ॥ ४४ ॥**

**शातकौम्भमयः** शतकुम्भगिरौ भवं शातकौम्भम् अनुशतिकादित्वादुभयपद-वृद्धिः । विकारे [१]मयट्प्रत्ययः ॥ ४४ ॥

**सदा ममैष मान्यस्तु सर्वशस्त्रभृतामपि ।**
**सुप्रसन्नं महावीरं कुरुष्वैनं प्रदक्षिणम् ॥ ४५ ॥**

**एनं प्रदक्षिणं** कुरु ॥ ४५ ॥

**अत्रैव वाऽवरोहैनमेष धर्मः सनातनः ।**
**यदि मे प्रथमं द्रोणः शरीरे प्रहरिष्यति ।**
**ततोऽस्य प्रहरिष्यामि नास्य कोपो भवेदिति ॥ ४६ ॥**

**अत्रैव वा** कृपापेक्षया प्रथमं द्रोणसमीप एव **अवरोह** अवतारय । प्रथमतो गुरुसमीपं गत्वा तदनुग्रहपरिग्रहे । **कोपो न भवेत्** स्वप्रहारानन्तरं प्रहारे ॥४६॥

**अस्याविदूरे हि धनुर्ध्वजाग्रे यस्य दृश्यते ।**
**आचार्यस्यैष पुत्रो वै अश्वत्थामा महारथः ॥ ४७ ॥**

**अविदूरे** समीपे ॥ ४७ ॥

---

१. तादात्म्यार्थे विकारार्थे प्राचुर्यार्थे मयट् त्रिधा । - इति गीताभाष्ये (७/१३)
मयं प्रधानमुदिष्टं स्वरूपं कार्यमेव च । - इति शब्दनिर्णये ।- इति गीतातात्पर्ये (१७/७)

**सदा ममैष मान्यस्तु सर्वशस्त्रभृतामपि ।**
**एतस्य त्वं रथं प्राप्य निवर्तेथाः पुनःपुनः ॥ ४८ ॥**

**मान्यो** गुरुपुत्रत्वात् । 'गुरुवद्गुरुपुत्रे वर्तितव्यम्' इत्यादेः । **पुनःपुनः निवर्तेथाः** तत्परिभावानाग्रहे मम नास्तीति यत्र क्वचन दर्शनं तं परित्यज्यान्यं याहीत्यभिप्रायः ॥ ४८ ॥

**य एष तु रथानीके सुवर्णकवचावृतः ।**
**सेनाग्र्येण तृतीयेन व्यावहार्येण तिष्ठति ॥ ४९ ॥**

**तृतीयेन सेनाग्र्येण** गोरक्षणार्थं गतचतुर्थांशेन मृतावशिष्टेन सह स्वसहनीत चतुर्थांशस्य सर्वसैन्यतृतीयांशत्वादेवमुक्तिः । **व्यावहार्येण** व्यवहर्तुं योग्येण। स्तुत्येनेति यावत् ॥ ४९ ॥

**यस्य नागो ध्वजाग्रेऽसौ केतनेन समं धृतः ।**
**धृतराष्ट्रात्मजः श्रीमानेष राजा सुयोधनः ॥ ५० ॥**

**यस्य ध्वजाग्रे** ध्वजस्याग्रे **असौ नागो** हस्ती **केतनेन** लोके चिह्नत्वेन धृतगरुडवृषभादिना **समं** तत्तुल्यतया **धृतः** । अयं तद्वच्चिह्नरूप इति भावः । 'केतनं लाञ्छने कार्ये' इति विश्वः ॥ ५० ॥

**एतस्याभिमुखं वीर रथं पररथारुजम् ।**
**प्रापयस्वैष राजा हि प्रमाथी युद्धदुर्मदः ॥ ५१ ॥**

**पररथारुजं** तद्भञ्जकम् ॥ ५१ ॥

**एष द्रोणस्य शिष्याणां शीघ्रास्त्रे प्रथमो मतः ।**
**एतस्य दर्शयिष्यामि शीघ्रास्त्रं विपुलं रणे ॥ ५२ ॥**

**शिष्याणां** मध्ये **प्रथमो** मुख्यः । **शीघ्रास्त्रं** तत्त्वम् ॥ ५२ ॥

[१]नागकक्षा तु रुचिरा ध्वजाग्रे यस्य तिष्ठति ।
एष वैकर्तनः कर्णो विदितः पूर्वमेव ते ॥ ५३ ॥

**नागकक्षा** गजमध्यबन्धकरज्जुविशेषः। 'कक्षामध्येभबन्धने' इति [२]विश्वान्नागशब्दस्तत्स्वरूपकीर्तनपरः । **पूर्वं** तत्पराभावनकाले ॥ ५३ ॥

एतस्य रथमास्थाय राधेयस्य दुरात्मनः ।
यत्तो भवेथाः सङ्ग्रामे स्पर्धते हि सदा मया ॥ ५४ ॥

**आस्थाय** आसाद्य ॥ ५४ ॥

यस्तु नीलाभिसारेण पञ्चतारेण केतुना ।
हस्तावापी बृहद्धन्वा रथे तिष्ठति वीर्यवान् ॥ ५५ ॥

**यत्तः** सावधानः । नीला अभितः सरन्तीति अभिसारा पताका यस्य तेन । **पञ्चतारेण** पञ्चरजतमण्डलेन। 'तारं तु रजते' इति विश्वः। **केतुना** अवान्तरध्वजेन उपलक्षितरथो **तिष्ठति** ॥ ५५ ॥

यस्य तारार्कचित्रोऽसौ ध्वजो रथवरे स्थितः ।
यस्यैतत् पाण्डुरं च्छत्रं विमलं मूर्ध्नि तिष्ठति ॥ ५६ ॥

**यस्य रथवरे तारार्कचित्रः** ताराः नक्षत्राणि । अर्कः सूर्यः । तैश्चित्रो मनोहरः **ध्वजः** महान् **स्थितः** ॥ ५६ ॥

महतो रथवंशस्य नानाध्वजपताकिनः ।
बलाहकानां सूर्यो वा य एष प्रमुखे स्थितः ॥ ५७ ॥

**रथवंशस्य** सर्वराजरथसमूहस्य । **प्रमुखे य एष स्थितः** । कथं **बलाहकानां** मेघानामग्रे **सूर्यो वा** स इव ॥ ५७ ॥

---

१. नागकक्ष्या इति क्वचित् ।

२. कक्ष्या....... गजरज्जौ......... । - इति धरणिः ।

हैमं चन्द्रार्कसङ्काशं कवचं यस्य दृश्यते ।
जातरूपशिरस्त्राणं मनस्तापयतीव मे ।। ५८ ।।

**हैमं** स्वर्णमयं गतम् । **जातरूपशिरस्त्राणं** तत्तन्तूतोष्णीषं **यस्य दृश्यते** ।।५८ ।।

एष शान्तनवो भीष्मः सर्वेषां नः पितामहः ।
राजश्रियाभिवृद्धश्च दुर्योधनवशानुगः ।। ५९ ।।

**राजश्रियाभिवृद्ध** इति **दुर्योधनवशानुगः** तदिच्छानुसारी । तन्निबद्धः ।। ५९ ।।

पश्चादेष प्रयातव्यो न मे विघ्नकरो भवेत् ।
एतेन युद्ध्यमानस्य यत्तः संयच्छ मे हयान् ।। ६० ।।

**पश्चात्** अनन्तरम् ।। ६० ।।

ततोऽभ्यवहदव्यग्रो वैराटिः सव्यसाचिनम् ।
यत्रातिष्ठत् कृपो राजन् योत्स्यमानो धनञ्जयम् ।। ६१ ।।

।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि पञ्चपञ्चाशत्तमोऽध्यायः ।।

**योत्स्यमानः** ।। ६१ ।।

।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां पञ्चपञ्चाशत्तमोऽध्यायः ।।

*****

# ५६. षट्पञ्चाशत्तमोऽध्यायः

( कृपार्जुनोयोरद्भुतसङ्ग्रामः । )

**वैशम्पायन उवाच -**

तान्यनीकानि दृश्यन्त कुरूणामुग्रधन्विनाम् ।
संसर्पन्तो यथा मेघा घर्मान्ते मन्दमारुताः ।। १ ।।

**दृश्यन्त** अदृश्यन्त । दृश्यत **इति पाठः** क्वचित् । **घर्मान्ते** ग्रीष्मावसाने तन्मध्ये वा । **मन्दमारुताः** मन्दा मारुतो येषां घटकतया ते तथा । **संसर्पन्तो** यथा दृश्यन्ते तथा सर्पन्ति **अनीकानि** तत्तत्सेनाः अदृश्यन्त ।। १ ।।

**अभ्याशे वाजिनस्तस्थुः समारूढाः प्रहारिभिः ।**
**भीमरूपाश्च मातङ्गास्तोमराङ्कुशनोदिताः ।**
**महामात्रैः समारूढा विचित्रकवचोज्वलाः ।। २ ।।**

**प्रहारिभिः समारूढाः वाजिनः अभ्याशे** समीपे **तस्थुः । तोमराङ्कुशनोदिता महामात्रैरम्बष्ठैः समारूढाः** । विचित्रकवचानि कुथादीनि तैरुज्वला मातङ्गाश्च समीपे तस्थुरित्यन्वयः । विमानमित्युत्तरानुकूल्याद्ग्राह्यम् ।।२।।

**ततः शक्रः सुरगणैः समारुह्य सुदर्शनम् ।**
**सहोपायात् तदा राजन् विश्वाश्विमरुतां गणैः ।। ३ ।।**

**सुदर्शनं** युद्धसङ्गमं द्रष्टुमिति शेषः। 'सुदर्शनं हरेश्चक्रे द्वयोर्नायुद्धसङ्गमे' इति मेदिनी । विश्वेदेवविशेषः । 'विश्ववसवः' इत्यमरात् । अश्विनौ च मरुतश्च तेषां गणैः । गणपदं च विश्वमरुत्सम्भवितान्वयि । प्राचीनसञ्ज्ञात्वान्न सर्वनाम-सञ्ज्ञानिषेध इति तथा विग्रहः कृत इति प्रासङ्गिक्युक्तिरिति ज्ञेयम् ।। ३ ।।

**तद्देवयक्षगन्धर्वमहोरगसमाकुलम् ।**
**शुशुभेऽभ्रविनिर्मुक्तं ग्रहाणामिव मण्डलम् ।। ४ ।।**

**तत् मण्डलं** समूहः । **अभ्रविनिर्मुक्तम् ग्रहाणाम्** सूर्यादीनाम् ।। ४ ।।

**अस्त्राणां च बलं तेषां मानुषेषु प्रयुञ्जताम् ।**
**तच्च भीमं महद्युद्धं भीष्मार्जुनसमागमे ।**
**द्रष्टुमभ्यागता देवाः स्वविमानैः पृथक् पृथक् ।। ५ ।।**

**तेषां** स्वस्वास्त्राणां **बलं मानुषेषु प्रयुञ्जताम्** । **तेषां** अर्जुनभीष्मादीनाम् । भीष्मार्जुनेत्यत्र भीष्मशब्द इतरोपलक्षकः । अर्जुनेन समागमोऽर्जुनसमागमः । भीष्मस्यार्जुनसमागमस्तस्मिन् । अत एवाजाद्यदन्तमिति तेनार्जुनपदपूर्वनिपातः । पितामहत्वेनाभ्यर्हितत्वाद्वा एवमुक्तिरिति ज्ञेयम् ।। ५ ।।

**शतं शतसहस्राणां यत्र स्थूणा हिरण्मयम् ।**
**मणिरत्नमयी चान्या सम्प्रसादमधारयत् ।। ६ ।।**

यत् पत्रशतसहस्राणां **शतं** त्रिकोटिसङ्ख्या । **हिरण्मयं स्थूणा** स्तम्भः । निपातितः शब्दो 'दाण्डिनायनः...'[१] इति । टित्वाड्ङीप् । मणिषु श्रेष्ठानि मणिरत्नानि तदात्मिका **अन्या** कोटिसङ्ख्यास्थूणा च । **सम्प्रसादं अधारयत्** दधार ।। ६ ।।

**तत्र कामगमं दिव्यं सर्वरत्नविभूषितम् ।**
**विमानं देवराजस्य शुशुभे खेचरं तदा ।। ७ ।।**

**तत्र** महाविमानमध्यस्थप्रासादे **खेचरं विमानं शुशुभे** ।। ७ ।।

**तत्र देवास्त्रयस्त्रिंशत् तिष्ठन्ति सहवासवाः ।**
**गन्धर्वा राक्षसाः सर्पाः पितरश्च महर्षिभिः ।। ८ ।।**

तत्र विमाने **त्रयस्त्रिंशत्** एकादशरुद्रा द्वादशादित्या अष्टौ वसवः द्वावश्विनाविति [२]त्रयस्त्रिंशद्देवाः ।। ८ ।।

**तथा राजा वसुमना वलाक्षः सुप्रतर्दनः ।**
**अष्टकश्च शिबिश्चैव ययातिर्नहुषो गयः ।। ९ ।।**

---

१. दाण्डिनायनहास्तिनायनाथर्वणिकजैह्माशिनेयवाशिनायनिभ्रौणहत्यधैवत्यसारवैक्ष्वाकमैत्रेयहिरण्मयानि । - पा.सू. (६/४/१७४)

२. त्रयस्त्रिंशत्सुराणां हि परिवारास्ततः परे । षण्णामेते त्रयाणां ते ते द्वयोः साधिकस्य तौ । एकस्य सोऽपि .... एक एव स्वतन्त्रोऽसौ भगवान् पुरुषोत्तमः- इत्यदि बृहद्भाष्ये । (५/९/५)

**मनुः पुरू रघुर्भानुः कृशाश्वः सगरो नलः ।**
**विमाने देवराजस्य समदृश्यन्त सुप्रभाः ॥ १० ॥**

तथा वसुमनसमारभ्य न लग्नाः पञ्चदशसङ्ख्याका राजानश्च विमाने समदृश्यन्त । एते च राजानः सुकृतातिशयेन तेजोमये स्वर्गिशरीरे तादृशं नामरूपोपेतं प्राप्ता इन्द्रातिथयो ज्ञेयाः ॥ ९-१० ॥

**अग्नेरीशस्य सोमस्य वरुणस्य प्रजापतेः ।**
**तथा धातुर्विधातुश्च कुबेरस्य यमस्य च ॥ ११ ॥**

**प्रजापतेः** दक्षस्य । **धातुर्विधातुश्च** तन्नामकयोः श्रीसहोदरयोर्भृगुसुतयोः । यथोक्तं चतुर्थे भागवते -

'भृगुः ख्यात्यां महाभागः पत्न्यां पुत्रानजीजनत् ।
धातारं च विधातारं श्रियं च भगवत्प्रियाम्'[१] ॥ इति ॥ ११ ॥

**अलम्बुषोग्रसेनानां गन्धर्वस्य च तुम्बुरोः ।**
**यथाभागं यथोद्देशं विमानानि चकाशिरे ॥ १२ ॥**

अलम्बुषोग्रसेनपदोत्तरं आदिशब्दोऽध्याहर्तव्यः । अलम्बुषोग्रसेनादीनां गन्धर्वाणां **यथाभागं** इन्द्रस्य वामभागे एतैर्वर्तितव्यं दक्षिणे चैतैरिति क्लृप्तस्वस्वभागमनतिक्रम्य तत्रापि भागे पूर्वमेतद्विमानमनन्तरमस्येति तारतम्यानुसारेण च **विमानानि चकाशिरे** ॥ १२ ॥

**सर्वदेवनिकायाश्च सिद्धाश्च परमर्षयः ।**
**अर्जुनस्य कुरूणां च द्रष्टुं युद्धमुपागताः ॥ १३ ॥**

**निकायाः** समूहाः ॥ १३ ॥

---

१. भागवते (४/१/४३)

**दिव्यानां सर्वमाल्यानां गन्धः पुण्योऽथ सर्वशः ।**
**प्रससार वसन्ताग्रे वनानामिव भारत ॥ १४ ॥**

**सर्वमाल्यानां** सर्वपुष्पाणां **गन्धः** आमोदः **पुण्यः** अतिमनोहरः । वसन्तस्याग्रे चैत्रमासे ॥ १४ ॥

**तत्र रत्नानि देवानां समदृश्यन्त तिष्ठताम् ।**
**आतपत्राणि वासांसि स्रजश्च व्यजनानि च ॥ १५ ॥**

**तत्र** विमाने **रत्नानि** आभरणस्थानि ॥ १५ ॥

**उपाशाम्यद्रजो भौमं सर्वं व्याप्तं मरीचिभिः ।**
**दिव्यगन्धानुपादाय वायुर्योधानसेवत ॥ १६ ॥**

**व्याप्तं सर्वं भौमं रजः मरीचिभिः** अमृतस्राविचन्द्रच्छत्रादिकिरणैः **उपाशाम्यत्** । **योधान्** दुर्योधनादीन् ॥ १६ ॥

**प्रभासितमिवाकाशं चित्ररूपमलङ्कृतम् ।**
**सम्पतद्भिः स्थितैश्चापि [१]नानावर्णावभासितैः ॥ १७ ॥**

**नानावर्णावभासितैः** विमानैः **प्रभासितमिव** प्रकशितमिव । वस्तुतो गगनस्य नीरूपत्वात् ॥ १७ ॥

**विमानैर्विविधैश्चित्रैरुपानीतैः सुरोत्तमैः ।**
**वज्रभृच्छुशुभे तत्र विमानस्थैः सुरैर्वृतः ॥ १८ ॥**

**वज्रभृत्** देवेन्द्रः ॥ १८ ॥

---

१. नानारत्नविभासितैः । (इति गी. पाठः)

बिभ्रन्मालां महातेजाः पद्मोत्पलसमायुताम् ।
विप्रेक्ष्यमाणो बहुभिर्नातृप्यत् सुमहाहवम् ॥ १९ ॥

॥ इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि षट्पञ्चाशत्तमोऽध्यायः ॥

वर्णलोपन्यायेन तकारलोपेन **सुमहाहवम्** इति बोध्यम् ॥ १९ ॥

॥ इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां षट्पञ्चाशत्तमोऽध्यायः ॥

*****

# ५७. सप्तपञ्चाशत्तमोऽध्यायः

( अर्जुनकर्तृककृपाचार्यपराभवः । )

**वैशम्पायन उवाच -**

दृष्ट्वा व्यूढान्यनीकानि कुरूणां कुरुनन्दन ।
तत्र वैराटिमामन्त्र्य पार्थो वचनमब्रवीत् ॥ १ ॥

**आमन्त्र्य** सम्बोध्य ॥ १ ॥

जाम्बूनदमयी वेदी ध्वजे यस्य प्रदृश्यते ।
तस्य दक्षिणतो याहि कृपः शारद्वतो हि सः ॥ २ ॥

**यस्य ध्वजे जाम्बूनदमयी** स्वर्णमयी **वेदी** यज्ञवेदीसदृशी ॥ २ ॥

**वैशम्पायन उवाच -**

धनञ्जयवचः श्रुत्वा वैराटिस्त्वरितस्ततः ।
हयान् रजतसङ्काशान् हेमभाण्डानचोदयत् ॥ ३ ॥

**हेमभाण्डान्** सुवर्णालङ्कारवन्तः । 'भाण्डं भूषणमात्रेऽपि' इति विश्वोक्तेः ॥ ३ ॥

**आनुपूर्व्यात् तु तत् सर्वमास्थाय जवमुत्तमम् ।**
**प्राहिणोच्चन्द्रसङ्काशान् कुपितानिव तान् हयान् ॥ ४ ॥**

**आनुपूर्व्याद्** अर्जुनवचनानुसारेण । **कुपितानिव** विद्यमानान् ॥ ४ ॥

**स गत्वा कुरुसेनायाः समीपं हयकोविदः ।**
**पुनरावर्तयामास तान् हयान् वातरंहसः ॥ ५ ॥**

**प्रदक्षिणमुपावृत्य मण्डलं सव्यमेव च ।**
**कुरून् सम्मोहयामास मत्स्यो यानेन तत्त्ववित् ॥ ६ ॥**

**आवर्तयामास** प्रदक्षिणं पूर्वमुपाकृत्यानन्तरं सव्यं मण्डलमावर्तयामास । एतच्च वैरिणामवमानरूपमिति ज्ञेयम् ॥ **तत्त्ववित्** सारथ्यरहस्यज्ञः ॥ ५, ६ ॥

**कृपस्य रथमास्थाय वैराटिरकुतोभयः ।**
**प्रदक्षिणमुपावृत्य तत्स्थो तस्याग्रतो बली ॥ ७ ॥**

**आस्थाय** आसाद्य ॥ ७ ॥

**ततोऽर्जुनः शङ्खवरं देवदत्तं महारवम् ।**
**प्रदध्मौ बलमास्थाय नाम विश्राव्य चात्मनः ॥ ८ ॥**

**तस्य शब्दो महानासीद्ध्मायमानस्य जिष्णुना ।**
**तथा वीर्यवतः [१]सङ्ख्ये पूर्वं तस्यैव दीर्यतः ॥ ९ ॥**

**तस्य** शङ्खस्य **ध्मायमानस्य** शब्द्यतः । धमादेश आर्षः । धात्वन्तरं वा । **तथा वीर्यवतः** । तथा अर्जुनश्वासवेगसहिष्णुवीर्यं यस्यास्तीति तथा **तस्य दीर्यतः** भिद्यतः ॥ ९ ॥

---

१. 'सङ्ख्ये' इति क्वचित् ।

**पूजयाञ्चक्रिरे शङ्खं कुरवः सहसैनिकाः ।**
**अर्जुनेन तथा ध्मातः शतधा यन्न दीर्यते ॥ १० ॥**

अस्मदीयशङ्खानां रवः कुरव इति कुरवो मेनिरे । शङ्खानां कुत्सितो रवो येषामिति वा ॥ १० ॥

**दिवमावृत्य शब्दस्तु निवृत्तः शुश्रुवे पुनः ।**
**सृष्टो मघवता वज्रः प्रपतन्निव पर्वते ॥ ११ ॥**

दिवं गतम् । **आवृत्य** व्याप्य **निवृत्तः** । पुनर्मही **प्रपतन् वज्रः** धात्वन्तरं वा तद्ध्वनिः ॥ ११ ॥

**एतस्मिन्नन्तरे वीरो बलवीर्यसमन्वितः ।**
**अर्जुनं प्रति संरब्धः कृपः परमदुर्जयः ।**
**अमृष्माणस्तं शब्दं कृपः शारद्वतस्तदा ॥ १२ ॥**

**अर्जुनं प्रति संरब्धो युद्धार्थी स महारथः ।**
**महोदधिजमादाय दध्मौ वेगेन वीर्यवान् ॥ १३ ॥**

**स तु शब्देन लोकांस्त्रीनावृत्य रथिनां वरः ।**
**धनुरादाय सुमहत् ज्याशब्दमकरोत् तदा ॥ १४ ॥**

**स** कृपः ॥ १४ ॥

**तौ रथौ सूर्यसङ्काशौ योत्स्यमानौ महाबलौ ।**
**शारदाविव जीमूतौ व्यरोचेतां व्यवस्थितौ ॥ १५ ॥**

**रथौ** रथिनौ ॥ १५ ॥

**ततः शारद्वतस्तूर्णं पार्थं दशभिराशुगैः ।**
**विव्याध परवीरघ्नं निशितैर्मर्मभेदिभिः ॥ १६ ॥**

पार्थोऽपि विश्रुतं लोके गाण्डीवं परमायुधम् ।
विकृष्य चिक्षेप बहून् नाराचान् मर्मभेदिनः ॥ १७ ॥

तान् प्राप्ताञ्छितैर्बाणैर्नाराचान् रक्तभोजनान् ।
कृपश्चिच्छेद पार्थस्य शतशोऽथ सहस्रशः ॥ १८ ॥

ततः पार्थस्तु सङ्क्रुद्धश्चित्रान् मार्गान् प्रदर्शयन् ।
दिशः संछादयन् बाणैः प्रदिशश्च महारथः ॥ १९ ॥

एकच्छायमिवाकाशमकरोत् सर्वतः प्रभुः ।
प्राच्छादयदमेयात्मा पार्थः शरशतैः कृपम् ॥ २० ॥

कृपं च प्राच्छादयत् ॥ २० ॥

स शरैरर्दितः क्रुद्धः सितैरग्निशिखोपमैः ।
तूर्णं दशसहस्रेण पार्थमप्रतिमौजसम् ॥ २१ ॥

अर्दयित्वा महात्मानं ननर्द समरे कृपः ।
ततः कनकपर्वाग्रैर्वीरः सन्नतपर्वभिः ॥ २२ ॥

त्वरन् गाण्डीवनिर्मुक्तैरर्जुनस्तस्य वाजिनः ।
चतुर्भिश्चतुरैस्तीक्ष्णैरविध्यत् परमेषुभिः ॥ २३ ॥

गाण्डीवनिर्मुक्तैः चतुर्भिः ॥ २३ ॥

ते हया निशितैर्बाणैर्ज्वलद्भिरिव पन्नगैः ।
उत्पेतुः सहसा सर्वे कृपः स्थानादथाच्यवत् ॥ २४ ॥

उत्पेतुः रथं गृहीत्वा । स्थानात् स्वावस्थानप्रदेशात् ॥ २४ ॥

**च्युतं तु गौतमं स्थानात् समीक्ष्य कुरुनन्दनः ।**
**नाविध्यत् परवीरघ्नो रक्षमाणोऽस्य गौरवम् ॥ २५ ॥**

**अस्य** कृपस्य । **गौरवं**[१] पूर्वाचार्यत्वात् ॥ २५ ॥

**स तु लब्ध्वा पुनः स्थानं गौतमः सव्यसाचिनम् ।**
**विव्याध दशभिर्बाणैस्त्वरितः कङ्कपत्रिभिः ॥ २६ ॥**

**ततः पार्थो धनुस्तस्य भल्लेन निशितेन ह ।**
**चिच्छेदैकेन भूयश्च हस्तावापमथाहरत् ॥ २७ ॥**

**अथास्य कवचं बाणैर्निशितैर्मर्मभेदिभिः ।**
**व्यधमन्न च पार्थोऽस्य शरीरमवपीडयत् ॥ २८ ॥**

**नावपीडयत्** नावापीडयत् ॥ २८ ॥

**तस्य निर्मुच्यमानस्य कवचात् काय आबभौ ।**
**समये मुच्यमानस्य सर्पस्येव तनुर्यथा ॥ २९ ॥**

**कवचात् निर्मुच्यमानस्य । यथा** सम्यक् ॥ २९ ॥

**छिन्ने धनुषि पार्थेन सोऽन्यदादाय कार्मुकम् ।**
**चकार गौतमः सज्जं तदद्भुतमिवाभवत् ॥ ३० ॥**

ततः शीघ्रतः । सज्जीकरणम् ॥ ३० ॥

**स तदप्यस्य कौन्तेयश्चिच्छेद नतपर्वणा ।**
**एवमन्यानि चापानि बहूनि कृतहस्तवत् ॥ ३१ ॥**

---

१. कुमारान् क्रीडमानांस्तान् दृष्ट्वा राजातिदुर्मदान् । गुरुं शिक्षार्थमन्विष्य गौतमं तान् न्यवेदयत् ॥
शरस्तम्बे समुद्भूतं वेदशास्त्रार्थपारगम् । अधिजग्मुश्च कुरवो धनुर्वेदं कृपात् तु ते ॥
- इति महाभारते (१/१२८/४२,४३)

**कृतहस्तवत्** कृतहस्तः ।। ३१ ।।

**शारद्वतस्य चिच्छेद पाण्डवः परवीरहा ।**
**सच्छिन्नधनुरादाय रथशक्तिं प्रतापवान् ।। ३२ ।।**

**छिन्नधनुः** च्छिन्नो धनुर्यस्य सः । 'धनुषा च धनुर्विदुः' इति द्विरूपकोशः । अत एव नानङ् । **शक्तिम् आदाय** ।। ३२ ।।

**प्राहिणोत् पाण्डुपुत्राय प्रदीप्तामशनीमिव ।**
**तामर्जुनस्तदाऽऽयान्तीं शक्तिं हेमविभूषिताम् ।। ३३ ।।**

**वियद्गतां महोल्काभां चिच्छेद दशभिः शरैः ।**
**साऽपतद्दशधा च्छिन्ना भूमौ पार्थेन धीमता ।। ३४ ।।**

**युगपच्चैव भल्लैस्तु ततः सज्जधनुः कृपः ।**
**तमाशु निशितैः पार्थं बिभेद दशभिः शरैः ।। ३५ ।।**

**भल्लैः** तन्नामकैः । **दशभिः शरैः । सज्जधनुः** गतम् । **कृपो बिभेद** ।। ३५ ।।

**ततः पार्थो महातेजा विशिखानग्नितेजसः ।**
**चिक्षेप समरे क्रुद्धस्त्रयोदश शिलाशितान् ।। ३६ ।।**

**अथास्य युगमेकेन चतुर्भिश्चतुरो हयान् ।**
**षष्ठेन च शिरः कायाच्छरेण रथसारथेः ।। ३७ ।।**

त्रयोदशव्यापारमाह– **अथास्येति** ।। ३७ ।।

**त्रिभिस्त्रिवेणुं समरे द्वाभ्यामक्षं महारथः ।**
**द्वादशेन तु भल्लेन चकर्तास्य ध्वजं तदा ।। ३८ ।।**

युगन्धरं **त्रिवेणुम्** । ईषादण्डम् ।। ३८ ।।

**ततो वज्रनिकाशेन फाल्गुनः प्रहसन्निव ।**
**त्रयोदशेनेन्द्रसमः कृपं वक्षस्यविध्यत ।। ३९ ।।**

**सच्छिन्नधन्वा विरथो हताश्वो हतसारथिः ।**
**गदापाणिरवप्लुत्य तूर्णं चिक्षेप तां गदाम् ।। ४० ।।**

**सा च मुक्ता गदा गुर्वी कृपेण सुपरिष्कृता ।**
**अर्जुनेन शरैर्नुन्ना प्रतिमार्गमथागमत् ।। ४१ ।।**

**प्रतिमार्गं यथागतं** तथा ।। ४१ ।।

**तं तु योधाः परीप्सन्तः शारद्वतममर्षणम् ।**
**सर्वतः समरे पार्थं शरवर्षैरवाकिरन् ।। ४२ ।।**

तं कृपं **परीप्सन्तः** रक्षितुमिच्छन्तः ।। ४२ ।।

**ततो विराटस्य सुतः सव्यमावृत्य वाजिनः ।**
**यमकं मण्डलं कृत्वा तान् योधान् प्रत्यवारयत् ।। ४३ ।।**

**सव्यम्** अप्रदक्षिणं प्रथमकं मण्डलमिति वैर्यपमानहेत्वप्रदक्षिणस्य सञ्ज्ञा ।। ४३ ।।

**ततः कृपमुपादाय विरथं ते नरर्षभाः ।**
**अपजह्रुर्महावेगाः कुन्तीपुत्राद्धनञ्जयात् ।। ४४ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि सप्तपञ्चाशत्तमोऽध्यायः ।।**

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां सप्तपञ्चाशत्तमोऽध्यायः ।।**

*****

# ५८. अष्टपञ्चाशत्तमोऽध्यायः

( द्रोणार्जुनयोर्युद्धे द्रोणाचार्यस्य पराभवः । )

**वैशम्पायन उवाच -**

**कृपेऽपनीते द्रोणस्तु प्रगृह्य सशरं धनुः ।**
**अभ्यद्रवदनाधृष्यः शोणाश्वः श्वेतवाहनम् ।। १ ।।**

**अपनीते** कौरवैरपवाहिते ।। १ ।।

**स तु [१]रुग्मरथं दृष्ट्वा गुरुमायान्तमन्तिकात् ।**
**अर्जुनो जयतां श्रेष्ठ उत्तरं वाक्यमब्रवीत् ।। २ ।।**

**स तु** अर्जुनोऽपि **जयतां** जयशीलानां मनसा चार्जुन उत्तरश्चेत्यतो जयताम् । उत्कर्षयन्तौ स्यातामित्यायान्तम् । बहिराह कर्तुमित्यप्यर्थः ।। २ ।।

**अर्जुन उवाच -**

**यत्रैषा काञ्चनी वेदी ध्वजे यस्य प्रकाशते ।**
**उच्छ्रिता प्रवरे दण्डे पताकाभिरलङ्कृता ।। ३ ।।**

**काञ्चनी** सौवर्णी । पताकाश्चोपध्वजाः ।। ३ ।।

**अत्र मां वह भद्रं ते द्रोणानीकाय [२]मारिष ।**
**अश्वा शोणाः प्रकाशन्ते बृहन्तश्चारुवाहिनः ।। ४ ।।**

**अत्र** एतत्समये । हे **मारिष** आर्यपुत्र । **ते भद्रम्** अस्तु । **भद्रं** जयेनागच्छच्छुभं मारिष । न हिंसय तदपि तवैवेति वा ।। ४ ।।

---

१. रुक्मरथम् । (इति गी. पाठः) ।
२. सारथे । (इति गी. पाठः)

**स्निग्धविद्रुमसङ्काशास्ताम्रास्याः प्रियदर्शनाः ।**
**युक्ता रथवरे यस्य सर्वशिक्षाविशारदाः ॥ ५ ॥**

'आलस्यादमृतं विषम्' इत्यादेरालस्ये तन्नश्येदिति भावः । स्निग्धता च विद्रुमाणाम् उत्तेजनेन वचोविशेषः ॥ ५ ॥

**दीर्घबाहुर्महातेजा बलरूपसमन्वितः ।**
**सर्वलोकेषु विक्रान्तो भारद्वाजः प्रतापवान् ॥ ६ ॥**

**विक्रान्तः** पराक्रमवान् ॥ ६ ॥

**बुद्ध्या ह्युशनसा तुल्यो बृहस्पतिसमो नये ।**
**वेदास्तथैव चत्वारो ब्रह्मचर्यं तथैव च ॥ ७ ॥**

**उशनसा** शुक्रेण । **नये** नीतौ ॥ ७ ॥

**ससंहाराणि सर्वाणि दिव्यान्यस्त्राणि मारिष ।**
**धनुर्वेदश्च कात्स्न्र्येन यस्मिन् नित्यं प्रतिष्ठितः ॥ ८ ॥**

**ससंहाराणि** उपसंहरणसहितानि ॥ ८ ॥

**क्षमा दमश्च सत्यं च आनृशंस्यमथार्जवम् ।**
**एते चान्ये च बहवो यस्मिन् नित्यं द्विजे गुणाः ॥ ९ ॥**

अन्यैः यैर्वर्तितव्यं ते गुणाः पूर्वम् ॥ ९ ॥

**तेनाहं योद्धुमिच्छामि महाभागेन संयुगे ।**
**तस्मात् तं प्रापयाचार्यं क्षिप्रमुत्तर वाहय ॥ १० ॥**

**क्षिप्रम्** । रथम् **वाहय** अद्य च तं प्रापयेत्यन्वयः ॥ १० ॥

# ५८. अष्टपञ्चाशत्तमोऽध्यायः

( द्रोणार्जुनयोर्युद्धे द्रोणाचार्यस्य पराभवः । )

**वैशम्पायन उवाच -**

**कृपेऽपनीते द्रोणस्तु प्रगृह्य सशरं धनुः ।**
**अभ्यद्रवदनाधृष्यः शोणाश्वः श्वेतवाहनम् ।। १ ।।**

**अपनीते** कौरवैरपवाहिते ।। १ ।।

**स तु [१]रुग्मरथं दृष्ट्वा गुरुमायान्तमन्तिकात् ।**
**अर्जुनो जयतां श्रेष्ठ उत्तरं वाक्यमब्रवीत् ।। २ ।।**

**स तु** अर्जुनोऽपि **जयतां** जयशीलानां मनसा चार्जुन उत्तरश्चेत्यतो जयताम् । उत्कर्षयन्तौ स्यातामित्यायान्तम् । बहिराह कर्तुमित्यप्यर्थः ।। २ ।।

**अर्जुन उवाच -**

**यत्रैषा काञ्चनी वेदी ध्वजे यस्य प्रकाशते ।**
**उच्छ्रिता प्रवरे दण्डे पताकाभिरलङ्कृता ।। ३ ।।**

**काञ्चनी** सौवर्णी । पताकाश्चोपध्वजाः ।। ३ ।।

**अत्र मां वह भद्रं ते द्रोणानीकाय [२]मारिष ।**
**अश्वा शोणाः प्रकाशन्ते बृहन्तश्चारुवाहिनः ।। ४ ।।**

**अत्र** एतत्समये । हे **मारिष** आर्यपुत्र । **ते भद्रम्** अस्तु । **भद्रं** जयेनागच्छच्छुभं मारिष । न हिंसय तदपि तवैवेति वा ।। ४ ।।

---

१. रुक्मरथम् । (इति गी. पाठः) ।

२. सारथे । (इति गी. पाठः)

**स्निग्धविद्रुमसङ्काशास्ताम्रास्याः प्रियदर्शनाः ।**
**युक्ता रथवरे यस्य सर्वशिक्षाविशारदाः ।। ५ ।।**

'आलस्यादमृतं विषम्' इत्यादेरालस्ये तन्नश्येदिति भावः । स्निग्धता च विद्रुमाणाम् उत्तेजनेन वचोविशेषः ।। ५ ।।

**दीर्घबाहुर्महातेजा बलरूपसमन्वितः ।**
**सर्वलोकेषु विक्रान्तो भारद्वाजः प्रतापवान् ।। ६ ।।**

**विक्रान्तः** पराक्रमवान् ।। ६ ।।

**बुद्ध्या ह्युशनसा तुल्यो बृहस्पतिसमो नये ।**
**वेदास्तथैव चत्वारो ब्रह्मचर्यं तथैव च ।। ७ ।।**

**उशनसा** शुक्रेण । **नये** नीतौ ।। ७ ।।

**ससंहाराणि सर्वाणि दिव्यान्यस्त्राणि मारिष ।**
**धनुर्वेदश्च कात्स्न्र्येन यस्मिन् नित्यं प्रतिष्ठितः ।। ८ ।।**

**ससंहाराणि** उपसंहरणसहितानि ।। ८ ।।

**क्षमा दमश्च सत्यं च आनृशंस्यमथार्जवम् ।**
**एते चान्ये च बहवो यस्मिन् नित्यं द्विजे गुणाः ।। ९ ।।**

अन्यैः यैर्वर्तितव्यं ते गुणाः पूर्वम् ।। ९ ।।

**तेनाहं योद्धुमिच्छामि महाभागेन संयुगे ।**
**तस्मात् तं प्रापयाचार्यं क्षिप्रमुत्तर वाहय ।। १० ।।**

**क्षिप्रम्** । रथम् **वाहय** अद्य च तं प्रापयेत्यन्वयः ।। १० ।।

**वैशम्पायन उवाच -**

**अर्जुनेनैवमुक्तस्तु वैराटिर्हेमभूषणान् ।**
**चोदयामास तानश्वान् भारद्वाजरथं प्रति ॥ ११ ॥**

उक्तः **अर्जुनेन** ॥ ११ ॥

**तमापतन्तं वेगेन पाण्डवं रथिनां वरम् ।**
**द्रोणः प्रत्युद्ययौ पार्थं मत्तो मत्तमिव द्विपम् ॥ १२ ॥**

**मत्तो** द्विपः ॥ १२ ॥

**ततः प्राध्मापयच्छङ्खं भेरीशतनिनादितम् ।**
**प्रचुक्षुभे बलं सर्वमुद्धूत इव सागरः ॥ १३ ॥**

**भेरीशतं** विना ताडनं निनादितं येन । शङ्खध्मापने तत्र प्रतिध्वनिरुत्पन्न इति भावः । **उद्धूतो** वातादिना कम्पितः ॥ १३ ॥

**अथ शोणान् सदश्वांस्तान् हंसवर्णैर्मनोजवैः ।**
**मिश्रितान् समरे दृष्ट्वा व्यस्मयन्त रणे नराः ॥ १४ ॥**

**हंसवर्णैः** श्वेतैरर्जुनवाजिभिः । **मिश्रितान्** मिलितान् । **व्यस्मयन्त** विसिस्मिरे ॥ १४ ॥

**तौ रथौ वीर्यसम्पन्नौ दृष्ट्वा सङ्ग्राममूर्धनि ।**
**आचार्यशिष्यावजितौ कृतविद्यौ मनस्विनौ ॥ १५ ॥**

शिक्षितविद्याविति पूर्णविद्याविति वा **कृतविद्यौ** ॥ १५ ॥

**समाश्लिष्टौ तदाऽन्योन्यं द्रोणपार्थौ महाबलौ ।**
**दृष्ट्वा प्राकम्पत मुहुः भरतानां महद्बलम् ॥ १६ ॥**

**हर्षयुक्तस्ततः पार्थः प्रहसन्निव वीर्यवान् ।**
**रथं रथेन द्रोणस्य समासाद्य महारथः ॥ १७ ॥**

गुरुणा रणः प्रसक्त इति हासः ॥ १७ ॥

**अभिवाद्य महाबाहुः सामपूर्वमिदं वचः ।**
**उवाच श्लक्ष्णया वाचा कौन्तेयः परवीरहा ॥ १८ ॥**

**अभिवाद्य** रथ एव प्रणम्य **श्लक्ष्णया** समीचीनया **वाचा परवीरहा** दुर्भाषणं विना कार्यमेव कृत्वा दर्शयिता । अरिष्वपि **सामपूर्वं** च **उवाच** व्याजहार ॥ १८ ॥

**उषिताः स्मो वने वासं प्रतिकर्म चिकीर्षवः ।**
**कोपं नार्हसि नः कर्तुं सदा समरदुर्जय ॥ १९ ॥**

**वने उषिताः स्मः** । **वासं** प्रतिज्ञातमज्ञातं च । **स्मः** पारङ्गता इति शेषः । **प्रतिकर्म चिकीर्षव** इति पदमेकमनेकं वा । आद्ये प्रतिकर्म । अस्मत्क्लेशनरूपं चिकीर्षव इति विग्रहः । 'नलोक...'[1] इति षष्ठीनिषेधात् । कर्तुमिच्छन्तः । **नः** अस्मभ्यम् ॥ १९ ॥

**अहं तु प्रहृते पूर्वं प्रहरिष्यामि तेऽनघ ।**
**इति मे वर्तते बुद्धिस्तद्भवान् कर्तुमर्हति ॥ २० ॥**

**प्रहृते** मयीति शेषः । **तत्** मत्प्रहरणम् ॥ २० ॥

**[2]ततोऽस्मिन् प्राहिणोद्द्रोणः शरानधिकविंशतिम् ।**
**अप्राप्तांश्चैव तान् पार्थश्चिच्छेद कृतहस्तवत् ॥ २१ ॥**

**अस्मिन्** पार्थे । किञ्चिदधिकं विंशतिम् ॥ २१ ॥

---

१. न लोकाव्ययनिष्ठाखलर्थतृनाम् । पा.सू. (२/३/६९)
२. ततोऽस्मै । (इति गी. पाठः)

**ततः शतसहस्रेण रथं पार्थस्य वीर्यवान् ।**
**अवाकिरत् ततो द्रोणः शीघ्रमस्त्रं विदर्शयन् ॥ २२ ॥**

**ततः** तच्छेदानन्तरम् ॥ २२ ॥

**हयांश्च रजतप्रख्यान् कङ्कपत्रैः शिलाशितैः ।**
**अवाकिरदमेयात्मा पार्थं सङ्कोपयन्निव ॥ २३ ॥**

**रजतप्रख्यान्** तत्समशोभान् । **सङ्कोपयन्** कोपयुक्तं कुर्वन् । **सङ्कोचयन्निव** इति पाठे शरजालावृतेः सङ्कोचनमर्जुनस्य रचयन्निवेत्यर्थः ॥ २३ ॥

**एवं प्रववृते युद्धं भारद्वाजकिरीटिनोः ।**
**समं विमुञ्चतोः [१]सङ्ख्ये विशिखान् दीप्ततेजसः ॥ २४ ॥**

समं यथा भवति तथा ॥ २४ ॥

**तावुभौ ख्यातकर्माणावुभौ वायुसमौ जवे ।**
**उभौ दिव्यास्त्रविदुषावुभावुत्तमतेजसौ ॥ २५ ॥**

**दिव्यास्त्रविदुषौ** दिव्यास्त्रविद्विषेदाहकौ ॥ २५ ॥

**क्षिपन्तौ शरजालानि मोहयामासतुर्नृपान् ।**
**व्यस्मयन्त ततो योधा ये तत्रासन् समागताः ॥ २६ ॥**

**नृपान्** इतरान् **योधाः** योद्धारः ॥ २६ ॥

**शरान् विसृजतोस्तूर्णं साधु साध्वित्यपूजयन् ।**
**द्रोणं हि समरे कोऽन्यो योद्धुमर्हति फाल्गुनात् ॥ २७ ॥**

**विसृजतोः** विसृजन्तोः । **तूर्णं** भावप्रधानम् । तत्तूर्णताम् विसर्जने शीघ्रं अपूजयन्निति वा । **फाल्गुनात् कोऽन्यः द्रोणं योद्धुं अर्हति** ॥ २७ ॥

---

१. सह्वे इति कचित् ।

**रौद्रः क्षत्रियधर्मोऽयं गुरुणा यद्युद्ध्यत ।**
**इत्यब्रुवन् जनास्तत्र सङ्ग्रामशिरसि स्थिताः ॥ २८ ॥**

**गुरुणाऽपि यत्** यतः **अयं** शिरः सन्नह्य **अयुद्ध्यतेति क्षत्रियधर्मो** दुष्करः ॥ २८ ॥

**वीरौ तावभिसंरब्धौ सन्निकृष्टौ महाभुजौ ।**
**छादयेतां शरव्रातैरन्योन्यमपराजितौ ॥ २९ ॥**

**अन्योन्यं** 'पूर्वपदस्य सुपः । सुर्वक्तव्यः' इति सौ तु सकारलोप उत्वे गुणे पररूपे रूपम् । यथा तथा । **छादयेताम्** इत्यन्वयः ॥ २९ ॥

**विस्फार्य सुमहच्चापं हेमपृष्ठं दुरासदम् ।**
**भारद्वाजोऽथ सङ्क्रुद्धः फाल्गुनं प्रत्यविद्ध्यत ॥ ३० ॥**

**दुरासदम्** इतरैः ॥ ३० ॥

**स सायकमयैर्जालैरर्जुनस्य रथं प्रति ।**
**भानुमद्भिः शिलाधौतैर्भानोः प्राच्छादयत् प्रभाम् ॥ ३१ ॥**

**भानोः प्रभाम् प्राच्छादयत्** । च्छादितवान् ॥ ३१ ॥

**पार्थं च सुमहाबाहुः महावेगैर्महारथः ।**
**विव्याध निशितैर्बाणैर्मेघो वृष्ट्येव पर्वतम् ॥ ३२ ॥**

**वृष्ट्या** वर्षणेन **पर्वतमिव** । अनेन अर्जुनोपरि पतितानामकिञ्चित्करता ध्वन्यते ॥ ३२ ॥

**तथैव दिव्यं गाण्डीवं धनुरादाय पाण्डवः ।**
**शत्रुघ्नं वेगवान् [१]धृष्टो भारसाधनमुत्तमम् ॥ ३३ ॥**

१. हृष्टो (इति गी. पाठः) ।

**धृष्टः** वियातः धीर इति यावत् । तत् त्वरया नाशनम् ।। ३३ ।।

**विससर्ज शरांश्चित्रान् सुवर्णविकृतान् बहून् ।**
**नाशयन् शरवर्षाणि भारद्वाजस्य वीर्यवान् ।। ३४ ।।**

**तूर्णं चापविनिर्मुक्तैस्तदद्भुतमिवाभवत् ।**
**स रथेन चरन् पार्थः प्रेक्षणीयो धनञ्जयः ।। ३५ ।।**

**युगपद्दिक्षु सर्वासु सर्वतोऽस्त्राण्यदर्शयत् ।**
**एकच्छायमिवाकाशं बाणैश्चक्रे समन्ततः ।। ३६ ।।**

**सर्वतः** सर्वाणि ।। ३६ ।।

**नादृश्यत तदा द्रोणो नीहारेणेव संवृतः ।**
**तस्याभवत् तदा रूपं संवृतस्य शरोत्तमैः ।। ३७ ।।**

**जाज्वल्यमानस्य तदा पर्वतस्येव सर्वतः ।**
**दृष्ट्वा तु पार्थस्य रणे शरैः स्वरथमावृतम् ।। ३८ ।।**

नीहारः तुषारः । 'अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्' इत्यमरः । **शरोत्तमैः संवृतस्य तस्य** द्रोणस्य **रूपं जाज्वल्यमानस्य** प्राक् नीहारेणावृतस्य **पर्वतस्येव अभवत्** । नीहारपातानन्तरं यादृच्छिकवेणुसङ्घर्षजवह्निना जाज्वल्यमानस्य पर्वतस्येति वा ।। ३८ ।।

**स विस्फार्य धनुःश्रेष्ठं मेघस्तनितनिस्वनम् ।**
**अग्निचक्रोपमं घोरं व्यकर्षत् परमायुधम् ।। ३९ ।।**

**व्यशातयच्छरांस्तांस्तु द्रोणः समितिशोभनः ।**
**महानभूत् ततः शब्दो वंशानामिव दह्यताम् ।। ४० ।।**

**तान्** अर्जुनमुक्तान् । **वंशानां** वेणूनां ।। ४० ।।

**जाम्बूनदमयैः पुङ्खैश्चित्रचापविनिर्गतैः ।**
**प्राच्छादयदमेयात्मा दिशः सूर्यस्य च प्रभाम् ।। ४१ ।।**

**ततः कनकपुङ्खानां शराणां नतपर्वणाम् ।**
**वियच्चराणां वियति दृश्यन्ते बहवो व्रजाः ।। ४२ ।।**

**द्रोणस्य पुङ्खसक्ताश्च प्रभवन्तः शरासनात् ।**
**एको दीर्घ इवादृश्यदाकाशे संहताः शराः ।। ४३ ।।**

**व्रजाः** समूहाः । **प्रभवन्त** उत्पद्यन्त इव । **आकाशे संहताः** मिलिताः **शराः** दीर्घ एकबाण **इव अदृश्यत्** अदृश्यन्त । यद्वा संहताः शरा प्रभवन्तः तदा **एक एवादृश्यत** इति वा ।।४३।।

**एवं तौ स्वर्णविकृतान् विमुञ्चन्तौ महाशरान् ।**
**आकाशं संवृतं वीरावुल्काभिरिव चक्रतुः ।। ४४ ।।**

**उल्काभिः संवृतमिव** ।। ४४ ।।

**शरास्तयोस्तु विबभुः कङ्कबर्हिणवाससः ।**
**पङ्क्त्यः शरदि खस्थानां हंसानां चरतामिव ।। ४५ ।।**

**पङ्क्त्यः** पङ्क्तिशब्दः क्वचिदीकारान्तोऽपि । 'पङ्क्तिविंशति...'[१] इति निपातनात् पङ्क्ति-शब्दात् 'सर्वतोऽक्तिन्नार्थादित्येके'[२] इत्युक्तेर्ङीप् ।। ४५ ।।

**युद्धं समभवत् तत्र सुसंरब्धं महात्मनोः ।**
**द्रोणपाण्डवयोर्घोरं वृत्रवासवयोरिव ।। ४६ ।।**

---

१. पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् । - पा.सू (५/१/४९)
२. वार्तिकम् ।

राजयः सुसंरब्धो यस्मिन् तत् ।। ४६ ।।

**तौ गजाविव चासाद्य विषाणाग्रैः परस्परम् ।**
**शरैः पूर्णायतोत्सृष्टैरन्योन्यमभिजघ्नतुः ।। ४७ ।।**

**तौ व्यवाहरतां युद्धे संरब्धौ रणशोभिनौ ।**
**उदीरयन्तौ समरे दिव्यान्यस्त्राणि भागशः ।। ४८ ।।**

**युद्धे व्यवाहरतां** आहरतां चक्रतुरिति यावत् ।। ४८ ।।

**अथ त्वाचार्यमुख्येन शरान् सृष्टान् शिलाशितान् ।**
**न्यवारयच्छितैर्बाणैरर्जुनो जयतां वरः ।। ४९ ।।**

**दर्शयन् वीक्षमाणानामस्त्रमुग्रपराक्रमः ।**
**इषुभिस्तूर्णमाकाशं बहुभिश्च समावृणोत् ।। ५० ।।**

**अस्त्रं** तद्बलम् ।। ५० ।।

**जिघांसन्तं नरव्याघ्रमर्जुनं तिग्मतेजसम् ।**
**आचार्यमुख्यः समरे द्रोणः शस्त्रभृतां वरः ।। ५१ ।।**

**जिघांसन्तं अर्जुनं** ज्ञात्वाऽपीति शेषः ।। ५१ ।।

**अर्जुनेन सहाक्रीडच्छरैः सन्नतपर्वभिः ।**
**दिव्यान्यस्त्राणि वर्षन्तं तस्मिन् वै तुमुले रणे ।। ५२ ।।**

**अर्जुनेन सहाक्रीडत्** वात्सल्यात् आक्रीडा यस्याः सा वाऽऽक्रीडः तद्वदाचरन् इति वा। अतो नात्मनेपदम् ।। ५२ ।।

**अस्त्रैरस्त्राणि संवार्य फाल्गुनं समयोधयत् ।**
**तयोरासीत् सम्प्रहारः क्रुद्धयोर्नरसिंहयोः ।। ५३ ।।**

**अमर्षिणोस्तदाऽन्योन्यं देवदानवयोरिव ।**
**ऐन्द्रं वायव्यमाग्नेयमस्त्रमस्त्रेण पाण्डवः ॥ ५४ ॥**

**अमर्षिणोः** असहमानयोः । **वायव्यम्** । 'वाय्वृतुपित्रुषसो यत्'[१] इति यत् । 'आग्नेयं अग्निकलिभ्याम्'[२] इति ढक् ॥ ५४ ॥

**द्रोणेन मुक्तमात्रं तु ग्रसति स्म पुनःपुनः ।**
**एवं शूरौ महेष्वासौ विसृजन्तौ शिताञ्छरान् ॥ ५५ ॥**

**ग्रसति स्म** अग्रसत् । लट् स्मे[३] ॥ ५५ ॥

**एकच्छायं चक्रतुस्तावाकाशं शरवृष्टिभिः ।**
**तत्रार्जुनेन मुक्तानां पततां वै शरीरिषु ॥ ५६ ॥**

**पर्वतेष्विव वज्राणां शराणां श्रूयते स्वनः ।**
**ततो नागा रथाश्चैव वाजिनश्च विशाम्पते ॥ ५७ ॥**

**वज्राणामिति** अभूतोपमेति ज्ञेयम् ॥ ५७ ॥

**शोणिताक्ता व्यदृश्यन्त पुष्पिता इव किंशुकाः ।**
**बाहुभिश्च सकेयूरैः विचित्रैश्च महारथैः ॥ ५८ ॥**

**किंशुकाः** पलाशाः । **सकेयूरैः** साङ्गदैः ॥ ५८ ॥

**सुवर्णचित्रैः कवचैर्ध्वजैश्च विनिपातितैः ।**
**योधैश्च सहितैस्तत्र पार्थबाणप्रपीडितैः ॥ ५९ ॥**

---

१. पा.सू. (४/२/३१)

२. वार्तिकम् ।

३. पा.सू. (३/२/११८)

**बलमासीत् समुद्भ्रान्तं द्रोणार्जुनसमागमे ।**
**विधुन्वानौ तु तौ तत्र धनुषी भारसाधने ॥ ६० ॥**

एतैः दृष्टैः बलं कौरवसैन्यं **समुद्भ्रान्तं** सञ्चलितम् ॥ ६० ॥

**आच्छादयेतामन्योन्यं ततक्षतुरथेषुभिः ।**
**तयोः समभवद्युद्धं तुमुलं भरतर्षभ ॥ ६१ ॥**

**द्रोणकौन्तेययोस्तत्र बलिवासवयोरिव ।**
**अथ पूर्णायतोत्सृष्टैः शरैः सन्नतपर्वभिः ॥ ६२ ॥**

**व्यदारयेतामन्योन्यं प्राणद्यूते प्रवर्तिते ।**
**अथान्तरिक्षे नादोऽभूद्द्रोणं तत्र प्रशंसताम् ॥ ६३ ॥**

**प्राणद्यूते** तद्ग्लहात्मके ॥ ६३ ॥

**दुष्करं कृतवान् द्रोणो यदर्जुनमयोधयत् ।**
**प्रमाथिनं महावीर्यं दृढमुष्टिं दुरासदम् ॥ ६४ ॥**

**अर्जुनमयोधयदिति यत्** तद्रूपं **दुष्करं** कर्म **कृतवान्** इति । **प्रमाथिनं** परबलमर्दकम् ॥६४॥

**जेतारं देवदैत्यानां सर्वेषां च महारथम् ।**
**अविभ्रमं च शिक्षां च लाघवं दूरपातिताम् ॥ ६५ ॥**

**अविभ्रमं** प्रमादाभावम् ॥ ६५ ॥

**पार्थस्य समरे दृष्ट्वा द्रोणस्याभूच्च विस्मयः ।**
**अथ गाण्डीवमुद्यम्य दिव्यं धनुरमर्षणः ॥ ६६ ॥**

**द्रोणस्य** गुरोरप्यभवत् ।। ६५-६६ ।।

**विचकर्ष रणे पार्थो बाहुभ्यां भरतर्षभ ।**
**तस्य बाणमयं वर्षं शलभानामिवायतिम् ।। ६७ ।।**

**आयतिं** सन्ततिम् ।। ६७ ।।

**दृष्ट्वा ते विस्मिताः सर्वे साधु साध्वित्यपूजयन् ।**
**नच बाणान्तरे वायुरस्य शक्नोति सर्पितुम् ।। ६८ ।।**

**बाणान्तरे** तन्मध्ये ।। ६८ ।।

**अनिशं सन्दधानस्य शरानुत्सृजतस्तथा ।**
**ददर्श नान्तरं कश्चित् पार्थस्याददतोऽपि च ।। ६९ ।।**

**आददतः** सन्दधतः उत्सृजतश्च **अन्तरम्** अवकाशम् ।। ६९ ।।

**तथा शीघ्रास्त्रयुद्धे तु वर्तमानेऽसुदारुणे ।**
**शीघ्राच्छीघ्रतरं पार्थः शरानन्यानुदीरयत् ।। ७० ।।**

**असुदारुणे** प्राणग्लहात्मके युद्धे सुदारुणं इति वा । **शीघ्राच्छीघ्रतरम्** ।।७०।।

**ततः शतसहस्राणि शराणां नतपर्वणाम् ।**
**युगपत् प्रापतंस्तत्र द्रोणस्य रथमन्तिकात् ।। ७१ ।।**

**रथमन्तिकात्** रथसमीपे **प्रापतन्** ।। ७१ ।।

**कीर्यमाणे तदा द्रोणे शरैर्गाण्डीवधन्वना ।**
**हाहाकारो महानासीत् सैन्यानां भरतर्षभ ।। ७२ ।।**

**पाण्डवस्य तु शीघ्रास्त्रं मघवा प्रत्यपूजयत् ।**
**गन्धर्वाप्सरसश्चैव ये च तत्र समा गताः ।। ७३ ।।**

तत्र स्वर्ग एवं **समाः** संवत्सराः **गताः** चेदपि एतं दृष्ट्वा **मघवा प्रत्यपूजयत्** इत्याश्चर्यं ये च गन्धर्वाश्च अप्सरसश्च **प्रत्यपूजयत्** प्रत्यपूजयन्नित्य-न्वयः ।। ७३ ।।

**ततो वृन्देन महता रथानां रथयूथपः ।**
**आचार्यपुत्रः सहसा पाण्डवं पर्यवारयत् ।। ७४ ।।**

**सहसा** झटिति ।। ७४ ।।

**अश्वत्थामा तु तत् कर्म हृदयेन महात्मनः ।**
**पूजयामास पार्थस्य कोपं चास्याकरोद्भृशम् ।। ७५ ।।**

**कोपं** बहिः ।। ७५ ।।

**स मन्युवशमापन्नः पार्थमभ्यद्रवद्रणे ।**
**किरञ्छरसहस्राणि पर्जन्य इव वृष्टिमान् ।। ७६ ।।**

[१] **पर्जन्यो** मेघचक्रमानी ।। ७६ ।।

**आवृत्य तु महाबाहुर्यतो द्रौणिस्ततो हयान् ।**
**अन्तरं प्रददौ पार्थो द्रोणस्य व्यपसर्पितुम् ।। ७७ ।।**

**व्यपसर्पितुं** पलायितुम् ।। ७७ ।।

**स तु लब्ध्वाऽन्तरं तूर्णमपायाज्जवनैर्हयैः ।**
**च्छन्नवर्मध्वजः शूरो निकृत्तः परमेषुभिः ।। ७८ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि अष्टपञ्चाशत्तमोऽध्यायः ।।**

---

१. मेघचक्राभिमानी च पर्जन्यः । - इति गीताभाष्ये (३/१५)
जनननात् परसस्यादेः पर्जन्यो मेघसन्ततिः । - इति च गीतातात्पर्यनिर्णये (३/१५)

**अपायात्** एष्यतः नाशान्निमित्तात् । **अपायात्** अर्जुनं विहाय **निकृत्तः** छिन्नः । निकृन्त इति पाठे ह्रस्वान्तकृतीधातो रूपम् ।। ७८ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां अष्टपञ्चाशत्तमोऽध्यायः ।।**

*****

# ५९. एकोनषष्टितमोऽध्यायः

**( अर्जुनाश्वत्थाम्नोः सङ्ग्रामः )**

**वैशम्पायन उवाच -**

**ततो द्रौणिर्महाराज प्रययावर्जुनं रणे ।**
**तं पार्थः प्रतिजग्राह वायुवेगमिवोद्धतम् ।। १ ।।**

[१]**वायुवेगं** पर्वत इव ।। १ ।।

**शरजालेन महता वर्षमाणमिवाम्बुदम् ।**
**तयोर्देवासुरसमः सन्निपातो महानभूत् ।। २ ।।**

**तयोः** अर्जुनाश्वत्थाम्नोः ।। २ ।।

**किरतोः शरजालानि वृत्रवासवयोरिव ।**
**न स्म सूर्यस्तदा भाति न च वाति समीरणः ।। ३ ।।**

---

१. अलं महीपाल तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ।
न पादपोन्मूलनशक्तिरंहः शिलोच्चये मूर्च्छति मारुतस्य ।। - इति रघुवंशे (२/४४)
न मूर्छति शिलोच्चये पवनवेग इत्यज्ञवाक्
यतो हनुमताऽऽहृताः सुबहवो मरुत्सूनुना ।
गभीरतरवारिधिस्थगनचुञ्चवः पर्वताः
जयन्ति कृतसेतवः कृपणहेतवो रक्षसाम् ।। - इति तीर्थप्रबन्धे (४/१७)

**न च भाति स्म** नाभूत् ।। ३ ।।

शरजालावृते व्योम्नि छायाभूते समन्ततः ।
महांश्चटचटाशब्दो योधयोर्हन्यमानयोः ।। ४ ।।

दह्यतामिव वेणूनामासीत् परपुरञ्जय ।
हयानस्यार्जुनः सर्वान् कृतवानल्पजीवितान् ।। ५ ।।

ते राजन् न प्रजानन्त दिशं काञ्चन मोहिताः ।
ततो द्रौणिर्महावीर्यः पार्थस्य विचरिष्यतः ।। ६ ।।

**ते** अल्पजीविताः अश्वाः ।। ६ ।।

विवरं सूक्ष्ममालोक्य ज्यां चिच्छेद क्षुरेण ह ।
तदस्यापूजयन् देवाः कर्म दृष्ट्वाऽतिमानुषम् ।। ७ ।।

**विवरम्** अवकाशम् ।। ७ ।।

द्रोणो भीष्मश्च कर्णश्च कृपश्चैव महारथाः ।
साधु साध्विति भाषन्तो पूजयन् कर्म तस्य तत् ।। ८ ।।

**भाषन्तो** भाषमाणाः ।। ८ ।।

ततो द्रौणिर्धनुः श्रेष्ठमपकृष्य रथर्षभम् ।
पुनरेवाहनत् पार्थं हृदये कङ्कपत्रिभिः ।। ९ ।।

**अपकृष्य** अपाकृष्य । **अहनत्** अहन् ।। ९ ।।

ततः पार्थो महाबाहुः प्रहस्य स्वनवत् तदा ।
योजयामास नवया मौर्व्या गाण्डीवमोजसा ।। १० ।।

**मौर्व्या** ज्यया ।। १० ।।

ततोऽर्धचन्द्रमावृत्य तेन पार्थः समागमत् ।
वारणेनेव मत्तेन मत्तो वारणयूथपः ।। ११ ।।

**अर्धचन्द्रं** अर्धचन्द्राकारं मण्डलं **आवृत्य** रथेन प्रदक्षिणीकृत्य । **तेन** अश्वत्थाम्ना **समागमत्** मिलितोऽभूत् ।। ११ ।।

ततः प्रववृते युद्धं पृथिव्यामेकवीरयोः ।
रणमध्ये द्वयोरेवं सुमहल्लोमहर्षणम् ।। १२ ।।

तौ वीरौ ददृशुः सर्वे कुरवो विस्मयान्विताः ।
युद्ध्यमानौ महावीर्यौ यूथपाविव सङ्गतौ ।। १३ ।।

तौ समाजघ्नतुर्वीरावन्योन्यं पुरुषर्षभौ ।
शरैराशीविषाकारैर्ज्वलद्भिरिव पन्नगैः ।। १४ ।।

**आशीविषाकारैः शरैः** एकः पन्नगैरिव **ज्वलद्भिः** शरैरपरश्चेत्येवं **तौ समाजघ्नतुः** । आकारे कार्ये । दृष्टान्तद्वयं वा ।। १४ ।।

अक्षय्याविषुधी दिव्यौ पाण्डवस्य महात्मनः ।
तेन पार्थो रणे शूरस्तस्थौ गिरिरिवाचलः ।। १५ ।।

**अचलः** अचञ्चलः ।। १५ ।।

अश्वत्थाम्नः पुनर्बाणाः क्षिप्रमप्यस्यतो रणे ।
जग्मुः परिक्षयं तूर्णमभूत् तेनाधिकोऽर्जुनः ।। १६ ।।

**अश्वत्थाम्नः पुनः** अश्वत्थाम्नस्तु ।। १६ ।।

ततः कर्णो महाचापं विकृष्याभ्यधिकं तदा ।
अवाक्षिपत् ततः शब्दो हाहाकारो महानभूत् ।। १७ ।।

**हाहाकारः** द्रौणिपराजयात् ।। १७ ।।

**ततश्चक्षुर्दधे पार्थो यत्र विस्फार्यते धनुः ।**
**ददर्श तत्र राधेयं तस्य कोपो व्यवर्धत ॥ १८ ॥**

**तस्य** अर्जुनस्य ॥ १८ ॥

**स रोषवशमापन्नः कर्णमेव जिघांसया ।**
**तमैक्षत विवृत्ताभ्यां नेत्राभ्यां कुरुपुङ्गवः ॥ १९ ॥**

**तमेव जिघांसयैक्षत** ॥ १९ ॥

**तथा तु विमुखे पार्थे द्रोणपुत्रस्य सायकान् ।**
**त्वरिताः पुरुषा राजन्नुपाजह्रुः सहस्रशः ॥ २० ॥**

**विमुखे** अश्वत्थामानं त्यक्त्वा कर्णाभिमुखे सतीत्यर्थः । 'तुविप्रतिनरं तु विद्युम्ना' इत्यत्रेव तुविशब्दो महत्त्ववाची । तथाच अश्वत्थाम्नः पराजयो जात इति महर्मुखे । विकसितवदने सतीति वा । 'अतुविमुखे' अश्वत्थामापेक्षया अतुविरः महान् कर्णः । तदभिमुखे सतीति वा । 'महान् प्रति प्रतिस्थश्च' इति ऋग्भाष्योक्तेः । माधवोऽपि 'तु विद्युम्ना' इत्यत्र तुविद्युम्नमहाधनेति व्याचख्यौ । वेदनिघण्टुश्च पुरुतुविश्वमित्यादिः । अतो नाश्लीलतार्जुनविषय इति ज्ञेयम् ॥ २० ॥

**उत्सृज्य च महाबाहुर्द्रोणपुत्रं धनञ्जयः ।**
**अभिदुद्राव सहसा कर्णमेव सपत्नजित् ॥ २१ ॥**

**सपत्नजित्** वैरिजेता ॥ २१ ॥

**तमभिद्रुत्य कौन्तेयः क्रोधसंरक्तलोचनः ।**
**कामयन् द्वैरथं तेन युद्धे वचनमब्रवीत् ॥ २२ ॥**

**॥ इति मन्महाभारते विराटपर्वणि गोहरणपर्वणि एकोनषष्टितमोऽध्यायः ॥**

**युद्धे प्रस्तुते वचनमब्रवीत्** । **कामयन्** कामयानः ।। २२ ।।

।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां एकोनषष्टितमोऽध्यायः ।।

*****

# ६०. षष्टितमोऽध्यायः

( कर्णार्जुनयोर्युद्धे कर्णस्य पराजयः )

**अर्जुन उवाच -**

**कर्ण यत् ते सभामध्ये बहु वाचा विकत्थितम् ।**
**न मे युधि समोऽस्तीति तदिदं समुपस्थितम् ।। १ ।।**

**न समोऽस्तीति यत् विकत्थितम्** । **तत्** तदुद्दिश्य । इदं फलं **समुपस्थितम्** । तथाकरणकाल आयात इति यावत् ।। १ ।।

**सोऽद्य कर्ण मया सार्धं व्यवहृत्य महामृधे ।**
**ज्ञास्यसे बलमात्मानं न चान्यानवमन्यसे ।। २ ।।**

**व्यवहृत्य** व्यवहारं कृत्वा । शरादिमोचनव्यापारं कृत्वेति यावत् । **आत्मानं** स्वं अहं कियानिति । **बलं** च कियन्ममेति च । **ज्ञास्यसे** । 'अनुपसर्गात् ज्ञः'[1] इत्यात्मनेपदम् । जानीषे ततश्चान्यान् राज्ञः मदादीन् वा । **नावमन्यसे** । अवमानितान् न कुर्याः । अहन्ताशान्तेरिति भावः ।। २ ।।

**अवोचः परुषा वाचो धर्ममुत्सृज्य केवलम् ।**
**इदं तु दुष्करं मन्ये यदिदं ते चिकीर्षितम् ।। ३ ।।**

१. पा.सू. (१/३/७६)

**धर्मं** 'नारुन्तदः स्यात् न नृशंसवादी' इत्यादि **धर्ममुत्सृज्य केवलं परुषा वाचो अवोचः** इति यत्तदिदं सुकरमिति शेषः । **इदं तु दुष्करं** इदं किं ते त्वया **चिकीर्षितं** युद्धमियत् ।। ३ ।।

**यत् त्वया कथितं पूर्वं मामनासाद्य किञ्चन ।**
**तदद्य कुरु राधेय कुरुमध्ये मया सह ।। ४ ।।**

**अनासाद्य** परोक्षमिति यावत् । **कुरुमध्ये** तत्सभामध्ये ।। ४ ।।

**यत् सभायां स पाञ्चालीं क्लिश्यमानां दुरात्मभिः ।**
**दृष्टवानसि तस्याद्य फलमाप्नुहि केवलम् ।। ५ ।।**

**दुरात्मभिः** दुःशासनादिभिः **स** त्वम् ।। ५ ।।

**धर्मपाशनिबद्धेन यन्मया मर्षितं पुरा ।**
**तस्य राधेय कोपस्य विजयं पश्य मे मृधे ।। ६ ।।**

निबद्धः पाशो मौर्वी स चासौ निबद्धश्च धर्मो धनुश्चासौ पाशनिबद्धश्च तेन सज्या समासज्ज्यन्त धनुषेति वा तद्धता मयेति वा । **धर्मपाशनिबद्धेन** धर्मराजलक्षणो यः पाशस्तन्निबद्धेनेत्यप्यर्थः । **मे** मम **तस्य कोपस्य विजयं** पराक्रमम् ।। ६ ।।

**वने द्वादश वर्षाणि यानि सोढानि दुर्मते ।**
**तस्याद्य प्रतिकोपस्य फलं प्राप्नुहि सम्प्रति ।। ७ ।।**

**द्वादश वर्षाणि वने यानि** अपकृतानि सोढानि ढत्व ढोढ ओत्वादिकं च सलक्षणमुक्तान्यनुसन्धेयानि । **तस्य प्रतिकोपस्य** तज्जनितकोपस्येति फलितोऽर्थः । **अद्य फलं प्राप्नुहि** । **सम्प्रति** एतीत्यन्वयः ।। ७ ।।

**एहि कर्ण मया सार्धं प्रतियुद्ध्यस्व सङ्गरे ।**
**प्रेक्षकाः कुरवः सर्वे भवन्तु तव सैनिकाः ।। ८ ।।**

**सङ्गरे** प्रतिज्ञाविषये – 'प्रतिज्ञाजिसंविदापत्सु सङ्गरः' इत्यमरः ।। ८ ।।

**कर्ण उवाच -**

**ब्रवीषि वाचा यत् पार्थ कर्मणा तत् समाचर ।**
**अतिशेते हि ते वाक्यं कर्मैतत् प्रथितं भुवि ।। ९ ।।**

**कर्मणा** युद्धरूपेण । **ते** तवैतत् **कर्म** युद्धरूपं **प्रथितं** तथापि **ते वाक्यं** तदप्यतिशेते । करणं स्वल्पं वाक्यं बहुलमित्यर्थः ।। ९ ।।

**यत् त्वया मर्षितं पूर्वं तदशक्तेन मर्षितम् ।**
**इतो गृह्णीमहे पार्थ तव दृष्ट्वा पराक्रमम् ।। १० ।।**

**त्वया मर्षितम्** इति **यत्** तत्सत्यम्, परं तु अशक्तेन । **इतः** इतःपरं **गृह्णीमहे** [१]स्वरि-तञितत्वात् क्रियाफलस्यात्मगामित्वात् आत्मनेपदता । यद्वा गृह्णीमेति लोट् । हे **पार्थे**त्यन्वयः । वचः सत्यमिति शेषः ।। १० ।।

**धर्मपाशनिबद्धेन यत् त्वया मर्षितं पुरा ।**
**तथैव बद्धमात्मानमबद्धमिव मन्यसे ।। ११ ।।**

धर्मपाशनिबद्धेन त्वया पुरा यन्मर्षितं तदिदानीमपि कार्यं कुत इत्यत आह– **तथेति** ।। **बद्धं** धर्मपाशेन । तावत्कालानतिक्रमादिति भावः ।। ११ ।।

**यदि तावद्वने वासो यथोक्तश्चरितस्त्वया ।**
**तत् त्वं धर्मार्थवित् क्लिष्टः स मया योद्धुमिच्छसि ।।१२।।**

तदेवाह– **यदीति** ।। **यदि वने वासः** यथाऽस्माभिरुक्तस्तथा तावच्चरितश्चेत् । **तत्** तर्हि त्वं **धर्मार्थवित्** । कालस्य न्यूनत्वेन तथा तु न चरितः । अतो न **धर्मार्थवित्** केवलं क्लिष्ट इति **मया योद्धुमिच्छसि** ।। १२ ।।

---

१. स्वरितञितः कर्त्रभिप्राये क्रियाफले । - पा.सू (१/३/७२)

**यदि शक्रः स्वयं पार्थ युद्ध्यते तव कारणात् ।**
**तथाऽपि न व्यथा काचिन्मम स्याद् विक्रमिष्यतः ॥१३॥**

**तव कारणात्** त्वन्निमित्तं **व्यथा** भयं **विक्रमिष्यतः** पराक्रमं कुर्वतः ॥ १३ ॥

**अयं कौन्तेय कामस्ते नचिरात् समुपस्थितः ।**
**योत्स्यसे हि मया सार्धमद्य द्रक्ष्यसि मे बलम् ॥ १४ ॥**

**ते कामो** मनोरथः **न चिरात्** शीघ्रम् । तमेवाह– **योत्स्यस** इति ॥ ततश्च **मे बलं द्रक्ष्यसि** ॥ १४ ॥

**अर्जुन उवाच -**

**इदानीमेव तावत् त्वमपयातो रणान्मम ।**
**तेन जीवसि राधेय निहतस्त्वनुजस्तव ॥ १५ ॥**

ततो द्रक्षसि मे बलमित्येतदसहमानस्तदनुभूतेनैव तमुत्तरयति – **इदानीमिति** ॥ **तेन** अपयानेन । **तवानुजः** सङ्ग्रामजिन्नामा ॥ १५ ॥

**भ्रातरं घातयित्वा कस्त्यक्त्वा रणशिरश्च कः ।**
**त्वदन्यः कः पुमान् सत्सु ब्रूयादेवं व्यवस्थितः ॥ १६ ॥**

**भ्रातरं घातयित्वा एवं व्यवस्थितः । को ब्रूयात् । रणशिरश्च** त्यक्त्वा को ब्रूयात् **सत्सु** सज्जनेषु शूरेषु एवमनुभूतेषु **सत्सु** त्वदन्यो व्यवस्थितः सन् को वा **एवं ब्रूयात्** इति योजना ॥ १६ ॥

**वैशम्पायन उवाच -**

**इति कर्णं ब्रुवन्नेव बीभत्सुरपराजितः ।**
**अभ्ययाद्विसृजन् बाणान् कायावरणभेदिनः ॥ १७ ॥**

**कायावरणं** कवचम् । शरवर्षेण जलवर्षेणेति मेघपक्षेऽन्वेति । अन्यत्र शराः बाणाः ॥१७॥

प्रतिजग्राह तं कर्णः प्रीयमाणो महारथः ।
महता शरवर्षेण वर्षमाणमिवाम्बुदम् ॥ १८ ॥

उत्पेतुः शरजालानि घोररूपाणि सर्वशः ।
अविध्यदश्वान् बाह्वोश्च हस्तावापं पृथक् पृथक् ॥१९॥

सोऽमृष्यमाणः कर्णस्य निषङ्गस्यावलम्बनम् ।
चिच्छेद निशिताग्रेण शरेण नतपर्वणा ॥ २० ॥

**सः** अर्जुनः **निषङ्गस्यावलम्बनं** रज्जुरूपम् ॥ २० ॥

उपासङ्गादुपादाय कर्णो बाणानथापरान् ।
विव्याध पाण्डवं हस्ते तस्य मुष्टिरशीर्यत ॥ २१ ॥

**उपासङ्गाद्** अन्यस्मात् । **तस्य** अर्जुनस्य । **मुष्टिः** मुष्टिबन्धः । **अशीर्यत** विश्लिष्टोऽभूत् ॥ २१ ॥

ततः पार्थो महाबाहुः कर्णस्य धनुरच्छिनत् ।
स शक्तिं प्राहिणोत् तस्य तां पार्थो व्यधमच्छरैः ॥२२॥

**स** कर्णः ॥ २२ ॥

ततोऽनुपेतुर्बहवो राधेयस्य पदानुगाः ।
तांश्च गाण्डीवनिर्मुक्तैः प्राहिणोद्यमसादनम् ॥ २३ ॥

ततोऽस्याश्वाञ्छरैस्तीक्ष्णैर्बीभत्सुर्भारसाधनैः ।
आकर्णमुक्तैरवधीत् ते हताः प्रापतन् भुवि ॥ २४ ॥

**अस्य** कर्णस्य ॥ २४ ॥

अथापरेण बाणेन ज्वलितेन महौजसा ।
विव्याध कर्णं कौन्तेयस्तीक्ष्णेनोरसि वीर्यवान् ॥ २५ ॥

**तस्य भित्त्वा तनुत्राणं कायमभ्यगमच्छरः ।**
**ततः स तमसाऽऽविष्टो न स्म किञ्चित् प्रजज्ञिवान् ।।२६।।**

**कायं** मध्यदेहं । **तमसा** मोहनम् । **प्रजज्ञिवान्** ज्ञातवान् ।। २६ ।।

**स गाढवेदनो हित्वा रणं प्रायादुदङ्मुखः ।**
**ततोऽर्जुन उदक्रोशदुत्तरश्च महारथः ।। २७ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि षष्टितमोऽध्यायः ।।**

**स** कर्णो **गाढवेदनः** सन् **रणं हित्वा उदङ्मुखः** सन् मन्दं **प्रायात्** । **उदक्रोशत्** आह्वयामास ।। २७ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां षष्टितमोऽध्यायः ।।**

*****

# ६१. एकषष्टितमोऽध्यायः

( अर्जुनदुःशासनयोर्युद्धे दुःशासनस्य पराभवः । )

**वैशम्पायन उवाच -**

**ततो वैकर्तनं जित्वा पार्थो वैराटिमब्रवीत् ।**
**एतन्मां प्रापयानीकं यत्र तालो हिरण्मयः ।। १ ।।**

**तालः** द्रुमविशेषसदृशो ध्वजः ।। १ ।।

**अत्र शान्तनवो भीष्मो रथेऽस्माकं पितामहः ।**
**काङ्क्षमाणो मया युद्धं तिष्ठत्यमरदर्शनः ।। २ ।।**

**काङ्क्षमाणः** काङ्क्षन् । स काङ्क्षमाणः इति त्वं काङ्क्षमाणो अन्यत्र इति वा स्मशब्दोऽत्राध्याहार्यः ।। २ ।।

**अथ सैन्यं महद्दृष्ट्वा रथनागहयाकुलम् ।**
**अब्रवीदुत्तरः पार्थमपविद्धः शरैर्भृशम् ।। ३ ।।**

प्राग् विशकलितं मिलितमेकत्रेति **महत्** इत्युक्तिः । **अपविद्धः** ताडितः ।। ३ ।।

**नाहं शक्ष्यामि वीरेह नियन्तुं ते हयोत्तमान् ।**
**विषीदन्ति मम प्राणा मनो विह्वलतीव मे ।। ४ ।।**

**विह्वलति** चञ्चलीभवति ।। ४ ।।

**अस्त्राणामिह दिव्यानां प्रभावः सम्प्रयुज्यताम् ।**
**त्वया च कुरुभिश्चैव भ्रमतीव दिशो दश ।। ५ ।।**

**सम्प्रयुज्यतां** प्रयुज्यमानानां यः **प्रभावः** । तस्मात् मम **दश दिशः** ।। ५ ।।

**गन्धेन मूर्च्छितश्चाहं वसारुधिरमेदसाम् ।**
**द्वैधीभूतं मनो मेऽद्य तव चैव प्रपश्यतः ।। ६ ।।**

**वसारुधिरमेदसां** मृतसम्बन्धिनाम् । **तव** त्वां च **प्रपश्यतः** ।। ६ ।।

**अदृष्टपूर्वः शूराणां मया [१]सङ्ख्ये समागमः ।**
**गदापातेन महता शङ्खानां निस्वनेन च ।। ७ ।।**

**शूराणां** त्वद्वत्प्रतिपक्षिसदृशानाम् ।। ७ ।।

**सिंहनादैश्च शूराणां गजानां बृंहितैस्तथा ।**
**गाण्डीवशब्देन भृशमशनिप्रतिमेन च ।। ८ ।।**

**बृंहितैः** । शब्दमात्रमत्र बृंहितम् । **अशनिः** वज्रः ।। ८ ।।

---

१. सङ्ख्ये । इति क्वचित् ।

**श्रुतिः स्मृतिश्च मे वीर प्रणष्टा मूढचेतसः ।**
**अलातचक्रप्रतिमं मण्डलं सततं त्वया ॥ ९ ॥**

**प्रणष्टा** इति पृथगन्वयः ॥ ९ ॥

**व्याक्षिप्यमाणं समरे गाण्डीवं च प्रकर्षतः ।**
**दृष्टिः प्रचलिता वीर हृदयं दीर्यतीव मे ॥ १० ॥**

**प्रकर्षतः** गाण्डीवं दृष्ट्वा **दृष्टिः** लोचनम् ॥ १० ॥

**वपुश्चोग्रं तव रणे क्रुद्धस्यैव पिनाकिनः ।**
**व्यायच्छतस्तव भुजं दष्ट्वा भीर्मे भवत्यपि ॥ ११ ॥**

**क्रुद्धस्य** इत्युभयान्वयि ॥ ११ ॥

**नाददानं न सन्धानं न मुञ्चन्तं शरोत्तमान् ।**
**त्वामहं सम्प्रपश्यामि पश्यन्नपि न चेतनः ॥ १२ ॥**

**अवसीदन्ति मे प्राणा भूरियं चलतीव च ।**
**नच प्रतोदं रश्मींश्च संयतं शक्तिरस्ति मे ॥ १३ ॥**

**प्रतोदं** धर्तुमिति शेषः । **रश्मीन्** रज्जूः । **संयतं** नियन्तुम् ॥ १३ ॥

**अर्जुन उवाच -**

**मा भैषीः स्तम्भयात्मानं त्वयाऽपि नरपुङ्गव ।**
**अत्यद्भुतानि कर्माणि कृतानि रणमूर्धनि ॥ १४ ॥**

**आत्मानं** मनः । **स्तम्भय** निश्चलं कुरु । **त्वया अत्यद्भुतानि कर्माणि कृतानि** इति प्रोत्साहनम् ॥ १४ ॥

**राजपुत्रोऽसि भद्रं ते कुले मत्स्यस्य विश्रुते ।**
**जातस्त्वं शत्रुदमने नावसीदितुमर्हसि ॥ १५ ॥**

**मत्स्यस्य विश्रुते कुले जात** इति त्वं चान्यं मामिति यावत् । गतम् । **अवसीदितुम्** । सदः शत्रन्तात् 'प्रातिपदिकान्त...'[१] इति णिचि 'णिजन्तान्नुम्' इति आगमशासनस्यानित्यत्वादिह भावे 'सञ्ज्ञापूर्वको विधिरनित्यः'[२] इति नणि लोपः क्लेशयितुम् ॥ १५ ॥

**धृतिं कृत्वा सुविपुलां राजपुत्र रथे मम ।**
**युद्ध्यमानस्य समरे हयान् संयच्छ शत्रुहन् ॥ १६ ॥**

यद्वा रे **सम** यन्तृत्वयोग्य । **समरे** रणाङ्गणे इति वा । **युद्ध्यमानसि** युद्ध्यमानवदाचरसि । अत एवं न कर्तव्यमिति भावः । **असमेति** ॥ १६ ॥

**वैशम्पायन उवाच -**

**एवमुक्त्वा महाबाहुर्वैराटिं नरसत्तमः ।**
**अर्जुनो रथिनां श्रेष्ठ उत्तरं वाक्यमब्रवीत् ॥ १७ ॥**

**महाबाहुः** एवमुक्त्वा सान्त्वनपूर्वकम् **वाक्यं** प्रकृतानुकूलम् ॥ १७ ॥

**सेनाग्रमाशु भीष्मस्य प्रापयस्वैतदेव माम् ।**
**आच्छेत्स्याम्यहमेतस्य धनुर्ज्यामपि चाहवे ॥ १८ ॥**

एतत् **सेनाग्रम्** । **एतस्य** भीष्मस्य । **धनुर्ज्यां** धनुषो ज्याम् । मौर्वी **आच्छेत्स्यामि** छिन्द्याम् । बाणमोचनमूलत्वात् तस्याः ॥ १८ ॥

---

१. प्रातिपदिकान्तनुम्विभक्तिषु च । पा.सू. (८/४/११)

२. वार्तिकम् ।

**अस्यन्तं दिव्यमस्त्रं मां चित्रमद्य निशामय ।**
**शतह्रदामिवायान्तीं स्तनयित्नोरिवाम्बरे ॥ १९ ॥**

**चित्रं दिव्यमस्त्रं अस्यन्तं** क्षिपन्तं मां **स्तनयित्नोः** बलाहकस्य सम्बन्धिनम् । **शतह्रदां** तटितमिव **निशामय** पश्य ॥ १९ ॥

**सुवर्णपृष्ठं गाण्डीवं द्रक्ष्यन्ति कुरवो मम ।**
**दक्षिणेनाथ वामेन कतरेण स्विदस्यति ॥ २० ॥**

स्वचातुरींतत्सान्त्वनार्थंकिञ्चिदुदञ्चयति– **सुवर्णपृष्ठमिति** ।।तन्मात्रंकुरवः**सङ्गता द्रक्ष्यन्ति** । परं त्विदमिति सन्धानमोचनादिनिश्चयमलभमानाः दक्षिणेन वा वामेन वा । अनयोः मध्ये **कतरेण** हस्तेन । **अस्यति** बाणानिति ।। २० ।।

**इति मां सङ्गताः सर्वे तर्कयिष्यन्ति शत्रवः ।**
**शोणितोदां रथावर्तां नागनक्रां दुरत्ययाम् ॥ २१ ॥**
**नदीं प्रस्कन्दयिष्यामि परलोकप्रवाहिनीम् ।**
**पाणिपादशिरःपृष्ठबाहुशाखानिरन्तरम् ॥ २२ ॥**

**तर्कयिष्यन्ति** । तथा लाघवं मम निशामय ।। **शोणितोदाम्** रक्तरूपोदकवतीम् । 'उत्तरपदस्य'[१] इत्युदादेशः । गतम् । रथा एवावर्ता अम्भसां भ्रमा यस्याः सा । नागा गजा एव नक्रा यस्याः सा । 'नक्रस्तु कुम्भीरः' इत्यमरः । प्रस्कन्दनमत्र प्रवाहः । परलोकं प्रति प्रतिपक्षिणः प्रवहन्तीति सा ताम् । इति **मां सङ्गताः सर्वे तर्कयिष्यन्ति शत्रवः** । पाण्यादय एव शाखास्ताभिः निरन्तरं निश्छिद्रम् ।। २१, २२ ।।

**वनं कुरूणां च्छेत्स्यामि शरैः सन्नतपर्वभिः ।**
**जयतः कौरवीं सेनामेकस्य मम धन्विनः ॥ २३ ॥**

---

१. पा.सू. (७/३/१०)

**शतं मार्गा भविष्यन्ति पावकस्येव कानने ।**
**मया चक्रमिवाविद्धं सैन्यं द्रक्ष्यसि केवलम् ॥ २४ ॥**

**शतं मार्गाः भविष्यन्ति** । तत्र तत्पररथिकनिपातनात् । **अविद्धं** भ्रामितं शिक्षितं गुरुभ्यः ॥ २४ ॥

**इष्वस्त्रे शिक्षितं चित्रमहं दर्शयिताऽस्मि ते ।**
**असम्भ्रान्तो रथे तिष्ठ समेषु विषमेषु च ॥ २५ ॥**

**दिवमावृत्य तिष्ठन्तं गिरिं भिन्द्यां स्म पत्रिभिः ।**
**अहमिन्द्रस्य वचनात् सङ्ग्रामेऽभ्यहनन् परान् ॥ २६ ॥**

**दिवं**[1] सहस्रधनुःपरिमितान्तरिक्षोर्ध्वभागम् । **परान्** शत्रून् ॥ २६ ॥

**पौलोमान् कालकञ्जांश्च सहस्राणि शतानि च ।**
**अहमिन्द्राद्दृढां मुष्टिं ब्रह्मणः कृतहस्तताम् ॥ २७ ॥**

**इन्द्रात् दृढां मुष्टिं** दृढमुष्टित्वं अशिक्षमिति शेषः । मुष्टिशब्दः स्त्रीलिङ्गोऽपि । 'स्त्रीपुंसयोः'[2] इत्यधिकृत्य 'गोमणियष्टिमुष्टिपाटलिवस्तिशाल्मलित्रुटिमसिमरीचयः'[3] इति लिङ्गानुशासनोक्तेः । **ब्रह्मणः कृतहस्ततां** हस्तलाघवम् । एवमनुवादेनैव स्वर्गवृत्तान्तशिक्षा कथाऽपि ज्ञेया ॥ २७ ॥

**प्रगाढे तुमुलं चित्रमिति विद्धि प्रजापतेः ।**
**अहं पारे समुद्रस्य हिरण्यपुरवासिनाम् ॥ २८ ॥**

प्रगाढमित्यादिचतुष्टयं **प्रजापतेः** रुद्रात् । **समुद्रस्य पारे** लवणसमुद्रस्य पारे तीरे ॥२८॥

---

१. सहस्रधनुष्यस्तूर्ध्वं द्युशब्देनापि भण्यते । - इति भागवततात्पर्ये (२/७/२७)

२. सूत्रम् (१७०) ।

३. सूत्रम् (१७१) ।

**जित्वा षष्टिं सहस्राणि रथिनामुग्रधन्विनाम् ।**
**शीर्यमाणानि कूलानि प्रवृद्धेनेव [१]वायुना ।। २९ ।।**

**जित्वा** यातः । **वायुना** अतिप्रवृद्धेन ।। २९ ।।

**मया कुरूणां वृन्दानि पात्यमानानि पश्य वै ।**
**ध्वजवृक्षं पत्तितृणं रथसिंहगणायुतम् ।। ३० ।।**

ध्वजा एव वृक्षा यस्मिन् । पत्तय तृणानि यस्मिन् । रथा एव सिंहगणाः तैरासमन्तात् युतम् ।। ३० ।।

**वनमादीपयिष्यामि कुरूणामस्त्रतेजसा ।**
**तानहं रथनीडेभ्यः शरैः सन्नतपर्वभिः ।। ३१ ।।**

**वनं आदीपयिष्यामि** धक्ष्यामि **रथनीडेभ्यः** ।। ३१ ।।

**यत्तान् सर्वानतिबलान् योत्स्यमानानवस्थितान् ।**
**एकः सङ्कालयिष्यामि वज्रपाणिरिवासुरान् ।। ३२ ।।**

**सङ्कालयिष्यामि** पातयिष्यामि । 'कल कामधेनुः इति च पठन्ति'[२] इत्युक्तेः ।।३२।।

**रौद्रं रुद्रादहं ह्यस्त्रं वारुणं वरुणादपि ।**
**अस्त्रमाग्नेयमग्नेश्च वायव्यं मातरिश्वनः ।। ३३ ।।**

तत्तद्देवताकं सर्वमस्त्रं स्वस्वगुरुभ्य एव सर्वैः प्राप्तानि मम तु सर्वास्त्राणां साक्षात् तद्देवेभ्य एव शिक्षेति विशेषमाह – **रौद्रमिति** ।। ३३ ।।

---

१. वारिणा (इति गी. पाठे)

२. '....**कल कामधेनुः**' इति च पठन्ति....' । -इति गीताभाष्ये (११/३२)

**वज्रादीनि तथाऽस्त्राणि शक्रादहमवाप्तवान् ।**
**धार्तराष्ट्रवनं घोरं नरसिंहाभिरक्षितम् ।**
**अहमुत्पाटयिष्यामि वैराटे व्येतु ते भयम् ॥ ३४ ॥**

**नरसिंहाभिरक्षितं** नरसिंहैर्भीष्मादिभिरभिरक्षितम् ॥ ३४ ॥

**वैशम्पायन उवाच -**

**एवमाश्वासितस्तेन वैराटिः सव्यसाचिना ।**
**व्यवागहाद्रथानीकं भीमं भीष्माभिरक्षितम् ॥ ३५ ॥**

**व्यवागहत्** व्यवगाहत । **भीमं** भयङ्करम् ॥ ३५ ॥

**तमायान्तं महाबाहुं जिगीषन्तं रणे कुरून् ।**
**अभ्यवारयदव्यग्रः क्रूरकर्माऽऽपगासुतः ॥ ३६ ॥**

आपगाया अपगाया वा सुतः ॥ ३६ ॥

**तस्य जिष्णुरुपावृत्य ध्वजं मूलादपातयत् ।**
**विकृष्य कलधौताग्रैः स विद्धः प्रापतद्भुवि ॥ ३७ ॥**

**तस्य** भीष्मस्य **ध्वजं कलधौताग्रैः** [१]कलधौतं रूप्यम् सुवर्णं वाऽग्रे येषां तैः शरैः विकृष्य । गाण्डीवमुक्तैरिति शेषः । **मूलात्** स्वमूलात् **अपातयत्** । **स विद्धः** सन् भुव्येव **प्रापतत्** ॥ ३७ ॥

**तं चित्रमाल्याभरणाः कृतविद्या मनस्विनः ।**
**आगच्छन् भीमधन्वानं चत्वारश्च महाबलाः ॥ ३८ ॥**

**दुःशासनो विकर्णश्च दुःसहोऽथ विविंशतिः ।**
**आगत्य भीमधन्वानं बीभत्सुं पर्यवारयन् ॥ ३९ ॥**

---

१. 'कलधौतं रूप्यहेम्नोः' इत्यमरः । 'कलधौतं सुवर्णं स्याद्रजते च नपुंसकम्' इति च मेदिनी ।

चत्वार आह– **दुःशासन इति** । विविंशतिना सह वर्तत इति तथा ॥ ३९ ॥

**दुःशासनस्तु भल्लेन विद्ध्वा वैराटिमुत्तरम् ।**
**द्वितीयेनार्जुनं वीरः प्रत्यविद्ध्यत् स्तनान्तरे ॥ ४० ॥**

**तस्य जिष्णुरुपावृत्य पृथुधारेण कार्मुकम् ।**
**चकर्त गार्ध्रपत्रेण जातरूपपरिष्कृतम् ॥ ४१ ॥**

**उपावृत्य** ईषदावृत्य । **तस्य** दुःशासनस्य ॥ ४१ ॥

**अथैनं पञ्चभिः पश्चात् प्रत्यविद्ध्यत् स्तनान्तरे ।**
**सोपयातो रणं हित्वा पार्थबाणप्रपीडितः ॥ ४२ ॥**

**तं विकर्णः शरैस्तीक्ष्णैर्गृध्रपत्रैरजिह्मगैः ।**
**विव्याध परवीरघ्नमर्जुनं धृतराष्ट्रजः ॥ ४३ ॥**

**ततस्तमपि कौन्तेयः शरेणानतपर्वणा ।**
**ललाटेऽभ्यहनत् तूर्णं स विद्धः प्रापतद्रथात् ॥ ४४ ॥**

**ततः पार्थमभिद्रुत्य दुस्सहः सविविंशतिः ।**
**अवाकिरच्छरैस्तीक्ष्णैः परीप्सुः भ्रातरं रणे ॥ ४५ ॥**

**भ्रातरं** विकर्णम् ॥ ४५ ॥

**तावुभौ गार्ध्रपत्राभ्यां निशिताभ्यां धनञ्जयः ।**
**विद्ध्वा युगपदव्यग्रस्तयोर्वाहानसूदयत् ॥ ४६ ॥**

**युगपद्** एकधैव **वाहान्** अश्वान् ॥ ४६ ॥

**तौ हताश्वौ विभिन्नाङ्गौ धृतराष्ट्रात्मजावुभौ ।**
**अभिपत्य रथैरन्यैरपनीतौ पदानुगैः ॥ ४७ ॥**

**पदानुगैः** कर्तृभिः **रथैः** करणैः ।। ४७ ।।

**सर्वा दिशश्चाभ्यपतद्बीभत्सुरपराजितः ।**
**किरीटमाली कौन्तेयो लब्धलक्ष्यो महाबलः ।। ४८ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि एकषष्टितमोऽध्यायः ।।**

यद्यपि **लब्धलक्ष्यः** बहुवारं विद्धलक्ष्यः प्राप्तविजयलक्ष्य इति वा । तथापि प्रतियोद्धभावादलब्धलक्ष्यः सन् । अप्राप्तताडनीयः सन् । **सर्वाः दिशः अभ्यपतत्** ।।४८।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां एकषष्टितमोऽध्यायः ।।**

*****

# ६२. द्विषष्टितमोऽध्यायः

**( अर्जुनस्य कौरवैः सह सङ्ग्रामः । )**

**वैशम्पायन उवाच -**

**अथ सङ्गम्य सर्वे ते कौरवाणां महारथाः ।**
**अर्जुनं सहिता यत्ताः प्रत्ययुद्ध्यन्त भारत ।। १ ।।**

**सङ्गम्य** मिलित्वा ।। १ ।।

**स सायकमयैर्जालैः सर्वतस्तान् महारथान् ।**
**प्राच्छादयदमेयात्मा नीहारेणेव पर्वतान् ।। २ ।।**

**सः** अर्जुनः **जालैः** वागुराभिः । **नीहारेणेव** तद्देवः । **पर्वतानाच्छादयति** तद्वत् ।। २ ।।

**नदद्भिश्च महानागैर्हेषमाणैश्च वाजिभिः ।**
**भेरीशङ्खनिनादैश्च स शब्दस्तुमुलोऽभवत् ।। ३ ।।**

तुमुलो रणसङ्कुलः ।। ३ ।।

नराश्वकायान् निर्भिद्य लौहानि कवचानि च ।
पार्थस्य शरजालानि विनिष्पेतुः सहस्रशः ।। ४ ।।

लौहानि तद्विकृतानि ।। ४ ।।

त्वरमाणः शरानस्यन् पाण्डवः प्रबभौ रणे ।
मध्यन्दिनगतोऽर्चिष्माञ्छरदीव दिवाकरः ।। ५ ।।

उपप्लवन्ति वित्रस्ता रथेभ्यो रथिनस्तथा ।
सादिनश्चाश्वपृष्ठेभ्यो भूमौ चैव पदातयः ।। ६ ।।

भूमौ उपप्लवन्ति पतन्तीत्यर्थः ।। ६ ।।

शरैः सञ्छिद्यमानानां कवचानां महात्मनाम् ।
ताम्रराजतलौहानां प्रादुरासीन्महास्वनः ।। ७ ।।

महात्मनां योद्धृणाम् ।। ७ ।।

च्छन्नमायोधनं सर्वं शरीरैर्गतचेतसाम् ।
गजाश्वसादिनां तत्र शितबाणात्तजीवितैः ।। ८ ।।

शितबाणैरात्तानि जीवितानि येषां तैः शरीरैः ।। ८ ।।

रथोपस्थाभिपतितैरास्तृता मानवैर्मही ।
प्रनृत्यतीव सङ्ग्रामे चापहस्तो धनञ्जयः ।। ९ ।।

रथोपस्थेभ्यो रथनीडेभ्योऽभिपतितैः ।। ९ ।।

श्रुत्वा गाण्डीवनिर्घोषं विस्फूर्जितमिवाशनेः ।
त्रस्तानि सर्वसैन्यानि व्यपागच्छन्महाहवात् ।। १० ।।

**व्यपागच्छन्** पलायितानि ।। १० ।।

**कुण्डलोष्णीषधारीणि जातरूपस्रजस्तथा ।**
**पतितानि स्म दृश्यन्ते शिरांसि रणमूर्धनि ।। ११ ।।**

**कुण्डलोष्णीषधारीणि** शिरांसीत्यन्वयः । **तथा जातरूपस्रजः** च पातिताः ।। ११ ।।

**विशिखोन्मथितैर्गात्रैर्बाहुभिश्च सकार्मुकैः ।**
**सहस्ताभरणैश्चान्यैः प्रच्छन्ना भाति मेदिनी ।। १२ ।।**

**शिरसां पात्यमानानामन्तरा निशितैः शरैः ।**
**अश्मवृष्टिरिवाकाशादभवद्भरतर्षभ ।। १३ ।।**

**अन्तरा** मध्ये । वृष्टिरिति दार्ष्टान्तिके योज्यम् ।। १३ ।।

**दर्शयित्वा तथाऽऽत्मानं रौद्रं रुद्रपराक्रमः ।**
**अवरुद्धोऽचरत् पार्थो वर्षाणि त्रिदशानि च ।। १४ ।।**

**त्रिदशानि** त्रीणि च दश च वर्षाणि **अवरुद्धः** । निगडबद्ध इवावस्थितः सन् इदानीमात्मानं **रौद्रं** दर्शयन् **व्यचरत्** ।। १४ ।।

**क्रोधाग्निमुत्सृजन् वीरो धार्तराष्ट्रेषु पाण्डवः ।**
**तस्य तद्दहतः सैन्यं दृष्ट्वा चैव पराक्रमम् ।। १५ ।।**

**तस्य** अर्जुनस्य ।। १५ ।।

**सर्वे शान्तिपरा योधा धार्तराष्ट्रस्य पश्यतः ।**
**वित्रासयित्वा तत् सैन्यं द्रावयित्वा महारथान् ।। १६ ।।**

**धार्तराष्ट्रस्य पश्यतः जातरूपस्रजः** च शिरांसि च पतितानीत्येकान्वयः । 'नपुंसकमनपुंसकेन'[१] इत्येकशेषः । तमनादृत्येत्यर्थः ।। १६ ।।

**अर्जुनो जयतां श्रेष्ठः पर्यवर्तत भारत ।**
**प्रवर्तयन्नदीं घोरां शोणितोदां तरङ्गिणीम् ।। १७ ।।**

**पर्यवर्तत** मण्डलाकारेण व्यचरत् । **शोणितोदाम्** ।। १७ ।।

**अस्थिजम्बालसम्बाधां युगान्ते कालनिर्मिताम् ।**
**शरचापप्लवां घोरां केशशैवलशाद्वलाम् ।। १८ ।।**

गतम् । जम्बालः पङ्कः । अस्थीन्येव जम्बालास्तेषां सम्बाधो यस्याम् । **शरचापप्लवां** तल्लक्षणनौकाम् । केशा एव शैवलाः श्याद्वलश्च यस्याम् । 'जलनीली तु शेवालं शैवलः'[२] 'शाद्वलः शादहरिते' इत्युभयतश्चामरः ।। १८ ।।

**तनुत्रोष्णीषसम्बाधां नागकूर्मां महाद्विपाम् ।**
**मेदोवसासृक्प्रवहां महाभयविवर्धिनीम् ।। १९ ।।**

**रौद्ररूपां महाभीमां श्वापदैरभिनादिताम् ।**
**तीक्ष्णशस्त्रमहाग्राहां क्रव्यादगणसेविताम् ।। २० ।।**

**तनुत्रोष्णीषसम्बाधाम्** । कवचकिरीटान्येव सम्यक् बाध्यन्ते जना एभिरिति सम्बाधानि क्षुद्रशिला यस्यां सा ताम् । नागलक्षणकूर्मवतीम् । महान्तो द्विपाः गजा यस्यां सा ताम् । मेदःप्रवहेति भयविवर्धनीम् । वसाप्रवहेति **रौद्ररूपाम्** । असृक्प्रवहेति **महाभीमाम्** । क्रव्यादाः पक्वमांसभोजिनः । 'क्रव्यादः कृत्तविकृतप क्वमांसभृगुच्यते'[३] इति ।। १९, २० ।।

---

१. नपुंसकमनपुंसकेनैकवच्चास्यान्यतरस्याम् । - पा.सू. (१/२/६९)

२. शेवलश्चैव शेवालः शैवलो जलनीलिका । - इति वाचस्पतिः ।

३. शब्दार्णववचनम् ।

मुक्ताहारोर्मिकलिलां चित्रालङ्कारबुद्बुदाम् ।
शरसङ्घमहावर्तां नागनक्रां दुरत्ययाम् ॥ २१ ॥

मुक्ताहारा एवोर्मयस्तैः कलिलाम् । चित्रालङ्कारा एव बुद्बुदानि यस्याम् । पुनश्च प्रकारान्तरेणोत्प्रेक्षयति– **शरेति** ॥ २१ ॥

महारथमहाद्वीपां शङ्खदुन्दुभिनिस्वनाम् ।
चकार च तदा पार्थो नदीं दुस्तरशोणिताम् ॥ २२ ॥

आददानस्य हि शरान् सन्धाय च विमुञ्चतः ।
विकर्षतश्च गाण्डीवं न कश्चिद् ददृशे जनः ॥ २३ ॥

॥ इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि द्विषष्टितमोऽध्यायः ॥

॥ इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां द्विषष्टितमोऽध्यायः ॥

*****

# ६३. त्रिषष्टितमोऽध्यायः

( अर्जुनेन पराभूतानां कौरवमहारथानां पलायनम् )

**वैशम्पायन उवाच -**

ततो दुर्योधनः कर्णो दुःशासनविविंशती ।
द्रोणश्च सह पुत्रेण कृपश्चापि महारथः ॥ १ ॥

**दुःशासनविविंशती** । अभ्यर्हितत्वाद् दुःशासनपदपूर्वनिपातः ॥ १ ॥

पुनर्ययुश्च संरब्धा धनञ्जयजिघांसवः ।
विस्फारयन्तश्चापानि बलवन्ति दृढानि च ॥ २ ॥

**धनञ्जयं जिघांसव** इति विग्रहः । गतम् ॥ २ ॥

**तान् विकीर्णपताकेन रथेनादित्यवर्चसा ।**
**प्रत्युद्ययौ महाराज समन्ताद्वानरध्वजः ।। ३ ।।**

विकीर्णा । परितः प्रसर्पन्ती पताका यस्य सः तेन । **समन्तात्** सर्वाभिमुखेन ।। ३ ।।

**ततः कृपश्च कर्णश्च द्रोणश्च रथिनां वरः ।**
**तं महास्त्रैर्महावीर्यं परिवार्य धनञ्जयम् ।। ४ ।।**

**शरौघान् सम्यगस्यन्तो जीमूता इव वार्षिकाः ।**
**ववर्षुः शरवर्षाणि पातयन्तो धनञ्जयम् ।। ५ ।।**

**वार्षिकाः** वर्षाकालिकाः **ववर्षुः** वर्ष स्नेहने । लिट् । ववृषुरिति पाठे वृषते रूपम् । **धनञ्जयं पातयन्तः** यन्ति जानन्तीति यन्तः इण् । पातो भवेदेतैरिति पातयन्तः । 'साधनं कृता' इति भाष्यात् समासः ।। ५ ।।

**इषुभिर्बहुभिस्तूर्णं समरे लोमवाहिभिः ।**
**अदूरात् पर्यवस्थाप्य पूरयामासुरादृताः ।। ६ ।।**

**तथा तैरवकीर्णस्य दिव्यैरस्त्रैः समन्ततः ।**
**न तस्य ह्यङ्गुलमपि विवृतं सम्प्रदृश्यते ।। ७ ।।**

**ततः प्रहस्य बीभत्सुर्दिव्यमैन्द्रं महारथः ।**
**अस्त्रमादित्यसङ्काशं गाण्डीवे समयोजयत् ।। ८ ।।**

**शररश्मिरिवादित्यः प्रतस्थे समरे बली ।**
**किरीटमाली कौन्तेयः सर्वान् प्राच्छादयत् कुरून् ।। ९ ।।**

**यथा बलाहके विद्युत् पावको वा शिलोच्चये ।**
**तथा गाण्डीवमभवदिन्द्रायुधमिवानतम् ।। १० ।।**

दुर्योधनादिभिः पुरतो यथा **बलाहके** मेघे । **शिलोच्चये** पर्वते । **पावको** दवः । **इन्द्रायुधं** शक्रधनुः ।। १० ।।

**यथा वर्षति पर्जन्ये विद्युद्विभ्राजते दिवि ।**
**द्योतयन्ती दिशः सर्वाः पृथिवीं च समन्ततः ।। ११ ।।**

**पर्जन्ये वर्षति** सति । **विद्युत्** तटित् ।। ११ ।।

**तथा दश दिशः सर्वाः पतद्गाण्डीवमावृणोत् ।**
**नागाश्वरथिनः सर्वे मुमुहुस्तत्र भारत ।। १२ ।।**

तथा **दश दिशः सर्वा** विदिशश्च । **पतत्** उत्पतत् । **नागश्वरथिनः** । द्वन्द्वान्ते श्रूयमाण इति सर्वत्र सम्बद्ध्यते ।। १२ ।।

**सर्वे शान्तिपरा योधाः स्वचित्तानि न लेभिरे ।**
**सङ्ग्रामे विमुखाः सर्वे योधास्ते हतचेतसः ।। १३ ।।**

**सर्वे** योधाः । **शान्तिपराः** सन्तः **स्वचित्तानि न लेभिरे** । अयमहमित्यादिग्राहकं नाभूच्चित्तमिति भावः । **हतचेतसः** अर्जुनात् ।। १३ ।।

**एवं सर्वाणि सैन्यानि भग्नानि भरतर्षभ ।**
**व्यद्रवन्त दिशः सर्वा निराशानि स्वजीविते ।। १४ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि त्रिषष्टितमोऽध्यायः ।।**

**स्वजीविते निराशानि** आशारहितानि ।। १४ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां त्रिषष्टितमोऽध्यायः ।।**

*****

# ६४. चतुःषष्टितमोऽध्यायः

( भीष्मार्जुनयोर्युद्धम्, भीष्मस्य मूर्छा । )

**वैशम्पायन उवाच -**

**ततः शान्तनवो भीष्मो भरतानां पितामहः ।**
**वर्द्धयमानेषु योधेषु धनञ्जयमुपाद्रवत् ॥ १ ॥**

ततः सेनाशान्तिपरत्वद्रवणानन्तरम् ॥ १ ॥

**प्रगृह्य कार्मुकश्रेष्ठं जातरूपपरिष्कृतम् ।**
**शरानादाय तीक्ष्णाग्रान् मर्मभेदान् प्रमाथिनः ॥ २ ॥**

मर्माणि भिन्दन्तीति ते तथा ॥ २ ॥

**पाण्डुरेणातपत्रेण ध्रियमाणेन मूर्धनि ।**
**शुशुभे स नरव्याघ्रो गिरिः सूर्योदये यथा ॥ ३ ॥**

**प्राध्माय शङ्खं गाङ्गेयो धार्तराष्ट्रान् प्रहर्षयत् ।**
**प्रदक्षिणमुपावृत्य बीभत्सुं समवारयत् ॥ ४ ॥**

**प्रदक्षिणं उपावृत्य** । अर्जुनकारुण्यादप्रदक्षिणावृत्त्यभाव इति भावः ॥ ४ ॥

**तमुदीक्ष्य समायान्तं कौन्तेयः परवीरहा ।**
**प्रत्यगृह्णात् प्रहृष्टात्मा धाराधरमिवाचलः ॥ ५ ॥**

**प्रहृष्टात्मा** । चिरकाङ्क्षितोऽनेन समर इति हर्षः । धाराधरः जलधरः ॥ ५ ॥

**ततो भीष्मः शरानष्टौ ध्वजे पार्थस्य वीर्यवान् ।**
**समार्पयत् महावेगान् श्वसमानानिवोरगान् ॥ ६ ॥**

**अष्टौ शरान्** । श्वसमानान् श्वसतः ॥ ६ ॥

**ते ध्वजं पाण्डुपुत्रस्य समासाद्य पतत्रिणः ।**
**ज्वलन्तं कपिमाजघ्नुर्ध्वजाग्रनिलयांश्च तान् ॥ ७ ॥**

**आजघ्नुः** । सकर्मकत्वान्न तङ् । **तान्** भूतान् । देवयोनित्वात् पुंस्त्वम् ॥ ७ ॥

**ततो भल्लेन महता पृथुधारेण पाण्डवः ।**
**च्छत्रं चिच्छेद भीष्मस्य तूर्णं तदपतद्भुवि ॥ ८ ॥**

**ध्वजं चैवास्य कौन्तेयः शरैरभ्यहनद्भृशम् ।**
**शीघ्रकृद्रथवाहांश्च तथोभौ पार्ष्णिसारथी ॥ ९ ॥**

तत् छत्रं **अभ्यहनत्** अभ्याहनत् । **रथवाहान्** अश्वान् । **पार्ष्णिसारथी** पार्ष्णिरक्षकौ ॥ ९, १० ॥

**अमृष्यमाणस्तद्भीष्मो जानन्नपि स पाण्डवम् ।**
**दिव्येनास्त्रेण महता धनञ्जयमवाकिरत् ॥ १० ॥**

**पाण्डवम्** अर्जुनं जानन्नपीत्यनेनैव निर्वाहो भवेदिति **जानन् अपि** इति तात्पर्यार्थः सूच्यते ॥ १० ॥

**तथैव पाण्डवो भीष्मे दिव्यमस्त्रमुदीरयन् ।**
**प्रत्यगृह्णादमेयात्मा महामेघमिवाचलः ॥ ११ ॥**

**दिव्यं** ततोऽपि ॥ ११ ॥

**तयोस्तदभवद्युद्धं तुमुलं लोमहर्षणम् ।**
**भीष्मस्य सह पार्थेन बलिवासवयोरिव ॥ १२ ॥**

**भीष्मस्य** भीष्मेण । **पार्थेन सह** । पार्थस्य भीष्मेण सहेति तयोरित्यन्वयः । अन्वयभेदेन तृतीया षष्ठ्यर्थे ॥ १२ ॥

**प्रैक्षन्त कुरवः सर्वे योधाश्च सहसैनिकाः ।**
**भल्लैर्भल्लाः समागम्य भीष्मपाण्डवयोर्युधि ।। १३ ।।**

**समागम्य** मिलित्वा ।। १३ ।।

**अन्तरिक्षे व्यराजन्त खद्योताः प्रावृषीव हि ।**
**अग्निचक्रमिवाविद्धं सव्यदक्षिणमस्यतः ।। १४ ।।**

**खद्योताः** ज्योतिरिङ्गणाः । **अग्निचक्रम्** अलातम् ।। १४ ।।

**गाण्डीवमभवद्राजन् पार्थस्य सृजतः शरान् ।**
**ततः सञ्छादयामास भीष्मं शरशतैः शितैः ।। १५ ।।**

**शरशतैः** बहुभिः शरैः ।। १५ ।।

**पर्वतं वारिधाराभिश्छादयन्निव तोयदः ।**
**तां स [1]वेलामिवोद्धूतां शरवृष्टिं समुत्थिताम् ।। १६ ।।**

**तां स वेलाम्** नदीमिव । **उद्धूतां समुत्थिताम्** । **शरवृष्टिं** भीष्मो वेलासमः शरवृष्टिश्च नदीसमेति ज्ञेयम् ।। १६ ।।

**व्यधमत् सायकैर्भीष्मः पाण्डवं समवारयत् ।**
**ततस्तानि निकृत्तानि शरजालानि भागशः ।**
**समरे च व्यशीर्यन्त फाल्गुनस्य रथं प्रति ।। १७ ।।**

अनन्तरं **पाण्डवं समवारयत्** । **भागशः** विभागशः । **फाल्गुनस्य रथं प्रति** आगत्य शरजालानि **व्यशीर्यन्त** ।। १७ ।।

**ततः कनकपुङ्खानां शरवृष्टिं समुत्थिताम् ।**
**पाण्डवस्य रथात् तूर्णं शलभानामिवायतिम् ।। १८ ।।**

---

१. वेला काले च सीमायामब्धेः कूलकारयोः ।
अक्लिष्टमरणे रोगे ईश्वरस्य च भोजने ।। - इति मेदिनी ।

**ततः** पाण्डवं रथात् । शरेति प्रातिपदिकनिर्देशः । **कनकपुङ्खानाम्** शराणां **शलभानां आयतिमिव समुत्थिताम्** ॥ १८ ॥

**व्यधमत् तां पुनस्तस्य भीष्मः शरशतैः शितैः ।**
**ततस्ते कुरवः सर्वे साधु साध्विति चाब्रुवन् ॥ १९ ॥**

**पुनः भीष्मः तां व्यधमत्** ॥ १९ ॥

**दुष्करं कृतवान् भीष्मो यदर्जुनमयोधयत् ।**
**बलवांस्तरुणो दक्षः क्षिप्रकारी धनञ्जयः ॥ २० ॥**

**भीष्मोऽर्जुनं अयोधयत्** इति **यत्** तद् **दुष्करं** कर्म **कृतवान्** ॥ २० ॥

**कोऽन्यः समर्थः पार्थस्य वेगं धारयितुं रणे ।**
**ऋते शान्तनवाद्भीष्मात् कृष्णाद्वा देवकीसुतात् ॥ २१ ॥**

तस्मात्साधु साध्विति अब्रुवन् । समर्थान् शृङ्गिग्राहकयाऽऽह– **ऋत** इति ॥ २१ ॥

**आचार्यप्रवराद्वाऽपि भारद्वाजान्महाबलात् ।**
**अस्त्रैरस्त्राणि संवार्य क्रीडन्तौ भरतर्षभौ ॥ २२ ॥**

**क्रीडन्तौ विचेरतुः** इत्युत्तरेण (६४/२४) अन्वयः ॥ २२ ॥

**चक्षूंषि सर्वभूतानां मोहयन्तौ महाबलौ ।**
**प्राजापत्यं तथैवैन्द्रमाग्नेयं रौद्रदारुणम् ॥ २३ ॥**

रौद्रं रुद्रसम्बिन्धि दारुणं क्रूरम् ॥ २३ ॥

**कौबेरं वारुणं चैव याम्यं वायव्यमेव च ।**
**प्रयुञ्जानौ महात्मानौ समरे तौ विचेरतुः ॥ २४ ॥**

विस्मितान्यथ भूतानि तौ दृष्ट्वा संयुगे तदा ।
साधु पार्थ महाबाहो साधु भीष्मेति चाब्रुवन् ॥ २५ ॥

भूतानि अब्रुवन् ॥ २५ ॥

नायं युक्तो मनुष्येषु योऽयं सन्दृश्यते महान् ।
महास्त्राणां सम्प्रयोगः समरे भीष्मपार्थयोः ॥ २६ ॥

योऽयं सम्प्रयोगः ॥ २६ ॥

वैशम्पायन उवाच -

एवं सर्वास्त्रविदुषोरस्त्रयुद्धमवर्तत ।
अस्त्रयुद्धे तु निर्वृत्ते शरयुद्धमवर्तत ॥ २७ ॥

निर्वृत्ते निवृत्ते ॥ २७ ॥

अथ जिष्णुरुपावृत्य क्षुरधारेण कार्मुकम् ।
चकर्त भीष्मस्य तदा जातरूपपरिष्कृतम् ॥ २८ ॥

उपावृत्य चक्षुषी ॥ २८ ॥

निमेषान्तरमात्रेण भीष्मोऽन्यत् कार्मुकं रणे ।
समादाय महाबाहुः सज्यं चक्रे महारथः ॥ २९ ॥

शरांश्च सुबहून् क्रुद्धो मुमोचाशु धनञ्जये ।
अर्जुनोऽपि शरांस्तीक्ष्णान् भीष्माय निशितान् बहून् ॥३०॥

चिक्षेप सुमहातेजास्तथा भीष्मश्च पाण्डवे ।
तयोर्दिव्यास्त्रविदुषोरस्यतोर्निशितांञ्छरान् ॥ ३१ ॥

**न विशेषस्तदा राजंल्लँक्ष्यते स्म महात्मनोः ।**
**अथावृणोद्दश दिशः शरैरतिरथस्तदा ॥ ३२ ॥**

**विशेषः** अतिशयः । तथा **दश दिशः आवृणोत्** ॥ ३२ ॥

**किरीटमाली कौन्तेयः शूरः शान्तनवस्तथा ।**
**अतीव पाण्डवो भीष्मं भीष्मश्चातीव पाण्डवम् ॥ ३३ ॥**

**अतीव** अतिक्रम्य वर्तत इव ॥ ३३ ॥

**बभूव तस्मिन् सङ्ग्रामे राजँल्लोके तदद्भुतम् ।**
**पाण्डवेन हताः शूरा भीष्मस्य रथरक्षिणः ॥ ३४ ॥**

**शेरते स्म तदा राजन् कौन्तेयस्याभितो रथम् ।**
**ततो गाण्डीवनिर्मुक्ता निरमित्रं चिकीर्षवः ॥ ३५ ॥**

**कौन्तेयस्य रथम् अभितः** परितः । उत्प्लुत्य **शेरते । निरमित्रं** वैर्यभावम् ॥ ३५ ॥

**आगच्छन् पुङ्खसंश्लिष्टाः श्वेतवाहनपत्रिणः ।**
**निष्पतन्तो रथान् तस्य धौता हैरण्यवाससः ॥ ३६ ॥**

**पुङ्खसंश्लिष्टाः** एकैकस्य पुच्छाग्रसम्बन्धाः ॥ ३६ ॥

**आकाशे समदृश्यन्त हंसानामिव पङ्क्तयः ।**
**तस्य तद्दिव्यमस्त्रं हि विगाढं चित्रमस्यतः ।**
**प्रेक्षन्ते स्मान्तरिक्षस्थाः सर्वे देवाः सवासवाः ॥ ३७ ॥**

**प्रेक्षन्ते स्म** ददृशुः ॥ ३७ ॥

**तं दृष्ट्वा परमप्रीतो गन्धर्वश्चित्रमद्भुतम् ।**
**शशंस देवराजाय चित्रसेनः प्रतापवान् ॥ ३८ ॥**

चित्रं भद्रम् । 'चित्रं भद्रमितीर्यते' इति ऋग्भाष्योक्तेः ।। ३८ ।।

**पश्येमान् पार्थनिर्मुक्तान् संसक्तानिव गच्छतः ।**
**चित्ररूपमिदं जिष्णोर्दिव्यमस्त्रमुदीर्यतः ।। ३९ ।।**

**उदीर्यतः** प्रयुञ्जानस्य ।। ३९ ।।

**नेदं मनुष्याः सन्दध्युर्न हीदं तेषु विद्यते ।**
**पौराणानां महास्त्राणां विचित्रोऽयं समागमः ।। ४० ।।**

**न सन्दध्युः** सन्धानं न कुर्युः । **तेषु** नैव **विधत्ते** च । **पौराणानाम्** पुरातनानाम् । **समागमः** परस्परसम्मेलनम् ।। ४० ।।

**आददानस्य हि शरान् सन्धाय च विमुञ्चतः ।**
**विकर्षतश्च गाण्डीवं नान्तरं समदृश्यत ।। ४१ ।।**

**मध्यन्दिनगतं सूर्यं प्रतपन्तमिवाम्बरे ।**
**नाशक्नुवन्त सैन्यानि पाण्डवं प्रतिवीक्षितुम् ।। ४२ ।।**

**तथैव भीष्मं गाङ्गेयं द्रष्टुं नोत्सहते जनः ।**
**उभौ विश्रुतकर्माणावुभौ तीव्रपराक्रमौ ।। ४३ ।।**

**तथैव** अर्जुनवदेव ।। ४३ ।।

**उभौ सदृशकर्माणावुभौ युधि सुदुर्जयौ ।**
**इत्युक्तो देवराजस्तु पार्थभीष्मसमागमम् ।। ४४ ।।**

**इत्युक्तः** चित्रसेनेन ।। ४४ ।।

**पूजयामास दिव्येन पुष्पवर्षेण भारत ।**
**ततः शान्तनवो भीष्मो वामपार्श्वमताडयत् ।। ४५ ।।**

पश्यतः प्रतिसन्धाय विद्ध्यतः सव्यसाचिनः ।
ततः प्रहस्य बीभत्सुः पृथुधारेण कार्मुकम् ॥ ४६ ॥

**पश्यतः** सतः । प्रहारालक्ष्यतया हासः ॥ ४६ ॥

चिच्छेद गार्ध्रपत्रेण भीष्मस्यादित्यतेजसः ।
अथैनं दशभिर्बाणैः प्रत्यविद्ध्यत् स्तनान्तरे ॥ ४७ ॥

यतमानं पराक्रान्तुं कुन्तीपुत्रो धनञ्जयः ॥ ४८ ॥

**पराक्रान्तुं** विक्रमं कर्तुम् ॥ ४८ ॥

स पीडितो महाबाहुर्गृहीत्वा रथकूबरम् ।
गाङ्गेयो युद्धदुर्धर्षस्तस्थौ दीर्घमिवान्तरम् ॥ ४९ ॥

**दीर्घमिवान्तरम्** अवकाशं यथा भवति तथा दीर्घकालं प्रज्ञा नाभूदित्यर्थः ॥ ४९ ॥

तं विसंज्ञमपोवाह संयन्ता रथवाजिनाम् ।
उपदेशमनुस्मृत्य रक्षमाणो महारथम् ॥ ५० ॥

॥ इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि चतुःषष्टितमोऽध्यायः ॥

**रथवाजिनां** शैषिकी षष्ठी । **उपदेशं** 'सारथी रथिनं रक्षेत्' इति शास्त्रोक्तम् ॥ ५० ॥

॥ इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां चतुःषष्टितमोऽध्यायः ॥

*****

# ६५. पञ्चषष्टितमोऽध्यायः

( अर्जुनदुर्योधनयोर्युद्धम्, पराजितस्य दुर्योधनस्य स्वीयैः सह पलायनम् । )

**वैशम्पायन उवाच -**

**भीष्मे तु सङ्ग्रामशिरो विहाय पलायमाने धृतराष्ट्रपुत्रः ।**
**उत्सृज्य केतुं विनदन् महात्मा धनुर्विगृह्यार्जुनमाससाद ॥१॥**

**केतुं** तद्वसनम् । **उत्सृज्य** प्रसार्य ॥ १ ॥

**स भीमधन्वानमुदग्रवीर्यं धनञ्जयं शत्रुगणे चरन्तम् ।**
**आकर्णपूर्णायतचोदितेन विव्याध भल्लेन ललाटमध्ये ॥ २ ॥**

आकर्णपूर्णायतं तावद्दीर्घं यथा भवति तथा चोदितेनोत्सृष्टेन ॥ २ ॥

**स तेन बाणेन समर्पितेन जाम्बूनदाग्रेण सुसंहितेन ।**
**रराज राजन् [१]रजनीयकर्मा यथैकपर्वा रुचिरैकशृङ्गः ॥ ३ ॥**

**रजनीयकर्मा** रञ्जनीयव्यापारः । **एकपर्वा** एकपर्वग्रन्थिर्यस्य स तथा । अखण्ड इत्यर्थः । रुचिरमेकं शृङ्गं यस्य सः । 'पर्व स्यादुत्सवे ग्रन्थौ प्रस्तावे लक्षणान्तरे । दर्शप्रतिपदोः सन्धौ विषुवप्रभृतिष्वपि' इति विश्वः ॥ ३ ॥

**अथास्य बाणेन विदारितस्य प्रादुर्बभूवासृगजस्रमुष्णम् ।**
**स तस्य जाम्बूनदपुङ्खचित्रो भित्त्वा ललाटं सुविराजते स्म ॥४॥**

**अजस्रं** सन्ततधारम् ॥ ४ ॥

**[२]स तेन बाणाभिहतस्तरस्वी दुर्योधनेनोद्धतमन्युवेगः ।**
**शरानुपादाय विषाग्निकल्यान् विव्याध राजानमदीनसत्त्वः ॥५॥**

---

१. महनीयकर्मा । (इति गी. पाठः)

२. अयं श्लोकः गी. पाठे न पठ्यते ।

**तेन** दुर्योधनेन । उद्धतो मन्युवेगो यस्य सः । अदीनं सत्त्वं पराक्रमो यस्य ।।५।।

**दुर्योधनश्चापि तमुग्रतेजाः पार्थश्च दुर्योधनमेकवीरः ।**
**अन्योन्यमाजौ पुरुषप्रवीरौ समौ समाजग्मतुराजमीढौ ।।६।।**

**आजमीढौ** तद्गोत्रापत्यौ ।। ६ ।।

**ततः प्रभिन्नेन महागजेन महीधराभेन पुनर्विकर्णः ।**
**रथैश्चतुर्भिर्गजपादरक्षैः कुन्तीसुतं जिष्णुमथाभ्यधावत् ।।७।।**

**प्रभिन्नेन** मत्तेन **गजपादरक्षैः** गजपादानां रक्षा यैस्ते तथा तैः ।। ७ ।।

**तमापतन्तं त्वरितं गजेन्द्रं धनञ्जयं कुम्भविभागमध्ये ।**
**आकर्णपूर्णेन महायसेन बाणेन विव्याध महाजवेन ।। ८ ।।**

कुम्भयोर्यो विभागस्तन्मध्ये ।। ८ ।।

**पार्थेन सृष्टः स तु गार्ध्रपत्र आपुङ्खदेशात् प्रविवेश नागम् ।**
**विदार्य शैलप्रवरं प्रकाशं यथाऽशनिः पर्वतमिन्द्रसृष्टः ।। ९ ।।**

**आपुङ्खदेशात्** मूलपर्यन्तम् । **अशनिः** वज्रम् ।। ९ ।।

**शरप्रतप्तः स तु नागराजः प्रवेपिताङ्गो व्यथितान्तरात्मा ।**
**संसीदमानो निपपात मह्यां वज्राहतं शृङ्गमिवाचलस्य ।।१०।।**

**संसीदमानः** अवसादं प्राप्तः ।। १० ।।

**निपातिते दन्तिवरे पृथिव्यां त्रासाद्विकर्णः सहसाऽवतीर्य ।**
**तूर्णं पदान्यष्टशतानि गत्वा विविंशतेः स्यन्दनमारुरोह।।११।।**

**विविंशतेः** भ्रातुः ।। ११ ।।

**निहत्य नागं तु शरेण तेन वज्रोपमेनाद्रिवराम्बुदाभम् ।**
**तथाविधेनैव शरेण पार्थो दुर्योधनं वक्षसि निर्बिभेद ।। १२ ।।**

**अद्रिवराम्बुदाभम्** । अद्रिवराभमाकारेण । अम्बुदाभं वर्णेन तथाविधेन । आकर्णपूर्णेनेत्युक्तसदृशेन ।। १२ ।।

**ततो गजे राजनि चैव भिन्ने भग्ने विकर्णे च सपादरक्षे ।**
**गाण्डीवमुक्तैर्विशिखैः प्रणुन्नास्ते योधमुख्याः सहसाऽपजग्मुः १३**

**सपादरक्षे गजे भिन्ने** हते सति **राजनि** दुर्योधने भिन्ने निर्भिन्नवक्षसि सति **विकर्णे** भग्ने सति । **अपजग्मुः** पलाययुः ।। १३ ।।

**दृष्ट्वैव पार्थेन हतं च नागं योधांश्च सर्वान् द्रवतो निशम्य ।**
**रथं समावृत्य कुरुप्रवीरो रणात् प्रदुद्राव यतो न पार्थः।।१४।।**

**समावृत्य** पर्यावर्तयित्वा । **यतो** यत्र **पार्थो न** नास्ति तं प्रदेशं प्रति **दुद्राव** । पार्थं त्यक्त्वा गमने हेतुमप्यनेनाह । **यतः अनपार्थः** इति यस्मात्स पार्थः अनपार्थः व्यर्थकर्मा न भवतीति वा ।। १४ ।।

**तं भीतरूपं त्वरितं द्रवन्तं दुर्योधनं शत्रुसहोऽभिषङ्गात् ।**
**प्रास्फोटयद्योद्धुमनाः किरीटी बाणेन विद्धं रुधिरं वमन्तम् ।।१५।।**

**शत्रुसहः** वैरिवेगसहः । **अभिषङ्गात्** पराभवात् । द्रवन्तं दुर्योधनमुद्दिश्य अभिषङ्गः पुल्लिङ्गः । 'पराभवाक्रोशशपथेषु' इति मेदिनी । **प्रास्फोटयत्** बाहुस्फालनं चकार ।। १५ ।।

**अर्जुन उवाच -**

**विहाय कीर्तिं विपुलं यशश्च युद्धात् परावृत्य पलायसे किम् ।**
**न तेऽद्य तूर्याणि समाहतानि तथैव राज्यादवरोपितस्य ।।१६।।**

**विहाय** त्यक्त्वा **कीर्तिं** प्रत्यक्षतः । माहात्म्यश्रवणम् । **यशः** देशान्तरे तत् । यथोक्तं छन्दोगभाष्ये 'दिक्षु यानाद्यशो व्याप्तं कीर्तिः प्रत्यक्षतः स्तुतिः' इति । यथा राज्यादवशेऽपि तस्य राज्ञः जयवाद्यानि **तूर्याणि न समाहतानि** भवन्ति, तथैव तवापि न समाहतानीत्यर्थः उत्तरान्वयी वा । उपहासार्थम् ।। १६ ।।

**युधिष्ठिरस्यास्मि निदेशकारी पार्थस्तृतीयो युधि संस्थितोऽस्मि ।**
**तदर्थमावृत्य मुखं प्रयच्छन्नरेन्द्रवृत्तं स्मर धार्तराष्ट्र ।। १७ ।।**

**अस्मि** अहम् । गतम् । **निदेशकारी** दासः । **तृतीयः पार्थः** पृथापुत्रः । **तदर्थं** मन्निमित्तं **नरेन्द्रवृत्तं** राजधर्मं 'युद्धे चाप्यपलायनम्'[१] इत्येवं रूपम् । हे नरेन्द्र वृत्तं द्यूते प्रवृत्तमस्मदपकारात्मकं स्मरेति वा ।। १७ ।।

**मोघं तवेदं भुवि नामधेयं दुर्योधनेतीह कृतं पुरस्तात् ।**
**न हीह दुर्योधनता तवास्ति पलायमानस्य रणं विहाय ।।१८।।**

**दुर्योधनेति** यत्पित्रा पुरस्तात् पूर्वं कृतं **नामधेयं** तत् **मोघं** व्यर्थम् ।। १८ ।।

**न ते पुरस्तादथ पृष्ठतो वा पश्यामि दुर्योधन रक्षितारम् ।**
**अपेहि युद्धात् पुरुषप्रवीर प्राणान् प्रियान् पाण्डवतोद्यरक्ष।।१९।।**

**।। इति श्रीमन्महाभारते गोहरणपर्वणि पञ्चषष्टितमोऽध्यायः ।।**

---

१. शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् ।
दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ।। - श्रीमद्भगवद्गीता (१८/४३)

**पाण्डवतो** मत्तः **पुरुषप्रवीर** इति उपहासः हे **पाण्डवतोद्य** पाण्डवेन तोद्य पीड्य । **प्रियान् प्राणान् रक्षन् युद्धात् अपेहि** ।। १९ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां पञ्चषष्टितमोऽध्यायः ।।**

*****

# ६६. षट्षष्टितमोऽध्यायः

**( अर्जुनेन कौरवसेनायाः पराभवः, स्वदेशं प्रति प्रस्थानं च । )**

**वैशम्पायन उवाच -**

**आहूयमानश्च स तेन [१]सङ्ख्ये महात्मना वै धृतराष्ट्रपुत्रः ।**
**निवर्तितस्तस्य गिराऽङ्कुशेन महागजो मत्त इवाङ्कुशेन ।। १ ।।**

**तेन** अर्जुनेन **स धृतराष्ट्रपुत्र** इत्यन्वयः । **गिरा** तल्लक्षणेनाङ्कुशेन निवारकेन ।।१।।

**सोऽमृष्यमाणो वचसाऽभिमृष्टो महारथेनातिरथस्तरस्वी ।**
**पर्याववर्ताथ रथेन वीरो भोगी यथा पादतलाभिमृष्टः ।। २ ।।**

**अभिमृष्टः** अवज्ञापर्वकं परामृष्टः । **पर्याववर्त** ववृते । अर्जुनाभिमुखोऽभूत् । **भोगी** नागः गूढपात् । पादताडने तस्यात्यन्तमर्मस्पर्शोऽतिकोप इति भावः ।। २ ।।

**तं प्रेक्ष्य कर्णः परिवर्तमानं निवर्त्य संस्तभ्य च विद्धगात्रम् ।**
**दुर्योधनस्योत्तरतोऽभ्यगच्छत् पार्थं नृवीरो युधि हेममाली।।३।।**

---

१. सङ्ख्ये । इति क्वचित् ।

**विद्धगात्रम्** आत्मानं कञ्चित् कालं **संस्तभ्य** स्वयमपि **निवर्त्य दुर्योधनस्योत्तरतोऽभ्यगच्छत्** ।। ३ ।।

**भीष्मस्ततः शान्तनवो विवृत्य हिरण्यकक्षस्त्वरयाऽभिषङ्गी ।**
**दुर्योधनं पश्चिमतोऽभ्यरक्षत् पार्थान्महाबाहुरधिज्यधन्वा ।।४।।**

**अभिषङ्गी** परपराभवेच्छावान् । **पार्थात्** अर्जुनात् ।। ४ ।।

**द्रोणः कृपश्चैव विविंशतिश्च दुःशासनश्चैव निवृत्य शीघ्रम् ।**
**सर्वे पुरस्ताद्विवृतोरुचापा दुर्योधनार्थं त्वरिताऽभ्युपेयुः ।।५।।**

**त्वरिताभ्युपेयुः** इत्यत्र सन्धिरार्षः । त्वरिता उपेयुरिति वा ।। ५ ।।

**स तान्यनीकानि निवर्तमानान्यालोक्य पूर्णौघनिभानि पार्थः ।**
**हंसो यथा मेघमिवापतन्तं धनञ्जयः प्रत्यतपत् तरस्वी ।।६।।**

**ओघः** प्रवाहः । **हंसः** सूर्यः । 'हंसो विहङ्गभेदे स्यादर्के विष्णौ हयान्तरे' इति विश्वः । **प्रत्यतपत्** तापयामास ।। ६ ।।

**ते सर्वतः सम्परिवार्य पार्थमस्त्राणि दिव्यानि समाददानाः ।**
**ववर्षुरभ्येत्य शरैः समन्तान्मेघा यथा भूधरमम्बुवेगैः ।। ७ ।।**

**ते** कौरवाः **सर्वतः सम्परिवार्य** अर्जुनस्य परितः मण्डलाकारेण स्थित्वा ।। ७ ।।

**ततोऽस्त्रमस्त्रेण निवार्य तेषां गाण्डीवधन्वा कुरुपुङ्गवानाम् ।**
**सम्मोहनं शत्रुसहोऽन्यदस्त्रं प्रादुश्चकारैन्द्रिरपारणीयम् ।। ८ ।।**

**शत्रुसहः** तद्वेगसहः । अस्य तु पूर्वप्रयुक्तम् । **सम्मोहनं** तन्नामकम**पारणीयम्** । परप्रतीकाराविषयमस्त्रं **प्रादुश्चकार** । **ऐन्द्रिः** इन्द्रात्मजः ।। ८ ।।

**ततो दिशश्चानुदिशोऽविवृत्य शरैः सुधारैर्निशितैः सुपत्रैः ।**
**गाण्डीवघोषेण मनांसि तेषां महाबलः प्रव्यथयाञ्चकार ।।९।।**

**दिशः** पूर्वाद्याः । **अनुदिशः** आग्नेयाद्याः । **अविवृत्य** आच्छाद्य । शोभना धारा येषां तैः ।। ९ ।।

**ततः पुनर्भीमरवं प्रगृह्य दोर्भ्यां महाशङ्खमुदारघोषम् ।**
**व्यनादयत् स प्रदिशो दिशः खं भुवं च पार्थो द्विषतां निहन्ता १०**

महान् घोषो यस्य सहकारित्वेन स महाघोषस्तं **भीमरवं** भयङ्करध्वनिं **महाशङ्खं प्रगृह्य व्यताडयत्** शब्दापयामास ।। १० ।।

**ते शङ्खनादेन कुरुप्रवीराः सम्मोहिताः पार्थसमीरितेन ।**
**उत्सृज्य चापानि दुरासदानि सर्वे तदा शान्तिपरा बभूवुः ।।११।।**

**सम्मोहिताः** मूर्च्छोपेताः सन्तः । **शान्तिपराः** निवृत्तचेष्टाः **बभूवुः** ।। ११ ।।

**तथा विसञ्ज्ञेषु च तेषु पार्थः स्मृत्वा च वाक्यानि तथोत्तरायाः ।**
**निर्याहि मध्यादिति मत्स्यपुत्रमुवाच यावत् कुरवो विसञ्ज्ञाः १२**

**वाक्यानि** 'बृहन्नलेआनययथावासांसिरुचिराणिच' इति (३७/२८) पूर्वोक्तानि। **यावत्कुरवो विसञ्ज्ञाः** तावदेव सैन्यमध्यात् **निर्याहि** । वस्त्राण्यानेतुमिति शेषः ।। १२ ।।

**आचार्यशारद्वतयोः सुशुक्ले कर्णस्य पीतं रुचिरं च वस्त्रम् ।**
**द्रौणेश्च राज्ञश्च तथैव नीले वस्त्रे समादत्स्व नरप्रवीर ।।१३।।**

**सुशुक्ले** वस्त्रे उत्तरीयरूपे । परिधानवस्त्रस्याचार्यादित आनयनायोग्यत्वादर्जुनस्याक्षुद्रत्वाच्चेति ज्ञेयम् ।। १३ ।।

**भीष्मस्य सञ्ज्ञां तु तथैव मन्ये जानाति सोऽस्त्रप्रतिघातमेषः ।**
**एतस्य वाहान् कुरु सव्यतस्त्वमेवं हि यातव्यममूढसञ्ज्ञैः ।। १४ ।।**

**सञ्ज्ञां** देहि । प्रज्ञां **मन्ये** कथम् । **अस्त्रप्रतिघातं** सम्मोहनास्त्रप्रतीकारं । **एतस्य भीष्मस्य सव्यतः** । **वाहान्** मम वाजिनः **कुरु** । कुत एवमित्यत आह— **एवमिति** ।। **अमूढसञ्ज्ञैः** सहगमने प्रसक्ते तत्सव्यत एव गन्तव्यमित्यर्थः ।। १४ ।।

**रश्मीन् समुत्सृज्य ततो महात्मा रथादवप्लुत्य विराटपुत्रः ।**
**वस्त्राण्युपादाय महारथानां तूर्णं पुनः स्वं रथमारुरोह ।। १५ ।।**

**समुत्सृज्य** पार्थाय विनिवेद्येत्यर्थः ।। १५ ।।

**ततोऽन्वशासच्चतुरः सदश्वान् पुत्रो विराटस्य हिरण्यकक्षान् ।**
**ते तद्व्यतीयुः ध्वजिनामनीकं श्वेता वहन्तोऽर्जुनमाजिमध्यात् १६**

**ध्वजिनां** सैनिकानामनीकम् । **व्यतीयुः** अतिक्रान्ताः ।। १६ ।।

**तथाऽनुयान्तं पुरुषप्रवीरं भीष्मः शरैरभ्यहनत् तरस्वी ।**
**स चापि भीष्मस्य हयान् निहत्य विव्याध पार्थो दशभिः पृषत्कैः॥**

**तरस्वी** वेगवान् ।। १७ ।।

**ततोऽर्जुनो भीष्ममपास्य युद्धे विद्ध्वाऽस्य यन्तारमरिष्टधन्वा ।**
**तस्थौ विमुक्तो रथवृन्दमध्यान्मेघं विदार्येव सहस्ररश्मिः ।।१८।।**

**अपास्य** त्यक्त्वा **यन्तारं** सारथिम् । **अरिष्टधन्वा** क्षेमधनुर्धारी । **रथवृन्दमध्यात्** । शत्रुरथसमूहमध्यात् ।। १८ ।।

**लब्ध्वा हि सञ्ज्ञां तु कुरुप्रवीरः पार्थं निरीक्ष्याथ सुरेन्द्रकल्पम् ।**
**रणे विमुक्तं स्थितमेकमाजौ स धार्तराष्ट्रस्त्वरितं बभाषे ।**
**अयं कथं वै भवतो विमुक्तस्तथा प्रमथ्नीत यथा न मुच्येत् ॥**

**कुरुप्रवीरो** दुर्योधनः **विमुक्तं** स्वमण्डलात् । **भवतः** त्वत्तः । कथंस्विन्मुक्त इत्याक्षेपः । पुनरपि सर्वे मिलित्वा यथाऽयं न मुच्येत् तथा **प्रमथ्नीत** विलोडयत् ।। १९ ।।

**तमब्रवीच्छान्तनवः प्रहस्य क्व ते गता बुद्धिरभूत् क्व वीर्यम् ।**
**शान्तिं परां प्राप्य यदा स्थितोऽभूरुत्सृज्य बाणांश्च धनुर्विचित्रम् ॥२०॥**

**परां शान्तिम्** । निश्चेष्टतां **प्राप्य** धनुर्बाणांश्चोत्सृज्य **यदा स्थितोऽभूः** अभवस्तदा **क्व ते बुद्धिरभूत्** इत्यन्वयः ।। २० ।।

**न त्वेष बीभत्सुरलं नृशंसं कर्तुं न पापेऽस्य मनो विशिष्टम् ।**
**त्रैलोक्यहेतोर्न जहेत् स्वधर्मं सर्वे न तस्मान्निहता रणेऽस्मिन् ॥२१॥**

**अलं** योग्यः । ततोऽ**स्य मनो विशिष्टं** अत्युत्तमम् निष्पापमिति यावत् । तस्यैवोपपादनम्– **त्रैलोक्येति** । **न निहताः** सम्मोहकाले तदा । किं किं न कर्तुं शक्यं तथापि धर्मिष्ठत्वान्न कृतवानिति भावः ।। २१ ।।

**क्षिप्रं कुरून् याहि कुरुप्रवीर विजित्य गाश्च प्रतियातु पार्थः ।**
**मा ते स्वकोऽर्थो निपतेत मोहात् तत् संविधातव्यमरिष्टबन्धम् ॥२२॥**

**कुरून्** देशान् । **स्वकोऽर्थः** स्वस्वकीयनाशरूपः । **मा निपतेत** निपतेत् । तदेव कार्यं **संविधातव्यं** कर्तव्यम् । तत्किं **यदरिष्टबन्धं** कल्याणानुबन्धि ।। २२ ।।

**वैशम्पायन उवाच -**

**दुर्योधनस्तस्य तु तन्निशम्य पितामहस्यात्महितं वचोऽथ ।**
**अतीतकामो युधि सोऽत्यमर्षी राजा विनिःश्वस्य बभूव तूष्णीम् ॥२३॥**

**अतीतकामः** गतगवाभिलाषः । **अत्यमर्षी** अपि **विनिःश्वस्य तूष्णीं बभूव** ।। २३ ।।

**तद्भीष्मवाक्यं हितमीक्ष्य सर्वे धनञ्जयाग्निं च विवर्धमानम् ।**
**निवर्तनायैव मनो निदध्युर्दुर्योधनं ते परिरक्षमाणाः ॥ २४ ॥**

**तान् प्रस्थितान् प्रीतमनाः स पार्थो धनञ्जयः प्रेक्ष्य कुरुप्रवीरान् ।**
**अभाषमाणोऽनुनयं मुहूर्तं वचोऽब्रवीत् सम्परिहृत्य भूयः ॥२५॥**

**अभाषमाणः** सम्भाषणं कर्तुमनिच्छावान् **पार्थः** । **वचः सम्परिहृत्य मुहूर्तं** तत्पर्यन्तम् **अनुनयं** नीतिरूपमेव कार्यतो **अब्रवीत्** नीतिमेव वचनस्थाने अभिषिञ्चेति ज्ञेयम् ॥ २५ ॥

**पितामहं शान्तनवं च वृद्धं द्रोणं गुरुं च प्रणिपत्य मूर्ध्ना ।**
**द्रौणिं कृपं चैव कुरूंश्च मान्यांच्छरैर्विचित्रैरभिवाद्य चैव ॥२६॥**

तदेवाह– **पितामहमिति** ॥ एतान् तथा **मान्यान् कुरून्** बाह्लीकादींश्च **शरैरेव मूर्ध्ना प्रणिपत्य** अभिवाद्य च अभिवादनयोग्यान् प्रति नामगोत्राद्युच्चारणपूर्वकं नत्वेत्यर्थः । शरघोष एव तदुच्चारणरूप इति ज्ञेयम् ॥ २६ ॥

**दुर्योधनस्योत्तमरत्नचित्रं चिच्छेद पार्थो मुकुटं शरेण ।**
**आमन्त्र्य वीरांश्च तथैव मान्यान् गाण्डीवघोषेण विनाद्य लोकान् २७**

**मुकुटं** किरीटं । अनेन तव शिरोऽप्यवच्छेत्तुं शक्यम् । तथापि 'भोगाननुभूय शीघ्रं प्रतोष्य बन्धून् पुनरेहि मर्तुम्'[१] इति सूचयामासेति ज्ञेयम् ॥ २७ ॥

**स देवदत्तं सहसा विनाद्य विदार्य वीरो द्विषतां मनांसि ।**
**ध्वजेन सर्वानभिभूय शत्रून् सहेममालेन विराजमानः ॥ २८ ॥**

**विनाद्य** ध्वनिमुत्पाद्य इदमपदेशेनामन्त्र्य च । पुरं प्रति गच्छामीत्युक्त्वा । **विनाद्य** आपूर्य हेममाल्या सह वर्तत इति सहेममालस्तेन ध्वजेन ॥ २८ ॥

---

१. म.भा.ता.निर्णये (८/९७)

**दृष्ट्वा प्रयातांस्तु कुरून् किरीटी हृष्टोऽब्रवीत् तत्र स मत्स्यपुत्रम् ।**
**आवर्तयाश्वान् पशवो जितास्ते याताः परे याहि पुरं प्रहृष्टः ॥२९॥**

**प्रयातान्** दूरतः ॥ २९ ॥

**देवास्तु दृष्ट्वा महदद्भुतं तद्युद्धं कुरूणां सह फाल्गुनेन ।**
**जग्मुर्यथास्वं भवनं प्रतीताः पार्थस्य कर्माणि विचिन्तयन्तः ॥३०॥**

**॥ इति श्रीमन्महाभारते विराटपवणि गोहरणपर्वणि षट्षष्टितमोऽध्यायः ॥**

**॥ इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां षट्षष्टितमोऽध्यायः ॥**

*****

# ६७. सप्तषष्टितमोऽध्यायः

**( उत्तरेण सहितस्य अजुरनस्य विराटनगरं प्रति प्रस्थानम् । )**

**वैशम्पायन उवाच -**

**ततो विजित्य सङ्ग्रामे कुरून् स वृषभेक्षणः ।**
**समानयामास तदा विराटस्य धनं महत् ॥ १ ॥**

**स वृषभेक्षणः** वृषभस्येक्षणं यस्य सः । पुष्करेक्षण इत्यादौ प्रयोक्तव्ये यदेवमाह तेन सवृषभा वृषभैः सहिताः या गावो मत्स्यस्य तवेक्षणं यस्य स इत्यप्यान्तरङ्गिकमर्थमसू-चयद्ग्रन्थकृदिति ज्ञेयम् । सामान्यतोऽन्येषां गतः कर्तव्यान्तराभावादेता नेया इति तदीक्षाणमिति भावः । अत एव सुलग्नोऽग्रिमो ग्रन्थः । **धनं** गोरूपम् ॥ १ ॥

**गतेषु च प्रभग्नेषु धार्तराष्ट्रेषु सर्वतः ।**
**वनान्निष्क्रम्य गहनाद्बहवः कुरुसैनिकाः ॥ २ ॥**

**वनात्** जीवनाशभयात् प्राक् विद्रुत्य प्रविष्टात् ।। २ ।।

**भयात् [१]सन्न्यस्तमनसः समाजग्मुस्ततस्ततः ।**
**मुक्तकेशास्त्वदृश्यन्त स्थिताः प्राञ्जलयस्तदा ।। ३ ।।**

**सन्न्यस्तमनसः** । किं पार्थस्तनुयादपार्थो मध्येध्वतद्दर्शने श्रमोऽस्मदीयो जात इति त्रासः । **मुक्तकेशाः** जयिष्णुषु पुरतः एवं गतौ । न तन्मारणं तैः कर्तव्यमिति नीतेः ।। ३ ।।

**क्षुत्पिपासापरिश्रान्ता विदेशस्था विचेतसः ।**
**ऊचुः प्रणम्य सम्भ्रान्ताः पार्था किं करवाम ते ।। ४ ।।**

तथापि कृतेऽस्मद्राजेन दुर्नयो बहुल इति धृतिहीना आहुः **ऊचुः** इति ।। ४ ।।

**अर्जुन उवाच -**

**स्वस्ति व्रजत वो भद्रं न भेतव्यं कथञ्चन ।**
**नाहमार्तान् जिघांसामि भृशमाश्वासयामि वः ।। ५ ।।**

**अहमार्तान् न जिघांसामि** । तद्विषयिणी ममेच्छाऽपि नास्ति करणं दूरोत्सारितमिति सूचयति । न केवलं तावदेव किन्तु **आश्वासयामि** समाधत्से च ।। ५ ।।

**वैशम्पायन उवाच -**

**तस्य तामभयां वाचं श्रुत्वा योधाः समागताः ।**
**आयुःकीर्तिर्यशोदाभिस्तमाशीर्भिरनन्दयन् ।। ६ ।।**

**योधाः** उपलक्षणया । कीर्तियशसी । कृतार्थे । **तं** पार्थम् ।। ६ ।।

---

१. सन्त्रस्तमनसः । (इति गी. पाठः)

**ततोऽर्जुनं नागमिव प्रभिन्नमुत्सृज्य शत्रून् विनिवर्तमानम् ।**
**विराटराष्ट्राभिमुखं प्रयान्तं नाशक्नुवंस्तं कुरवोऽभियातुम् ।। ७ ।।**

**शत्रून्** स्वान् मृतप्रायान् इत्यभिप्रायात् **उत्सृज्य** त्यक्त्वा **प्रयान्तं** पार्थं **अभियातुं** पृष्ठतः **कुरवः नाशक्नुवन्** शक्ता नाभूवन् । अनन्तरं किमभूदित्यतोऽप्याह **कुरवः** । पराजिता आजौ कुरव इति कुत्सितः शब्दः । **ततः** व्याप्त इति ।। ७ ।।

**ततः स तं मेघमिवापतन्तं विद्राव्य पार्थः कुरुमेघसैन्यम्[1] ।**
**मत्स्यस्य पुत्रं द्विषतां निहन्ता वचोऽब्रवीत् [2]सम्परिष्वज्य भूयः।।८।।**

**ततः** पवमानः 'पवमाने ततः पुमान्' इति विश्वः । **आपतन्तं मेघं** यथा विद्रावयति यथा **कुरुमेघसैन्यं** ततः पार्थरूपो वायुर्विद्राव्य कुरुरूपा मेघास्तदात्मक-सैन्यमिति । **भूयो** भूयः **सम्परिष्वज्य** 'पूर्वमावर्तयाश्वान्' इत्युक्ते **भूय** इत्युक्तिर्वा ।। ८ ।।

**पितुः सकाशे तव तात सर्वे वसन्ति पार्था विदितं तवैव ।**
**तान् मां प्रशंसेर्नगरं प्रविश्य भीतः प्रणश्येद्धि स मत्स्यराजः ।।९।।**

**तव पितुः** विराटस्य । **सकाशे** समीपे । तं प्रतीति यावत् । **तान्** धर्मादीन् **मा प्रशंसेः** न शंस । कुत इत्यत आह । **स मत्स्यराजः भीतः प्रणश्येत्** अपराधः को वा घटितः स्यादिति नाशं बहुक्लेशरूपं प्राप्नुयादिति ।। ९ ।।

**मया जिता सा ध्वजिनी कुरूणां मया च गावो विजिता द्विषद्भ्यः ।**
**पितुः सकाशं नगरं प्रविश्य त्वमात्मनः कर्म कृतं ब्रवीहि ।।१०।।**

तर्हि किं वक्तव्यं गतवता मया शाधीत्यतो वक्ति– **मयेति** ।। मया कृतं यद्यत्कर्म तत् । **आत्मनः** त्वत्सम्बन्धितया ब्रवीहि ।। १० ।।

---

१. कुरुसैन्यवृन्दम् । (इति गी. पाठः)

२. सम्परिरभ्य । (इति गी. पाठः)

**उत्तर उवाच -**

**यत् ते कृतं कर्म न पारणीयं तत् कर्म कर्तुं मम नास्ति शक्तिः ।**
**न त्वां प्रवक्ष्यामि पितुः सकाशे यावन्न मां वक्ष्यसि सव्यसाचिन् ॥**

मनसाऽप्यस्मरणीयं कथं कथय कर्म ममेति कथयामि राजपुरत इति तद्दौर्घट्यमुपपाद्याज्ञावज्ञानं न कार्यम् । यदा वदेति वदति भवांस्तदा वदेयमिति वदति– **यत्ते कृतमि**त्यादिना ।। ११ ।।

**वैशम्पायन उवाच -**

**स शत्रुसेनामवजित्य जिष्णुराच्छिद्य सर्वं च धनं कुरुभ्यः ।**
**श्मशानमागत्य पुनः शमीं तामभ्येत्य तस्थौ शरविक्षताङ्गः ।।१२।।**

**कुरुभ्यः** आच्छिद्य प्रत्याहृत्य ।। १२ ।।

**ततः स वह्निप्रतिमो महाकपिः सहैव भूतैर्दिवमुत्पपात ।**
**तथैव माया विहिता बभूव ध्वजं च सैंहं युयुजे रथे पुनः ।। १३ ।।**

**महाकपिः** हनूमान् । **भूतैः** ध्वजवासिभिः । मायया **विहिता** उपायोऽश्वादिरूपः । सापि **तथैव** बभूव । यथाऽऽगता तथैव गतेति भावः । 'आरम्भोपायशिक्षार्चाचिकित्सातिकृतिष्वपि । **माया** दम्भे कृपायां च' इति विश्वाद्विनातिवृत्तिं सम्भवदर्थो ग्राह्यः । अथवा माया आकारगूहनम्, तथैव प्राग्बभूवेति । **सैंहं** प्राचीनं वैराटेः ।। १३ ।।

**विधाय तच्चायुधमाजिवर्धनं कुरूत्तमानामिषुधीः शरांस्तथा ।**
**प्रायात् स मत्स्यो नगरं प्रहृष्टः किरीटिना सारथिना महात्मना १४**

**कुरूत्तमानाम्** इतरेषाम् । आजिवर्धमानमायुधं यत्र तत्र शम्याम् । **इषुधीः तथा शरांश्चार्जुनस्य स मत्स्यो** निधाय **किरीटिना सारथिना** स प्रयातः । अथवा पश्चानामपि मेलयित्वा स्थापितवानित्येवमुक्तिः ।। १४ ।।

**पार्थस्तु कृत्वा परमार्यकर्म निहत्य शत्रून् द्विषतां निहन्ता ।**
**चकार वेणीं च तथैव भूयो जग्राह रश्मीन् पुनरुत्तरस्य ।**
**विवेश हृष्टो नगरं महात्मना बृहन्नलारूपमुपेत्य सारथिः ।।१५।।**

मायेति कथितं कीदृक् सेत्यत आह– **पार्थस्त्विति** । **महात्मना** उत्तरेण सह ।। १५ ।।

**वैशम्पायन उवाच -**

**ततो निवृत्ताः कुरवः प्रभग्ना वशमास्थिताः ।। १६ ।।**

**वशम्** अर्जुनाय तताम् **आस्थिता** अपि कथञ्चिन्निवृत्ताः । **वशमास्थिताः** वशमातातायां स्यादिति विश्वः ।। १६ ।।

**हस्तिनापुरमुद्दिश्य सर्वे दीना ययुस्तदा ।**
**पन्थानमुपसङ्गम्य फाल्गुनो वाक्यमब्रवीत् ।। १७ ।।**

**राजपुत्र प्रत्यवेक्ष समानीतानि सर्वशः ।**
**गोकुलानि महाबाहो वीर गोपालकैः सह ।। १८ ।।**

**गोपालकैः सह** । **प्रत्यवेक्ष** न किल कापि गौर्मार्गच्युताऽऽसीदिति गणनाय निरीक्ष्य ।। १७ ।।

**ततोऽपराह्णे यास्यामो विराटनगरं प्रति ।। १९ ।।**

**आश्वास्य पाययित्वा च [१]परिप्लाव्य च वाजिनः ।**
**गच्छन्तु त्वरिताश्चेमे गोपालाः प्रेषितास्त्वया ॥ २० ॥**

**परिप्लाव्य इमे गोपालाः** ॥ २० ॥

**नगरे प्रियमाख्यातुं घोषयन्तु च ते जयम् ॥**

**प्रियं** इष्टं विजयं **ते** घोषयन्तु ॥ २१ ॥

**वैशम्पायन उवाच -**

**अथोत्तरस्त्वरमाणः स दूतानाज्ञापयद् वचनात् फाल्गुनस्य ।**
**आचक्षध्वं विजयं पार्थिवस्य भग्नाः परे विजिताश्चापि गावः ॥२२॥**

**आचक्षध्वम्** वदत । स्वानुभवापलापो न कर्तव्य इति प्रार्थयित्वा । गतं । ततश्च वचनं न वचनीयोऽहं पुरतः । विः पक्षिसमूहः आटकुलायमिति शेषः । अपरिभ्रमणसमयत्वात् । पुरगमनानन्तरं राज्ञ इत्यर्जुनस्य स्मृत्या इवेति पूरयित्वा **पार्थिवस्य** इत्यूचे । परमतत्त्वार्थस्त्वयमेवेति युक्तमुक्तम् ॥ २२ ॥

**इत्येवं तौ भारतमत्स्यवीरौ सम्मन्त्र्य सङ्गम्य ततः शमीं ताम् ।**
**अभ्येत्य भूयो विजयेन तृप्तावुत्सृष्टमारोपयतां स्वभाण्डम् ॥२३॥**

शम्यधस्तात् प्रागविसृष्टं **स्वभाण्डं** स्वाश्वभूषणं आरोपयन्त । स्थापितौ । परिप्लाव्येत्युक्तेस्तदनन्तरं स्थाप्यत्वेन तदुत्सर्जनं ज्ञेयम् । रुहेर्णिविपरतो 'रुहः पोऽन्यतरस्याम्'[२] इति हस्य पकारः । यद्वा रूप उपरिभागे । 'सुभद्रां रथमारोप्य'[३] इतिवदिति तात्पर्याद्रूपे रूपम् ॥ २३ ॥

---

१. परिप्लाव्य । (इति गी. पाठः)

२. पा.सू (७/३/६३)

३. सुभद्रामभिमन्युं च रथामारोप्य केशवः ।, इति श्रीमद्भागवते (१०/८७/११): म.भा.ता. निर्णये च (२२/५८)

**स शत्रुसेनामभिभूय सर्वमाच्छिद्य सर्वं च धनं कुरुभ्यः ।**
**वैराटिरायान्नगरं प्रतीतो बृहन्नलासारथिना प्रवीरः ।। २४ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि सप्तषष्टितमोऽध्यायः ।।**

**शत्रुसेनामभिभूय** । गोधनं चाच्छिद्य प्रायात् तेन **बृहन्नलासारथिना** । सह **स प्रतीत** उत्तरो नगरं प्रायादित्यन्वयः ।। २४ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां सप्तषष्टितमोऽध्यायः ।।**

*****

# ६८. अष्टषष्टितमोऽध्यायः

**( अर्जुनेन सह उत्तरस्य नगरे प्रवेशः, विराटयुधिष्ठिरयोर्वार्तालापः । )**

**वैशम्पायन उवाच -**

**धनं चापि विजित्याशु विराटो वाहिनीपतिः ।**
**विवेश नगरं हृष्टश्चतुर्भिः पाण्डवैः सह ।। १ ।।**

**जित्वा त्रिगर्तान् सङ्ग्रामे गाश्चैवादाय सर्वशः ।**
**अशोभत महाराज सहपार्थैः श्रिया वृतः ।। २ ।।**

**सर्वशः** अशेषेण छत्रिन्यायेन वा । ऐकमत्येन वा पार्थैः सहितः **सहपार्थः** ।। २ ।।

**तमासनगतं वीरं सुहृदां हर्षवर्धनम् ।**
**उपासाञ्चक्रिरे सर्वे सह पार्थैः परन्तपाः ।। ३ ।।**

**सर्वे परन्तपाः** । तदमात्यादयः ।। ३ ।।

**उपतस्थुः प्रकृतयः समस्ता ब्राह्मणैः सह ।**
**सभाजितः ससैन्यस्तु प्रतिनन्द्याथ मत्स्यराट् ।। ४ ।।**

**विसर्जयामास तदा द्विजांश्च प्रकृतीस्तथा ।**
**तथा स राजा मत्स्यानां विराटो वाहिनीपतिः ॥ ५ ॥**

**विसर्जयामास** । स्वं स्वं गृहं गच्छतेतीत्युक्तवान् ॥ ५ ॥

**उत्तरं परिपप्रच्छ क्व यात इति चाब्रवीत् ।**
**आचख्युस्तस्य तत् सर्वं स्त्रियः कन्याश्च वेश्मनि ॥ ६ ॥**

**उत्तरं** प्रति **क्व यात** इति **पप्रच्छ अब्रवीच्च** । एतत्प्रश्ने उत्तरं च तत्रत्यो जनः अब्रवीदित्यर्थः । एतदेव विशदयति– **आचख्युरिति** । **स्त्रियः** प्रबुद्धाः **कन्या** उत्तराद्याः । अन्तःपुरचराश्चैव **आचख्युः** ॥ ६ ॥

**अन्तःपुरचराश्चैव कुरुभिर्गोधनं हृतम् ।**
**विजेतुमभिसंरब्ध एक एवातिसाहसात् ॥ ७ ॥**

तद्वचनप्रकारमाह– **कुरुभिरिति** ॥ **गोधनं** युष्मदीयम् । **अभिसंरब्धः** कुपितः ॥ ७ ॥

**बृहन्नलासहायश्च निर्गतः पृथिवीञ्जयः ।**
**उपयातानतिरथान् भीष्मं शान्तनवं कृपम् ।**
**कर्णं दुर्योधनं द्रोणं द्रोणपुत्रं च षड्रथान् ॥ ८ ॥**

एवं **षड्रथान्** कीदृशान् **अतिरथान्** अतिक्रान्तरथिकान् ॥ ८ ॥

**वैशम्पायन उवाच -**

**राजा विराटोऽथ भृशाभितप्तः श्रुत्वा सुतं त्वेकरथेन यातम् ।**
**बृहन्नलासारथिमाजिवर्धनं प्रोवाच सर्वानथ मन्त्रिमुख्यान् ॥**

**आजिवर्धनं** युद्धाभिवर्धकम् । ननु प्रहारमात्रेण मरिष्यमाणमित्यर्थः ॥ ९ ॥

**सर्वथा कुरवस्ते हि ये चान्ये वसुधाधिपाः ।**
**त्रिगर्तान् निःसृतांच्छ्रुत्वा न स्थास्यन्ति कदाचन ।। १० ।।**

**त्रिगर्तान् निःसृतान्** हास्तिनपुरात् । **न स्थास्यन्ति** ।। १० ।।

**तस्माद्गच्छन्तु मे योधा बलेन महता वृताः ।**
**उत्तरस्य परीप्सार्थं ये त्रिगर्तैरविक्षताः ।। ११ ।।**

परीप्सयन्ति नागपुरे स्वसङ्केतानुसारेण त्रिगर्तानां पुरतो गमने परदिने एव अस्मान् प्रत्यागच्छतीति भावः । परीप्सार्थे रक्षार्थे **अविक्षताः** अविच्छिन्नाङ्गाः ।। ११ ।।

**हयांश्च नागांश्च रथांश्च शीघ्रं पदातिसङ्घांश्च ततः प्रवीरान् ।**
**प्रस्थापयामास सुतस्य हेतोर्विचित्रशस्त्राभरणोपपन्नान् ।।१२।।**

**एवं स राजा मत्स्यानां विराटो वाहिनीपतिः ।**
**व्यादिदेशाथ तां क्षिप्रं वाहिनीं चतुरङ्गिणीम् ।। १३ ।।**

**कुमारमाशु जानीत यदि जीवति वा न वा ।**
**यस्य यन्ता गतः षण्ढो मन्येऽहं स न जीवति ।। १४ ।।**

**यस्य यंन्ता गतः षण्ढ** इति श्रवणाद्विहस्येत्युक्तिः । सारथिस्त्वत्सुतस्येति शेषः ।। १४ ।।

**वैशम्पायन उवाच -**

**तमब्रवीद्धर्मराजो विहस्य विराटराजं तु भृशाभितप्तम् ।**
**बृहन्नला सारथिश्चेन्नरेन्द्र परे न नेष्यन्ति तवाद्य गास्ताः ।।१५।।**

**परे** कुरवः । अथ गच्छतीत्यद्यग उत्तरस्तेन अस्ताः निरस्ता इति ।। १५ ।।

**सर्वान् महीपान् सहितान् कुरूंश्च तथैव देवासुरसिद्धयक्षान् ।**
**अलं विजेतुं समरे सुतस्ते स्वनुष्ठितः सारथिना हि तेन ॥१६॥**

**तेन सारथिनाऽनुष्ठितः** अनुष्ठिततदभिन्नसारथिश्चेदित्यर्थः ।। १६ ।।

**वैशम्पायन उवाच -**

**अथोत्तरेण प्रहिता दूतास्ते शीघ्रगामिनः ।**
**विराटनगरं प्राप्य विजयं समवेदयन् ।। १७ ।।**

**समवेदयन्** विज्ञापयाञ्चक्रुः । **नगरं प्राप्य** हे विराटेति **विजयं समवेदयन्** सम्बुद्ध्यावेदयन् ।। १७ ।।

**राज्ञस्तत्सर्वमाचख्यौ मन्त्री विजयमुत्तमम् ।**
**पराजयं कुरूणां चाप्युपायान्तं तथोत्तरम् ।। १८ ।।**

**विजयम्** उत्तरस्य ।। १८ ।।

**सर्वा विनिर्जिता गावः कुरवश्च पराजिताः ।**
**उत्तरः सह सूतेन कुशली च परन्तपः ।। १९ ।।**

**कुशली** कुशलवान् ।। १९ ।।

**युधिष्ठिर उवाच -**

**दिष्ट्या विनिर्जिता गावः कुरवश्च पलायिताः ।**
**नाद्भुतं त्वेव मन्येऽहं यत् ते पुत्रोऽजयत् कुरून् ।।२०।।**

**ते पुत्रो यत्कुरूनजयत्** इति तत् **अद्भुतं न** इति **अहं मन्ये** ।। २० ।।

**ध्रुव एव जयस्तस्य यस्य यन्ता बृहन्नला ।। २१ ।।**

परन्तु तत्रेदं कारणमितीरयति– **ध्रुव** इति ।। २१ ।

**वैशम्पायन उवाच -**

**ततो विराटो नृपतिः सम्प्रहृष्टतनूरुहः ।**
**श्रुत्वा स विजयं तस्य कुमारस्यामितौजसः ।। २२ ।।**

**सम्प्रहृष्टतनूरुहः** रोमाञ्चिततनुः ।। २२ ।।

**आच्छादयित्वा दूतांस्तान् मन्त्रिणः सोऽभ्यचोदयत् ।**
**राजमार्गाः क्रियन्तां मे पताकाभिरलङ्कृताः ।। २३ ।।**

**तान् दूतान्** । **आच्छादयित्वा** वसनाभरणादिकं दत्वेत्यर्थः । **राजमार्गाः मे** पताकादिभिः मुख्यचिह्नभूताभिः ।। २३ ।।

**पुष्पोपहारैरर्च्यन्तां देवताश्चापि सर्वशः ।**
**कुमारा योधमुख्याश्च गणिकाश्च स्वलङ्कृताः ।। २४ ।।**

**देवताः** ग्रामदेव्यादयः । **गणिकाः** वारनार्यः ।। २४ ।।

**वादित्राणि च सर्वाणि प्रत्युद्यान्तु सुतं मम ।**
**घण्टावान् मानवः शीघ्रं मत्तमारुह्य वारणम् ।। २५ ।।**

**शृङ्गाटकेषु सर्वेषु आख्यातु विजयं मम ।**
**उत्तरा च कुमारीभिर्बह्वीभिः परिवारिता ।। २६ ।।**

**शृङ्गाटकेषु** चतुष्पथेषु । 'शृङ्गाटकं भवेद्द्वारिकण्टके च चतुष्पथे' इति मेदिनी ।। २६ ।।

**शृङ्गारवेषाभरणा प्रत्युद्यातु सुतं मम ।। २७ ।।**

**प्रत्युद्यातु** सम्मुखं गच्छतु ।। २७ ।।

**वैशम्पायन उवाच -**

**श्रुत्वा चेदं वचनं पार्थिवस्य सर्वं पुरं स्वस्तिकपाणिभूतम् ।**
**भेर्यश्च तूर्याणि च वारिजाश्च वेषैः परार्घ्यैः प्रमदाः शुभाश्च ।।२८।।**

स्वस्तिमारार्त्यादिकं पाणिषु येषां ते तद्भूतम् । तन्मयम् ।। २८ ।।

**तथैव सूतैः सह मागधैश्च नान्दीवाद्याः पणवास्तूर्यवाद्याः ।**
**पुराद्विराटस्य महाबलस्य प्रत्युद्ययुः पुत्रमनन्तवीर्यम् ।। २९ ।।**

**नान्दीवाद्याः** 'नन्दिरवं प्रकुर्वता'[1] इत्युक्तेर्वाद्यविशेषाः । **अनन्तवीर्यम्** । अपारसामर्थ्यम् ।। २९ ।।

**वैशम्पायन उवाच -**

**प्रस्थाप्य सेनां कन्याश्च गणिकाश्च स्वलङ्कृताः ।**
**मत्स्यराजो महाप्राज्ञः प्रहृष्ट इदमब्रवीत् ।। ३० ।।**

**अक्षानाहर सैरन्ध्रि कङ्क द्यूतं प्रवर्तताम् ।**
**तं तथावादिनं दृष्ट्वा पाण्डवः प्रत्यभाषत ।। ३१ ।।**

हे **सैरन्ध्रि** हे **कङ्क तथावादिनं** अक्षानाहरेति वक्तारम् । **पाण्डवः** धर्मः ।।३१।।

**न देवितव्यं हृष्टेन कितवेनेति नः श्रुतम् ।**
**तं त्वामद्य मुदा युक्तं नाहं देवितुमुत्सहे ।। ३२ ।।**

द्यूतक्रीडानीतिमाह – **नेति** । **हृष्टेन** सह । तथा **कितवेन** वञ्चकेन । च्छन्नद्विजे-नेत्यर्थः ।। ३२ ।।

---

१. इति म.भा.ता.निर्णये (६/५४)

**प्रियं तु ते चिकीर्षामि वर्ततां यदि मन्यसे ।। ३३ ।।**

नेतीदानीं वदन्नहं **ते प्रियम्** इष्टं **चिकीर्षामि । यदि मन्यसे** तर्ह्यनिर्वाहात् द्यूतं प्रवर्तताम् ।। ३३ ।।

**विराट उवाच -**

**स्त्रियो गावो हिरण्यं च यच्चान्यद् वसु किञ्चन ।**
**न मे किञ्चित् त्वया रक्ष्यमन्तरेणापि देवितुम् ।। ३४ ।।**

**त्वया अन्तरेण** विना **देवितुम् । किञ्चनापि रक्ष्यम् ।** सर्वं ग्लहतया देयमेव ।। ३४ ।।

**कङ्क उवाच -**

**किं ते द्यूतेन राजेन्द्र बहुदोषेण मानद ।**
**देवने बहवो दोषास्तस्मात् तत् परिवर्जयेत् ।। ३५ ।।**

**बहवो दोषा** यस्मिंस्तेन **द्यूतेन किम्** । किंफलम् । तत् देवनं **परिवर्जयेत्** त्यजेत् ।।३५।।

**श्रुतस्ते यदि वा दृष्टः पाण्डवेयो युधिष्ठिरः ।**
**सराष्ट्रं सुमहत् स्फीतं भ्रातॄंश्च त्रिदशोपमान् ।। ३६ ।।**

**राज्यं हारितवान् सर्वं तस्माद्द्यूतं न रोचये ।**
**अथवा मन्यसे राजन् दीव्याम यदि रोचते ।। ३७ ।।**

देवनमतस्त्याजयितुं स्वयं स्वानुभूतं परोक्षतो वक्ति– **श्रुत इति । पाण्डवेयः** गतम् । **ते दृष्टः यदि वा श्रुतः** भवेत् सः । **सुमहत् स्फीतं** रुद्धम् राष्ट्रम् । देशं तथा राज्यम् ।

किञ्चित्पुराधिपत्यमपि **हारितवान्** पराजितवान्। **त्रिदशोपमान् भ्रातॄंश्च** ग्लहपदे निधाय हारितवान्। **तस्मात्** इदानीं तद्द्यूतम्। **न रोचये**। त्वमपि तथा **मन्यसे** चेत् **न रोचय**। **यदि** कर्तव्यं **मन्यसे** तर्हि **दीव्याम** क्रीडयामः ॥ ३६, ३७ ॥

**वैशम्पायन उवाच -**

**प्रवर्तमाने द्यूते तु मत्स्यः पाण्डवमब्रवीत्।**
**पश्य पुत्रेण मे युद्धे तादृशाः कुरवो जिताः ॥ ३८ ॥**

**तादृशाः** बलिष्ठतया विश्रुता अपि ॥ ३८ ॥

**ततोऽब्रवीन्महात्मा स एनं राजा युधिष्ठिरः।**
**बृहन्नला यस्य यन्ता कथं स न जयेद्युधि ॥ ३९ ॥**

**बृहन्नला** यदर्जुनरूपार्थविवक्षया यन्तेति पुल्लिङ्गप्रयोगः। एतत्प्रकारः प्राक् प्रकाशितोऽनुसन्धेयः ॥ ३९ ॥

**इत्युक्तः कुपितो राजा मत्स्यः पाण्डवमब्रवीत्।**
**समं पुत्रेण मे षण्ढं ब्रह्मबन्धो प्रशंससि ॥ ४० ॥**

हे **ब्रह्मबन्धो** तदाभास, **मे** मम **पुत्रेण समं प्रशंससि** ॥ ४० ॥

**वाच्यावाच्यं न जानीषे नूनं मामवमन्यसे।**
**भीष्मद्रोणमुखान् सर्वान् कस्मान्न स विजेष्यति ॥४१॥**

**वाच्यावाच्यम्**। इदं वक्तव्यम् न वक्तव्यमिति **न** त्वं **जानीषे**। गतम्। **मां नूनं** निश्चयेन विमन्यसे। अनेन मत्पुत्रषण्ढसमतावचनेन अवजानासि। **सः** मम सुतः **विजेष्यति** जेष्यति ॥ ४१ ॥

**वयस्यत्वात् तु ते ब्रह्मन्नपराधमिमं क्षमे।**
**नेदृशं तु पुनर्वाच्यं यदि जीवितुमिच्छसि ॥ ४२ ॥**

**वयस्यत्वात्** सखित्वात् । **यदि जीवितुमिच्छसि** तर्हीदृशं पुनर्न वाच्यम् । पुनर्वचने हनिष्यामीति तात्पर्यम् ।। ४२ ।।

**युधिष्ठिर उवाच -**

**यत्र द्रोणस्तथा भीष्मो द्रौणिर्वैकर्तनः कृपः ।**
**दुर्योधनश्च राजेन्द्रस्तथाऽन्ये च महारथाः ।। ४३ ।।**

यद्भावि तद्भवत्येवेति निश्चयो यथावस्थितं पुनर्वदति । यत्रेत्यादिचतुः-श्लोकोक्त्या । **अन्ये** बाह्लीकप्रमुखाः ।। ४३ ।।

**मरुद्गणैः परिवृतः साक्षादपि मरुत्पतिः ।**
**कोऽन्यो बृहन्नलायास्तान् प्रतियुद्ध्येत सङ्गतान् ।।४४ ।।**

**मरुत्पतिः** इन्द्रः **बृहन्नलायाः** सकाशात् ।। ४४ ।।

**यस्य बाहुबले तुल्यो न भूतो न भविष्यति ।**
**अतीव समरं दृष्ट्वा हर्षो यस्योपजायते ।। ४५ ।।**

यस्य अनेनापि बुद्ध्येदयमिति यस्येत्युक्तिः । पाटववशाद्वा । **हर्षो** बहीरोमाञ्चो-त्कर्षः । उत्कर्षश्च मनसः ।। ४५ ।।

**योऽजयत् सङ्गतान् सर्वान् ससुरासुरमानवान् ।**
**तादृशेन सहायेन कस्मात् स न विजेष्यते ।। ४६ ।।**

यः प्राक् **अजयत्** जितवान् ।। ४६ ।।

**विराट उवाच -**

**बहुशः प्रतिषिद्धोऽसि न च वाचं नियच्छसि ।**
**नियन्ता चेन्न विद्येत न कश्चिद्धर्ममाचरेत् ।। ४७ ।।**

न वद पुनरेवमिति **प्रतिषिद्धः** । **बहुश** इत्युक्तिर्यदि जीवितुमिच्छसीति चरमचिकित्सोक्तेर्युक्ता । सहस्रोक्तिस्थल एकवचनमित्याभाणकेन च युक्ता । अन्यापदेशेनोपदिशति - **नियन्तेति** ।। यदि नियन्ता राजादिर्न **चेत्** । कश्चिद्धर्मं नाचरेदतः शिक्षणीयोऽयमिति हृदयम् । आन्तरङ्गिको भावस्तु - यदि **नियन्ता** । एतद्बृहन्नलारूपः **न चेत्** नास्ति चेत् । **कश्चित्** क्षत्रियः । **धर्मं** युद्धादिकं **नाचरेत्** । भवितव्यं सर्वत्राप्यनेन सहायेनेति । मे धनुर्धृत्वा । **नाचरेत्** समरमिति शेषः । [१]'धर्मः पुण्यं च न्याये च स्वभावाचारयोः क्रतौ । उपमायामहिंसायां चापि चोपनिषद्यपि' इति विश्वः । यद्ययं न यन्ता तर्हि क्षत्रधर्ममात्रं लुप्तमित्याक्रोश इति ।। ४७ ।।

**वैशम्पायन उवाच -**

**ततः प्रकुपितो राजा तमक्षेणाहनद्भृशम् ।**
**मुखे युधिष्ठिरं कोपान्नैवमित्येव भर्त्सयन् ।। ४८ ।।**

असहमान इदं तताड नेत्याह– **तत इति** ।। **अक्षेण** पाशेन । **अहनत्** अहन् । **नैवं** वदेति **भर्त्सयन्** ।। ४८ ।।

**बलवत् प्रतिविद्धस्य नस्तः शोणितमावहत् ।**
**तदप्राप्तं महीं पार्थः पाणिभ्यां प्रत्यगृह्णत ।। ४९ ।।**

**नस्तः** नासिकायाः 'नासिकायाः नसपत्तत्सु क्षुद्रेषु' इति नासिकाया नसादेशः । पार्थो युधिष्ठिरः **प्रत्यगृह्णत** प्रत्यगृह्णात् ।। ४९ ।।

**अवैक्षत स धर्मात्मा द्रौपदीं पार्श्वतः स्थिताम् ।**
**सा ज्ञात्वा तमभिप्रायं भर्तुश्चित्तवशानुगा ।। ५० ।।**

---

१. धर्मोऽस्त्री पुण्य आचारे स्वभावोपमयोः क्रतौ ।
अहिंसोपनिषन्न्याये ना धनुर्यमसोमपे ।। - इति मेदिनी

**तमभिप्रायं** त्वया मच्छोणितं ग्राह्यमित्यभिप्रायम् ।। ५० ।।

**पात्रं गृहीत्वा सौवर्णं जलपूर्णमनिन्दिता ।**
**तच्छोणितं प्रत्यगृह्णाद्यत् प्रसुस्राव नस्ततः ।। ५१ ।।**

प्रत्ययलक्षणमिति शसादिपरतया 'पद्दन्...'[१] इति नसोदेशेन नस्त इति नासिकाचर्मवाची । तस्मान्नस्ततः प्रभृतिग्रहणं प्रकारार्थमिति पक्षे न कश्चित् क्लेशः । ततः शोणितस्य भूपतनाद्वक्ष्यमाणप्रत्यवायो न स्यादिति वा । **नस्तः** नासिकायाः तेनोरितं न्यजापीति डः । तनोतीति तः । नासिकायाः न माषाणामश्नीयादितिवत् षष्ठी । नतु मातङ्गस्येत्यस्यानित्यत्वात् प्रत्ययलोपे ।। ५१ ।।

**अथोत्तरः शुभैर्गन्धैर्माल्यैश्च विविधैस्तथा ।**
**अवकीर्यमाणः संहृष्टो नगरं स्वैरमागतः ।। ५२ ।।**

**अवकीर्यमाण** इत्यत्र 'न वा एकेन' इत्यादेः छन्दस्तुल्यत्वान्नाक्षराधिक्यदोषः । **स्वैरं** यथेच्छम् । स्वैः स्वकीयैः राजप्रेषितैः अमा सह सङ्गत इति वा ।। ५२ ।।

**सभाज्यमानः पौरैश्च स्त्रीभिर्जानपदैस्तथा ।**
**आसाद्य भवनं द्वारं पित्रे सम्प्रत्यवेदयत् ।। ५३ ।।**

**सभाज्यमानः** पूज्यमानः **सम्प्रत्यवेदयत्** दूतमुखेन ।। ५३ ।।

**ततो द्वाःस्थः प्रविश्यैव विराटमिदमब्रवीत् ।**
**बृहन्नलासहायश्च पुत्रो द्वार्युत्तरः स्थितः ।। ५४ ।।**

**द्वाःस्थः** क्षत्ता ।। ५४ ।।

**ततो हृष्टो मत्स्यराजः क्षत्तारमिदमब्रवीत् ।**
**प्रवेश्यतामुभौ तूर्णं दर्शनेप्सुरहं तयोः ।। ५५ ।।**

---

१. पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु । पा.सू. (६/१/६३)

**क्षत्तारं कुरुराजस्तु शनैः कर्ण उपाजयत् ।**
**उत्तरः प्रविशत्वेको न प्रवेश्या बृहन्नला ॥ ५६ ॥**

**कर्ण उप** । कर्णाभ्यर्णे ॥ ५६ ॥

**एतस्य हि महाबाहो व्रतमेतत् समाहितम् ।**
**यो ममाङ्गे व्रणं कुर्याच्छोणितं वाऽपि दर्शयेत् ॥ ५७ ॥**

**एतस्य** उत्तरसारथेः । हे महाबाहो तदेवाह– **य** इति ॥ ५७ ॥

**अन्यत्र सङ्ग्रामगतान्न स जीवेत् कथञ्चन ।**
**न मृष्याद्भृशसङ्क्रुद्धो मां दृष्ट्वा तु सशोणितम् ।**
**विराटमिह सामात्यं हन्यात् सबलवाहनम् ॥ ५८ ॥**

**॥ इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि अष्टषष्टितमोऽध्यायः ॥**

**सङ्ग्रामगतात्** अन्यत्र तद्भिन्नस्य ममाङ्गे यो व्रणं शोणितं वा प्रदर्शयेत् स न **जीवेत्** इति व्रतम् । ममैव **सङ्ग्रामे** तु तदुत्पादनं न दोषायेति ज्ञेयम् । **न मृष्यात्** न सहेत, हन्यादेव ॥ ५८ ॥

**॥ इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां अष्टषष्टितमोऽध्यायः ॥**

*****

# ६९. एकोनसप्ततितमोऽध्यायः

**( गोमोचनविषये विराटोत्तरयोर्वार्तालापः । )**

**वैशम्पायन उवाच -**

**ततो राज्ञः सुतो ज्येष्ठः प्राविशत् पृथिवीञ्जयः ।**
**सोऽभिवाद्य पितुः पादौ कङ्कं चाप्युपतिष्ठत ॥ १ ॥**

ततो रुधिरसंयुक्तमनेकाग्रमनागसम् ।
भूमावासीनमेकान्ते सैरन्ध्र्या प्रत्युपस्थितम् ।। २ ।।

ततः पप्रच्छ पितरं त्वरमाण इवोत्तरः ।
केनायं ताडितो राजन् केन पापमिदं कृतम् ।। ३ ।।

**विराट उवाच -**

मयाऽयं ताडितो जिह्मो न चाप्येतावदर्हति ।
प्रशस्यमाने यच्छूरे त्वयि षण्ढं प्रशंसति ।। ४ ।।

**उत्तर उवाच -**

अकार्यं ते कृतं राजन् क्षिप्रमेव प्रसाद्यताम् ।
मा त्वां ब्रह्मविषं घोरं समूलमिह निर्दहेत् ।। ५ ।।

अर्जुनवचनतः सर्वजनानामिदानीं बाधकमुपन्यस्यति– **मेति** ।। यद् ब्रह्मविषम् । **समूलम्** अपि **निर्दहेत्** निर्दहतु । यत्समूलम् निर्दहेत् ब्रह्मविषं **त्वाम्** । **मां** मामपि निर्दहेदिति किं वक्तव्यमिति वा । विभक्तिरूपकमव्ययं नञा निर्दिष्टमनित्यमिति वा **मा** इति मेयम् । अतः **क्षिप्रं प्रसाद्यताम्** ।। ५ ।।

**वैशम्पायन उवाच -**

स पुत्रस्य वचः श्रुत्वा विराटो राष्ट्रवर्धनः ।
क्षमयामास कौन्तेयं भस्मच्छन्नमिवानलम् ।। ६ ।।

**भस्मच्छन्नमनलमिव** विद्यमानम् ।। ६ ।।

क्षमयन्तं तु राजानं पाण्डवः प्रत्यभाषत ।
चिरं क्षान्तमिदं राजन् न मन्युर्विद्यते मम ।। ७ ।।

**क्षमयन्तं** क्षमाऽस्यास्तीत्यर्शआद्यचि क्षमां कुर्वन्तं क्षमयन्तम् । अतो न पुगागमप्रसक्तिः । क्षमापयन्तमित्यर्थः । **चिरं** प्रागेव ।। ७ ।।

**यदि ह्येतत् पतेद्भूमौ रुधिरं मम नस्ततः ।**
**सराष्ट्रस्त्वं महाराज विनश्येथा न संशयः ॥ ८ ॥**

क्षमापूर्वमेवैतत्कर्मणा कृतेति तदाह– **यदीति** । मम रुधिरं भूमौ पतेत् । तर्हि **सराष्ट्रः** नश्येथाः । ततः सराष्ट्रस्य तव नाशात् । नः वित् ज्ञानम् । नेति भूमौ पतेदिति । **संशयः** सम्यक् शयो यस्य सः सन् यत् यत्नवान् भवामीति एतद्रुधिरग्रहणं कृतमित्यतीतान्वयो वा ॥ ८ ॥

**न दूषयामि ते राजन् यद्वै हन्याददूषकम् ।**
**बलवन्तं प्रभुं राजन् क्षिप्रं दारुणमाप्नुयात् ॥ ९ ॥**

हे **राजन् अदूषकं हन्यात्** । तं **बलवन्तं** यो हतो दूषयेत् **क्षिप्रं दारुणं** प्राप्नुयादिति हेतोः । ते मह्यं मे रूपं यत्कर्म तन्न दूषयामीत्यन्वयः । बलवदूषणे पुनश्च ताडनं भवेदिति भावः ॥ ९ ॥

**वैशम्पायन उवाच -**

**शोणिते तु व्यतिक्रान्ते प्रविवेश बृहन्नला ।**
**अभिवाद्य विराटं तु कङ्कं चाप्युपतिष्ठत ॥ १० ॥**

**व्यतिक्रान्ते** तत्स्रावविच्छेदे सतीत्यर्थः । **कङ्कञ्चाप्यभिवाद्य** अतिष्ठत् **उपातिष्ठत** इत्यर्थः ॥ १० ॥

**क्षमयित्वा तु कौरव्यं रणादुत्तरमागतम् ।**
**प्रशशंस ततो मत्स्यः शृण्वतः सव्यसाचिनः ॥ ११ ॥**

**कौरव्यं** युधिष्ठिरं **क्षमयित्वा** क्षमावन्तं कृत्वा **सव्यसाचिनः शृण्वतः** कङ्केन बहुशस्तत्स्तवनेऽपि तमनादृत्येत्यर्थः ॥ ११ ॥

**त्वया दायादवानस्मि कैकेयीनन्दिवर्धन ।**
**त्वया मे सदृशः पुत्रो न भूतो न भविष्यति ।। १२ ।।**

**पदं पदसहस्रेण यश्चरन् नापराध्नुयात् ।**
**तेन कर्णेन ते तात कथमासीत् समागमः ।। १३ ।।**

**पदं** स्वलक्ष्यस्थानं **पदसहस्रेण** इतस्ततश्चरन्नपि **नापराध्नुयात्** राध्नोतेर्विधिलिङि रूपम् । प्रमादयुक्तो न भवेदिति यावत् । तं ताडयेदेवेति भावः । **समागमः** । युद्धं यद्वा **पदसहस्रेण** अश्रुसहस्रेण यः सूर्यः **पदं** मानसोत्तरगिरिगततत्कालगन्तव्यस्थानं तत्तत्काले नापराध्नुयान्न त्यजेत् । **तेन** तदात्मकेन कर्णेनेत्यपि । 'पदं स्थाने शरे त्राणे पादाङ्कपादचिह्नयोः । शब्देऽंशुवस्तुवाक्येषु व्यवसायापदेशयोः'[1] इति वैजयन्ती ।।१३।।

**आचार्यो वृष्णिवीराणां कौरवाणां च यो द्विजः ।**
**सर्वक्षत्रस्य चाचार्यः सर्वशस्त्रभृतां वरः ।। १४ ।।**

**वृष्णिवीराणाम्** । सात्यक्यादीनामर्जुनशिष्याणाम् एतद्विद्यासन्ततित्वात् केचिदप्रसिद्धाः शूरा एतस्मादस्त्राभ्यासं चक्रुरिति वा वृष्णिवीराणामाचार्य इत्युक्तिः । **यो द्विजो** द्रोण **आचार्यो** गुरुः ।। १४ ।।

**तेन द्रोणेन ते तात कथमासीत् समागमः ।**
**आचार्यपुत्रो यः शूरः सर्वशस्त्रभृतामपि ।। १५ ।।**

**अश्वत्थामेति विख्यातस्तेनासीत् सङ्गरः कथम् ।**
**रणे यं प्रेक्ष्य सीदन्ति हृतस्वा वणिजो यथा ।। १६ ।।**

---

१. पदं शब्दे च वाक्ये च व्यवसायापदेशयोः ।
पादतच्चिह्नयोः स्थानत्राणयोरङ्कवस्तुनोः ।। - इति विश्वः ।
पदं व्यवसितित्राणस्थानलक्ष्माङ्घ्रिवस्तुषु । - इत्यमरः ।

स नीलकण्ठावतार इत्यप्याह– **सङ्गर इति** ।। सङ्गतकालिमकरं गरं विषं यस्येति ।। १६ ।।

**कृपेण तेन ते तात कथमासीत् समागमः ।**
**पर्वतं योऽभिविद्ध्येत राजपुत्रो महेषुभिः ।। १७ ।।**

**दुर्योधनेन ते तात कथमासीत् समागमः ।**
**यस्त्वं धनमथाजैषीः कुरुभिर्ग्रस्तमाहवे ।। १८ ।।**

**धनं** गोधनम् । हृतं स्वं धनं येषां तेषाम् ।। १८ ।।

**अवगाढा द्विषन्तो मे सुखो वातोऽभिवाति माम् ।**
**तेषां भयाभिपन्नानां सर्वेषां बलशालिनाम् ।। १९ ।।**

**मे द्विषन्तः** कौरवाः **अवगाढाः** । अदृढाः पलायिता इति यावत् । सुखः सुखकरः यद्यस्माद् अथ तस्मात् । पूर्वेणान्वयः ।। १९ ।।

**नूनं प्रकाल्य तान् सर्वांस्त्वया युधि नरर्षभ ।**
**आच्छिन्नं गोधनं सर्वं शार्दूलेनामिषं यथा ।। २० ।।**

**।।इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि एकोनसप्ततितमोऽध्यायः ।।**

**तान्** कौरवान् **प्रकाल्य** जित्वा पूर्वं बलशालिनाम् अपजयानन्तरं भीतानां **गोधनं आच्छिन्नम्** । **शार्दूलेन** ग्रस्तमामिषं **यथा** हर्तुमशक्यं तथाऽशक्यमपि **आच्छिन्नम्** ।। २० ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां एकोनसप्ततितमोऽध्यायः ।।**

*****

# ७०. सप्ततितमोऽध्यायः

( उत्तरकर्तृकविराटप्रबोधनम् । )

**उत्तर उवाच -**

**न मया निर्जिता गावो न मया निर्जिताः परे ।**
**कृतं तत् सकलं तेन देवपुत्रेण केनचित् ।। १ ।।**

उत्तर उत्तरमीरयति – **नेति** ।। भूयोभूयो **न मया** कृतमिति वक्तव्ये मयेति द्विरुक्तिः । **तेन** आगतेन । 'तकारश्चागते' इति विश्वः ।। १ ।।

**स हि भीतं द्रवन्तं मां देवपुत्रो न्यवर्तयत् ।**
**स चातिष्ठद्रथोपस्थे वज्रसंहननो युवा ।। २ ।।**

**वज्रसंहननः** । तद्वद्दृढस्कन्धः । इन्द्रात्मा स इत्यर्थः ।। २ ।।

**तेन ता निर्जिता गावः कुरवश्च पराजिताः ।**
**तस्य तत् कर्म वीरस्य न मया तात तत् कृतम् ।। ३ ।।**

**तत् कर्म** । **तस्य** वीरस्यैव ।। ३ ।।

**स हि शारद्वतं द्रोणं द्रोणपुत्रं च षड्रथान् ।**
**सूतपुत्रं च भीष्मं च चकार विमुखाञ्छरैः ।। ४ ।।**

कथं समागम इत्यादेरुत्तरमाह– **स हीति** ।। **शारद्वतम्** कृपम् । पराजयो विशिष्टे विशिष्टानामिति प्रश्नक्रमातिक्रमणमिति ज्ञेयम् । कृपादीन् **षड्रथान्** ।। ४ ।।

**दुर्योधनं विकर्णं च सनागमिव यूथपः ।**
**प्रभग्नमब्रवीद्भीतं राजपुत्रं महाबलः ।। ५ ।।**

नागं दुर्बलं करिणम् । सनागह्रदम् । **यूथपो** गजराज इवेति वा । **राजपुत्रं** धृतराष्ट्रपुत्रम् ।। ५ ।।

**न हास्तिनपुरे त्राणं तव पश्यामि किञ्चन ।**
**व्यायामेन परीप्सस्व जीवितं कौरवात्मज ।। ६ ।।**

त्राणं त्रातृ । व्यायामेन । गिरिगह्वरादिगमनेन । 'व्यायामो दुर्गसञ्चारे व्यायामं पौरुषे श्रमे' इति विश्वः । जीवितं **परीप्सस्व** रक्षय ।। ६ ।।

**न मोक्ष्यसे पलायंस्त्वं राजा युद्धे मनः कुरु ।**
**पृथिवीं भोक्ष्यसे जित्वा हतो वा स्वर्गमाप्स्यसि ।। ७ ।।**

**जित्वा** माम् ।। ७ ।।

**स निवृत्तो नरव्याघ्रो मुञ्चन् वज्रनिभाञ्छरान् ।**
**सचिवैः संवृतो राजा रथे नाग इवाश्वसन् ।। ८ ।।**

**स** दुर्योधनः । **नाग इव** सर्पवत् ।। ८ ।।

**तं दृष्ट्वा रोमहर्षोऽभूदुरुकम्पश्च मारिष ।**
**स तत्र सिंहसङ्काशमनीकं व्यधमच्छरैः ।। ९ ।।**

**तं** प्रत्यागतम् दुर्योधनादिकं **रोमहर्षः** । **उरुकम्पश्च अभूत्** इति पृथक् पृथगन्वेति । ममेति शेषः । **स** देवपुत्रः ।। ९ ।।

**तत् प्रणुद्य रथानीकं सिंहसंहननो युवा ।**
**कुरूंस्तान् प्रहसन् राजन् संस्थितान् हृतवाससः ।।१०।।**

**हृतवाससः** अपहृतवान् **प्रणुद्य** स्थितः ।। १० ।।

**एकेन तेन वीरेण षड्रथाः परिनिर्जिताः ।**
**शार्दूलेनेव मत्तेन यथा वनचरा मृगाः ॥ ११ ॥**

षट् रथा इति पदे । यथा वनं वनमनतिक्रम्य चरन्तीति ते तथा । पदमेकं । यद्वा इना स्वेच्छामात्रेण । इरिच्छेति गतम् । वमन्तीति वमन्तस्तेषां भावोऽवमता । येन स तेनेति वा । स्वेच्छामात्रतस्तद्रक्तोद्गारकेणेत्यर्थः । अतो नान्यतरातिरेकः । शार्दूलतुलना वनचरा मृगा यथा तथैते पराजिता इति वा यथान्वयो अजैषीत् जितवान् ॥ ११ ॥

**विराट उवाच -**

**क्व स वीरो महाबाहुर्देवपुत्रो महायशाः ।**
**यो मे धनमथाजैषीत् कुरुभिर्ग्रस्तमाहवे ॥ १२ ॥**

**इच्छामि तमहं द्रष्टुमर्चितुं च महाबलम् ।**
**येन मे त्वं च गावश्च रक्षिता देवसूनुना ॥ १३ ॥**

**उत्तर उवाच -**

**अन्तर्धानं गतस्तत्र देवपुत्रो महाबलः ।**
**स तु श्वो वा परश्वो वा मन्ये प्रादुर्भविष्यति ॥ १४ ॥**

**प्रादुर्भविष्यति** इति **मन्ये** ॥ १४ ॥

**वैशम्पायन उवाच -**

**एवमाख्यायमानं तु छन्नं सत्रेण पाण्डवम् ।**
**वसन्तं तत्र नाज्ञासीद्विराटो वाहिनीपतिः ॥ १५ ॥**

**सत्रेण** वेषेण **च्छन्नम्** । **नाज्ञासीत्** न ज्ञातवान् ॥ १५ ॥

ततः पार्थोऽभ्यनुज्ञातो विराटेन महात्मना ।
प्रददौ तानि वासांसि विराटदुहितुः स्वयम् ।। १६ ।।

विराटेन अभ्यनुज्ञातः गृहं गच्छेति । दुहितुः दुहित्रे ।। १६ ।।

उत्तरा तु महार्हाणि विविधानि नवानि च ।
प्रतिगृह्याभवत् प्रीता तानि वासांसि भामिनी ।। १७ ।।

मन्त्रयित्वा तु कौन्तेय उत्तरेण महात्मना ।
इतिकर्तव्यतां सर्वां राजन् पार्थे युधिष्ठिरे ।। १८ ।।

युधिष्ठिरे विषये इतिकर्तव्यतां इदमित्येव रूपम् ।। १८ ।।

ततस्तथा तद्व्यदधाद्यथावत् पुरुषर्षभः ।
सह पुत्रेण मत्स्यस्य प्रहृष्टा भरतर्षभाः ।। १९ ।।

।। इति श्रीमन्महाभारते विराटपर्वणि गोहरणपर्वणि सप्ततितमोऽध्यायः ।।

पुरुषर्षभः अर्जुनः मत्स्यस्य पुत्रेण सह यथालोचितवान् । तत् तद्यथावत् सम्यक् तथा व्यदधात् ।। १९ ।।

।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां सप्ततितमोऽध्यायः ।।

## ।। इति गोहरणपर्व ।।

*****

# ५. वैवाहिकपर्व

## ७१. एकसप्ततितमोऽध्यायः

( विराटं प्रति अर्जुनेन युधिष्ठिरादीनां परिचयदानम् )

**ततस्तृतीये दिवसे भ्रातरः पञ्च पाण्डवाः ।**
**स्नाताः शुक्लाम्बरधराः समये चरितव्रताः ।। १ ।।**

**ततः** उत्तरदेशविजयदिनात् । **समये** स्वसङ्केतिते काले । चरितं व्रतं यैस्ते तथा ।। १ ।।

**युधिष्ठिरं पुरस्कृत्य सर्वाभरणभूषिताः ।**
**द्वारि मत्ता यथा नागा भ्राजमाना महारथाः ।। २ ।।**

**द्वारि** गृहबहिर्द्वारि ।। २ ।।

**विराटस्य सभां गत्वा भूमिपालासनेष्वथ ।**
**निषेदुः पावकप्रख्याः सर्वधिष्ण्येष्विवाग्नयः ।। ३ ।।**

**भूमिपालासनेषु** राजासनेषु **धिष्ण्येषु** आहवनीयादिकुण्डेषु सर्वतः राजकार्याणि कर्तुम् ।। ३ ।।

**तेषु तत्रोपविष्टेषु विराटः पृथिवीपतिः ।**
**आजगाम सभां कर्तुं राजकार्याणि सर्वशः ।। ४ ।।**

**सभां** प्रत्याजगाम ।। ४ ।।

**श्रीमतः पाण्डवान् दृष्ट्वा ज्वलतः पावकानिव ।**
**मुहूर्तमिव च ध्यात्वा सरोषः पृथिवीपतिः ।। ५ ।।**

**ध्यात्वा** अब्रवीदित्युत्तरेणान्वयः ।। ५ ।।

अथ मत्स्योऽब्रवीत् कङ्कं देवरूपमिव स्थितम् ।
मरुद्गणैरुपासीनं त्रिदशानामिवेश्वरम् ॥ ६ ॥

स किलाक्षातिवापस्त्वं सभास्तारो मया वृतः ।
अथ राजासने कस्मादुपविष्टस्त्वलङ्कृतः ॥ ७ ॥

**अक्षातिवापः सभास्तारः** सन् मया वृतः कङ्कः त्वं किल ॥ ७ ॥

**वैशम्पायन उवाच -**

परिहासेप्सया वाक्यं विराटस्य निशम्य तत् ।
स्मयमानोऽर्जुनो राजन्निदं वचनमब्रवीत् ॥ ८ ॥

**परिहासेप्सया** अपहासेच्छया । **वाक्यं** किलेत्याद्युक्तम् । **स्मयमानः** ईषद्धसन् ॥ ८ ॥

इन्द्रस्यार्धासनं राजन्नयमारोढुमर्हति ।
ब्रह्मण्यः श्रुतवांस्त्यागी यज्ञशीलो दृढव्रतः ॥ ९ ॥

**ब्रह्मण्यः** ब्राह्मणेषु साधुः ॥ ९ ॥

एष विग्रहवान् धर्म एष वीर्यवतां वरः ।
एष बुद्ध्याऽधिको लोके तपसां च परायणम् ॥ १० ॥

**धर्मः विग्रहवान् एषः** । सुकृतमेवैतत्कृततनुः इति बहिः । आन्तरङ्गिको भावस्तु **धर्मो** यम एव **विग्रहवान्** यमरूपीति । **परायणं** मुख्याश्रयः ॥ १० ॥

एषोऽस्त्रं विविधं वेत्ति त्रैलोक्ये सचराचरे ।
न चैवान्यः पुमान् वेत्ति न वेत्स्यति कदाचन ॥ ११ ॥

**त्रैलोक्ये** त्रिलोक्ये । **सचराचरे** त्रिलोक्ये । त्रिलोकीभवे जने तन्मध्ये इति वा । तदेवव्यनक्ति – **नचेति** ।। ११ ।।

**न देवा नासुराः केचिन्न मनुष्या न राक्षसाः ।**
**गन्धर्वयक्षप्रवराः सकिन्नरमहोरगाः ।। १२ ।।**

**दीर्घदर्शी महातेजाः पौरजानपदप्रियः ।**
**पाण्डवानामतिरथो यज्ञधर्मपरो वशी ।। १३ ।।**

**महर्षिकल्पो राजर्षिः सर्वलोकेषु विश्रुतः ।**
**बलवान् धृतिमान् दक्षः सत्यवादी जितेन्द्रियः ।**
**धनैश्च सञ्चयैश्चैव शक्रवैश्रवणोपमः ।। १४ ।।**

**सत्यवादी** । अभिहितधनैः । विश्रवसोऽपत्यं वैश्रवणः । गतम् । कुबेरः तद्वद्धनघन इत्यर्थः । **सञ्चयैः** प्रतिसवं गारुडचयनादिर्विहित इति शतमन्युत्वात् तैर्यथा युक्तः शक्रस्तथाऽयं सञ्चयसञ्चयवान् । आर्थिकः क्रमः बलीयस्त्वात् । अभ्यर्हितत्वाच्छक्रग्रहः प्राक् ।। १४ ।।

**यथा मनुर्महातेजा लोकानां परिरक्षिता ।**
**एवमेष महातेजाः प्रजानुग्रहकारकः ।। १५ ।।**

**मनुः** स्वायम्भुवः । **प्रजानुग्रहं** करोतीति कारकः ।। १५ ।।

**अयं कुरूणां ऋषभो धर्मराजो युधिष्ठिरः ।**
**अस्य कीर्तिः स्थिता लोके सूर्यस्येवोद्यतः प्रभा ।। १६ ।।**

प्रकृतमनुसरन्नाह– **अयमिति** ।। उदयं प्राप्नुवानस्य । उत्पूर्वकस्येणे रूपम् ।।१६।।

**संसरन्ति दिशः सर्वा यशसोऽस्य इवांशवः ।**
**उदितस्येव सूर्यस्य तेजसोरुगभस्तयः ।। १७ ।।**

**दिशः** प्रधाना इव **सर्वा** विदिशश्च । **यशसो अंशवो** अंशाः । **सूर्यस्य** तेजसा प्रधानेन **उरुगभस्तयः** किरणा यथा तथा संसरन्ति । **अस्य इव** इत्यत्र विवक्षाभावादसन्धिः । **अस्यः** निरस्यः । सममुभयत्रापीति योजयन्ति । यमेर्निष्ठान्तस्यानुनासिक-लोपे रूपम् । यद्वा **अस्य** निरस्य । संवारणमुद्दिश्य सरन्तीति । चोरादिनिवारणं कर्तुं प्रसरन्तीति सः । कोपे वारणे । 'सः कोपे च निवारणे' इति विश्वा-नेकार्थध्वनिपदमञ्जर्यौ ।। १७ ।।

**एनं दशसहस्राणि कुञ्जराणां तरस्विनाम् ।**
**अन्वयुः पृष्ठतो राजन् यावदध्यावसत् कुरून् ।। १८ ।।**

**यावत् कुरून्** तद्देशान् । **अध्यावसत्** । 'उपान्वध्याङ् वसः'[1] इति द्वितीया । तरस्विनां बलवतां 'तरो बले च वेगे च' इति विश्वः ।। १८ ।।

**त्रिंशदेनं सहस्राणि रथाः काञ्चनमालिनः ।**
**सदश्वैरुपसम्पन्नाः पृष्ठतोऽनुययुस्तदा ।। १९ ।।**

**त्रिंशत् सहस्राणि** । 'विंशत्याद्याः सदेकत्वे' इत्यमरः ।। १९ ।।

**एवमष्टशताः सूताः सुमृष्टमणिकुण्डलाः ।**
**अब्रुवन् मागधैः सार्धं पुरा शक्रमिवर्षयः ।। २० ।।**

अष्टौ शतं येषां ते तथा **अब्रुवन्** जय राजन्निति ।। २० ।।

**एनं नित्यमुपासन्त कुरवः किङ्करा यथा ।**
**सर्वे च राजन् राजा नो धनेश्वरमिवामराः ।। २१ ।।**

**कुरवो** निर्वाहात् । **राजन्** इतरे । तदुपासनप्रकारमनेन वाऽऽह– **नः** अस्माकं **राजेति** ।। २१ ।।

---

१. पा.सू. (१/४/४८)

**अर्जुन उवाच -**

**य एष बल्लवो ब्रूते सूदस्तव नराधिप ।**
**एष भीमो महाराज भीमवेगपराक्रमः ॥ ३ ॥**

लोकप्रसिद्ध्यनुसारेण उत्तरावरत्वेन स्वाभिप्रेतत्वाद्वा विराटेन प्रथमतोऽर्जुनः स्वप्रश्ने कृतेऽपि भीममाहात्म्यस्य स्वानुभवसिद्धत्वेन वयसा च तस्यैव युधिष्ठिरानन्तर्याच्च स्वयं तमादावाह– **य इति** ॥ यस्तव **सूदः** यं चैषो जनः **बल्लव** इति **ब्रूते** आत्मानं तथा **य एष** ब्रूत इति वा । स **एष भीमः** त्वत्पृष्टः ॥ ३ ॥

**एष क्रोधवशान् हत्वा पर्वते गन्धमादने ।**
**सौगन्धिकानि दिव्यानि कृष्णार्थे समुपाहरत् ॥ ४ ॥**

एतावन्तं कालं क्व स्थिता इत्याशयस्योत्तरमप्यर्थादाह– **एष इति** ॥ **क्रोधवशान्** तन्नामकान् गणान् **सौगन्धिकानि** कमलानि । अनेनार्थात् तीर्थयात्रापरायणा इत्युक्तमिति हृदयम् ॥ ४ ॥

**गन्धर्व एष वै हन्ता कीचकानां दुरात्मनाम् ।**
**व्याघ्रान् ऋक्षान् वराहांश्च हतवान् स्त्रीपुरे तव ॥ ५ ॥**

त्वदनुभवारूढमप्येतदित्याह– **गन्धर्व इति** ॥ **कीचकानां** निहन्ता **गन्धर्व** इति त्वन्नगरे य उद्घोषस्तत्रायमेव स **गन्धर्वः** । **तव स्त्रीपुरे** अन्तःपुरे ॥ ५ ॥

**यश्चासीदश्वबन्धस्ते नकुलोऽयं परन्तपः ।**
**गोसङ्ख्यः सहदेवश्च माद्रीपुत्रौ महारथौ ॥ ६ ॥**

**अश्वबन्धो** सोऽयमेव नकुलः । **गोसंङ्ख्यो** गोपालः सोऽयमेव **सहदेवः** । इत्येनौ ॥ ६ ॥

**शृङ्गारवेषाभरणौ रूपवन्तौ यशस्विनौ ।**
**महारथसहस्राणां समर्थौ भरतर्षभौ ॥ ७ ॥**

वेषो वस्त्रालङ्कारः । **महारथसहस्राणां** जये **समर्थौ** ॥ ७ ॥

**एषा पद्मपलाशाक्षी सुमध्या चारुहासिनी ।**
**सैरन्ध्री द्रौपदी राजन् यस्यार्थे कीचका हताः ॥ ८ ॥**

या **सैरन्ध्री** इति तव गृहेऽभूत्, **यस्या अर्थे** यन्निमित्तं **कीचका हताः** । सन्धिरार्षः । यस्येति सर्वनामनपुंसकतेत्यन्तरं गत्वा नपुंसकलिङ्गता । विस्तृतं चैतत्प्राक् । एषैव **द्रौपदी** सा ॥ ८ ॥

**अर्जुनोऽहं महाराज व्यक्तं ते श्रोत्रमागतः ।**
**भीमादवरजः पार्थो यमाभ्यां चापि पूर्वजः ॥ ९ ॥**

स्वस्तवस्य जुगुप्सितत्वात् सङ्कोचेन स्वरूपमाह– **व्यक्तमिति** ॥ व्यक्तं यथा भवति तथा **ते** । **श्रोत्रं** श्रोत्रपथं **आगतः** त्वया श्रुतचारित्र इति यावत् ॥ ९ ॥

**उषिताः स्मः महाराज सुखं तव निवेशने ।**
**अज्ञातवासमुषिता गर्भवास इव प्रजाः ॥ १० ॥**

ये **अज्ञातवासमुषिताः** गतम् । **गर्भवासे प्रजा** इव दुःखेनोषिता वयं तु हे **महाराज** तव **निवेशने सुखम् उषिताः स्म** किल । अनेन यस्मिन्नङ्गे त्वया कशेन ताडितं तेन महद्दण्डः सम्पादितमिति मर्मस्पृशन् उत्तर उत्तरमवादीदिति ज्ञायते ॥१०॥

**वैशम्पायन उवाच -**

**यदाऽर्जुनेन ते वीराः कथिताः पञ्च पाण्डवाः ।**
**तदाऽर्जुनस्य वैराटिः कथयामास विक्रमम् ॥ ११ ॥**

**पुनरेव च तान् पार्थान् दर्शयामास चोत्तरः ।। १२ ।।**

उत्तर उवाच -

**य एष जाम्बूनदशुद्धगौरतनुर्महान् सिंह इव प्रवृद्धः ।**
**प्रचण्डघोणः पृथुदीर्घनेत्रस्ताम्रायताक्षः कुरुराज एषः ।।१३।।**

**जाम्बूनदवत् शुद्धः** स्वच्छो **गौरः** पीतवर्णो यस्याः सा तादृशी तनुर्यस्य सः **प्रवृद्धः सिंह इव महान्** । सर्वक्षत्रश्रेष्ठः । **प्रचण्डघोण** उन्नतनासिकः । पृथुनी दीर्घे नेत्रे परिधानोत्तरीयं वस्त्रं यस्य सः । 'नेत्रं मन्थगुणे वस्त्रे' इति विश्वः । **ताम्रायताक्षः** । ताम्रे रक्ते आयते अक्षिणी यस्य सः । गतम् । ताम्रेत्युपलक्षणम् । तदादिवर्णोपेता आयता दीर्घा अक्षाः पाशका यस्य स इति वा । तत्पुरस्कारेणै-तत्सभाजनोक्तेः । एतत् पक्षे सर्वत्र नेत्रं नयनमिति ज्ञेयम् ।। १३ ।।

**अयं पुनर्मत्तगजेन्द्रगामी प्रतप्तचामीकरशुद्धगौरः ।**
**पृथ्वायतांसो गुरुदीर्घबाहुर्वृकोदरः पश्यत पश्यतैनम् ।। १४ ।।**

**अयं पुनः** अयं तु **मत्तगजेन्द्रगामी** । गमनसमये । **प्रतप्तचामीकरः शुद्धगौरः** । निष्ठापिताष्टापदवत् पीतवर्णः । पृथू पुष्टौ आयतौ दीर्घौ । **अंसौ** स्कन्धौ यस्य सः । गुरुवृतौ दीर्घौ बाहू यस्य **पश्यत पश्यत** इत्यादरात् द्विरुक्तिः ।। १४ ।।

**यस्त्वेव पार्श्वेऽस्य महाधनुष्मान् श्यामो युवा वारणयूथपोपमः ।**
**सिंहोन्नतांसो गजराजगामी पद्मायताक्षोऽर्जुन एष वीरः ।।१५।।**

**अस्य** भीमस्य । **वारणयूथपोपमः** गतम् । देहोच्छ्रयेण ।। १५ ।।

**राज्ञः समीपे पुरुषोत्तमौ तु यमाविमौ विष्णुमहेन्द्रकल्पौ ।**
**मनुष्यलोके सकले समोऽस्ति ययोर्गुरुत्वे न बले न शीले ।।१६।।**

विष्णुरुपेन्द्रः **सकले मनुष्यलोके गुरुत्वे** गौरवे **बले** च । नेति नञ आवृत्तिः । **शीले** सत्स्वभावे च **समो** नेति ।। १६ ।।

**आभ्यां तु पार्श्वे कनकोत्तमाङ्गी यैषा प्रभा मूर्तिमतीव गौरी ।**
**नीलोत्पलाभा सुरदेवतेव कृष्णा स्थिता मूर्तिमतीव लक्ष्मीः ।।१७**

**आभ्यां** अनयोः । **मूर्तिमती** विग्रहसहिता प्रभेव । तथा **मूर्तिमती गौरी** पार्वती वा । **सुरदेवता** देवाङ्गनामूर्तिमतीव । किमुत **मूर्तिमती** लक्ष्मीरिव स्थिता । येषां सा **कृष्णा** द्रौपदी । तच्छब्दप्रवृत्तिनिमित्तमाह– **नीलोत्पलाभेति** ।। आन्तरङ्गिको भावस्तु प्रभा उषाः । इव मूर्तिमती । अन्तनिर्विष्टतत्का । **गौरीव** तथैव । **कृष्णा** श्यामलेव । **सुरदेवता** शची । भीमातिरिक्तभर्त्रानुरूप्येणाविष्ट-त्रिदेवी । उमा च शापप्राप्तान्यगामित्वात् प्रार्थयित्वा भारत्यन्तर्गताऽभूदिति गौरी वेत्युक्तिः । स्पर्शश्च तूर्ष्णीं मारुतस्यानन्तरं हरप्राप्तिरिति ज्ञेयम् । उक्तं च –

> 'आवेशयुक्ता शच्याश्च श्यामलायास्तथोषसः ।
> उमांशयुक्ताऽतितराम्'[१] इत्यारभ्य ।
> इत्युक्त्वा प्रययौ ब्रह्मा सोऽश्वत्थामा शिवोऽभवत् ।
> पञ्चदेवीतनुस्त्वेषा द्रौपदी नाम चाभवत्[२] ।।

इत्यन्तेन श्रीमत्तात्पर्यनिर्णयेऽष्टादशेऽध्याये ।। १७ ।।

**ततोऽर्जुनस्य वैराटिः कथयामास विक्रमम् ।**
**अयं स द्विषतां हन्ता मृगाणामिव केसरी ।। १८ ।।**

**हन्ता** इति तृजन्तः ।। १८ ।।

---

१. म.भा.ता.निर्णये (१८/१००)
२. म.भा.ता.निर्णये (१८/१४५)

**अचरद्रथवृन्देषु निघ्नंस्तांस्तान् वरान् रथान् ।**
**अनेन विद्धो मातङ्गो महानेकेषुणा हतः ।। १९ ।।**

**तान् तान् वरान् रथान् एकेषुणा** विद्धः ताडितः सन् ।। १९ ।।

**सुवर्णकक्षः सङ्ग्रामे दन्ताभ्यामगमन्मही ।**
**अनेन विजिता गावो जितश्च कुरवो युधि ।। २० ।।**

**सुवर्णकक्षः दन्ताभ्यां महीमगमत्** अनन्तरं हतः ममार । **अनेन** अर्जुनेन ।।२०।।

**अस्य शङ्खप्रणादेन कर्णौ मे बधिरीकृतौ ।**
**अनेन तात वीरेण भीष्मद्रोणमुखा रथाः ।।२१।।**
**दुर्योधनेन सहिता निर्जिता भीष्मकर्मणा ।**
**अस्य तत्कर्म वीरस्य न मया तात त्कृतम् ।।२२।।**
**एष भीतं द्रवन्तं मां देवपुत्रो न्यवारयत् ।**
**अस्य बाहुबलेनास्मि जीवन् प्रत्यागतः पुनः ।। २३ ।।**

**वैशम्पायन उवाच -**

**तस्य तद्वचनं श्रुत्वा मत्स्यराजः प्रतापवान् ।**
**उत्तरं प्रत्युवाचेदमभिपन्नो युधिष्ठिरे ।। २४ ।।**

**युधिष्ठिरे । अभिपन्नः** प्रह्वः । 'अभिपन्नोऽभिराद्धे चाभिशस्ते च वियद्गते' इति विश्वः। तद्विषये सिद्धः । स्निग्धाभिपन्नौ भक्तावित्यभिधानाद्भक्त इति वा ।। २४ ।।

**प्रसादनं पाण्डवस्य प्राप्तकालं हि रोचते ।**
**उत्तरां च प्रयच्छामि पार्थाय यदि मन्यसे ।। २५ ।।**

**पाण्डवस्य प्रसादनं प्राप्तकालम्** । युक्तं **रोचते** । गतम् ।। २५ ।।

**उत्तर उवाच -**

> [१]**अर्च्याः पूज्याश्च मान्याश्च प्राप्तकालं च मे मतम् ।**
> **पूज्यन्तां पूजनार्हाश्च महाभागाश्च पाण्डवाः ।। २६ ।।**

पितस्त्वदुक्तमतिसम्मतं मम सहस्रशो वक्तव्यमिति मनसि कृत्वैकार्थकपदत्रिकेण वदति - **अर्च्याः** । 'अर्च पूजायाम्' 'पूज पूजायाम्' 'मान पूजायाम्' । पूजनीयाः पूजनीया इति मम **प्राप्तकालं मतम्** इति । 'जहिहि जहाहि जहीहि रामभार्याम्' इत्यादिवत् । यद्वा ऋच स्तुतौ इत्यस्मात् निवृत्तिप्रेरणाद्धेतुमण्यौ अचोदयदिति । यतिनि लोपे चार्चाः स्तुत्याः इत्यर्थः । एवं च 'ऋदुपदाच्चक्लृपिचृतेः'[२] इति क्यपो नावसरः । मन्यतेः धात्रि-निष्पन्नमानशब्दाद्रूपादाहतेति भाष्येऽन्येभ्योऽपीत्युक्त्वा गुण्या इत्युक्तेरत्रापि - प्राशस्त्येयमपिप्रशस्तज्ञानवन्तइत्यर्थः।ममतवचपूज्याइत्येवंनकिन्तु**पूजनार्हाः**। ये एतत्पूजनयोग्यास्ते **महाभागा** इति **पूज्यन्ताम्** । त्वयेति शेषः ।। २६ ।।

**विराट उवाच -**

> **अहं खल्वपि सङ्ग्रामे शत्रूणां वशमागतः ।**
> **मोक्षितो भीमसेनेन गावश्चापि जितास्तथा ।। २७ ।।**

स्वानुभूतं पिताऽपि पुत्रं श्रावयति – **अहमिति** ।। **शत्रूणाम्** त्रिगर्तानां । **मोक्षितः** ।। २७ ।।

> **एतेषां बाहुवीर्यं तद्यदस्माकं जयो मृधे ।**
> **एवं सर्वे सहामात्याः कुन्तीपुत्रं युधिष्ठिरम् ।। २८ ।।**

यदेतेषां पाण्डुपुत्राणां बाहुवीर्यम् । तत् तस्मात् । नो मृधे जयः । भीमे बलवानिति त्वदनुभूतं मदनुभूतं त्वर्जुनो बलवानितीतरे तु न तादृशा इति न वदेति वदति -

---

१. आर्याः । (इति गी. पाठः)

२. पा.सू. (३/१/११०)

**एवं सर्व** इति । एवं वक्ष्यमाणरीत्येति वा । **सहामात्याः** वयम् ।। २८ ।।

**प्रसादयामो भद्रं ते सानुजं पाण्डवर्षभम् ।**
**यदस्माभिरजानद्भिः किञ्चिदुक्तो नराधिपः ।**
**क्षन्तुमर्हति तत्सर्वं धर्मात्मा ह्येष पाण्डवः ।। २९ ।।**

त्वया त्रुटितललाटकः कथय कथं दययेत्सोऽस्मास्वित्यतस्तत्स्वभावमावेदयति– **यदिति** ।। **अजानद्भिः** अस्माभिः किञ्चिद्व्यत्यस्तु क्तः । तथा तत्सर्वं हिंसनमपि । **हि** यत **एष धर्मात्मा** ततः क्षन्तुमर्हति ।। २९ ।।

**वैशम्पायन उवाच -**

**ततो विराटः परमाभितुष्टः समेत्य राजा समयं चकार ।**
**राज्यं च सर्वं विससर्ज तस्मै सदण्डकोशं सपुरं महात्मा ।।३०।।**

समयोऽत्र शपथः संविद्येकान्तवादो वा चकार एतेरयतेर्वा । करणेऽधिकरणे कर्तरि पचाद्यचि वाह्येतेर्वारय एरजित्यचि च रूपम् । 'समयः शपथाचारसिद्धान्तेषु तथा धियि । क्रियाकारे च निर्देशे सङ्केते कालभाषयोः'[1] इति भानुः । समय० याकृतिसमये । सम्भवदर्थो ग्राह्यः । **विससर्ज** अत्र सर्जनमिति सर्जनदण्डेनापरा-धिनिरोधनरूपेण सहितः **कोशो** धनसदनं तेन सहितम् ।। ३० ।।

**पाण्डवांश्च ततः सर्वान् मत्स्यराजः प्रतापवान् ।**
**धनञ्जयं पुरस्कृत्य दिष्ट्या दिष्ट्येति चाब्रवीत् ।। ३१ ।।**

पुरस्करणमर्जुनस्योत्तरत्र काङ्क्षितं भविष्यतीति । **दिष्ट्या दिष्ट्या** । सुखं सुखमित्यब्रवीत् ।। ३१ ।।

**समुपाघ्राय मूर्धानं संश्लिष्य च पुनःपुनः ।**
**युधिष्ठिरं च भीमं च माद्रीपुत्रौ च पाण्डवौ ।। ३२ ।।**

---

१. मेदिनी च ।

**मूर्धानम् समुपाघ्राय** वृद्धत्वात् ।। ३२ ।।

**नातृप्यद्दर्शने तेषां विराटो वाहिनीपतिः ।**
**स प्रीयमाणो राजानं युधिष्ठिरमथाब्रवीत् ।। ३३ ।।**

**तेषां दर्शने** । पुनःपुनर्निरीक्षणेऽपि **नातृप्यत्** तृप्तिमलम्बुद्धिं नाप ।। ३३ ।।

**दिष्ट्या भवन्तः सम्प्राप्ताः सर्वे कुशलिनो वनात् ।**
**दिष्ट्या सम्पालितं कृच्छ्रमज्ञातं वै दुरात्मभिः ।। ३४ ।।**

**कुशलिनः** क्षेमवन्तः । **दुरात्मभिः** दुर्योधनादिभिः **अज्ञातं** यथा तथा **कृच्छ्रं** कष्टम् । **सम्पालितं** प्रतिज्ञापालनद्वारा सम्यक् पालितम् । रलयोरभेदानुशिष्टेः पालयतेः निष्ठायां णिचि पालशब्दात् तारकादितचि वा सम्यक् पारितं पारं प्राप्तमिति वा ।। ३४ ।।

**इदं च राज्यं पार्थाय यच्चान्यदपि किञ्चन ।**
**प्रतिगृह्णन्तु तत्सर्वं कौन्तेया अविशङ्कया ।। ३५ ।।**

**राज्यं यच्चान्यत्** किञ्चन तदपि **पार्थाय** अर्जुनाय इना इच्छयैव दो दाताहं यस्य तथा । सर्वेऽपि **कौन्तेया** इत्यनेन वक्ष्यमाणकार्यतः पक्षपातप्रतीतिरपास्तेति ज्ञेयम् ।। ३५ ।।

**उत्तरां प्रतिगृह्णातु सव्यसाची धनञ्जयः ।**
**अयं ह्यौपयिको भर्ता तस्याः पुरुषसत्तमः ।। ३६ ।।**

तस्याः उत्तरायाः **औपयिकः** उपायशब्दाड्ठक्प्रकारं ह्रस्वता । युक्त इत्यर्थः । 'युक्तमौपयिकं लभ्यम्' इत्यमरः ।। ३६ ।।

**एवमुक्तो धर्मराजः पार्थमैक्षद्धनञ्जयम् ।**
**ईक्षितश्चार्जुनो भ्रात्रा मत्स्यं वचनमब्रवीत् ।। ३७ ।।**

**पार्थम्ऐक्षत्**ऐक्षत ।संवत्सरपर्यन्तमन्तस्ततया सहसंवासेऽपिवासविमनश्चाश्वल्यं नास्त्येव त्वद्विषयेऽग्निसम इति सूचयितुं पुनः **धनञ्जय** इत्युक्तिः । 'वीतिहोत्रो धनञ्जयः' इत्यमरः । **भ्रात्रा** धर्मेण ।। ३७ ।।

**प्रतिगृह्णाम्यहं राजन् स्नुषां दुहितरं तव ।**
**युक्तश्चावां हि सम्बन्धो मत्स्यभारतयोरपि ।। ३८ ।।**

**।। इति श्रीमन्महाभारते विराटपर्वणि वैवाहिकपर्वणि द्विसप्ततितमोऽध्यायः ।।**

त एव **दुहितरं स्नुषाम्** । तत्त्वेन प्रतिगृह्णामि । 'आत्मा वै पुत्रनामासि' इत्यादेस्तव सङ्कल्पोऽपि न मुधेति ध्वन्यतेऽनेन । **मत्स्यभारतयोर्वा सम्बन्धो युक्तः** इत्यब्रवीदित्यन्वयः ।। ३८ ।।

**।। इति श्रीमन्महाभारतस्य विराटपर्वणः व्याख्यायां श्रीसत्यधर्मतीर्थश्रीपादविरचितायां द्विसप्ततितमोऽध्यायः ।।**

*****

# ७३. त्रिसप्ततितमोऽध्यायः

( उत्तराभिमन्योर्विवाहः । )

**विराट उवाच -**

**किमर्थं पाण्डवश्रेष्ठ भार्यां दुहितरं मम ।**
**प्रतिग्रहीतुं नेमां त्वं मया दत्तामिहेच्छसि ।। १ ।।**

पाणिगृहीती भवतु भवान् इति प्रार्थने स्नुषा भवत्विति वदतः किं न सुन्दरीयमिति भावः, किं वाऽहं साक्षाच्छ्वशुरीभवनाननुगुणगुण इति, किं वा कनीयसी कन्येति मनसि कृत्वाऽनङ्गीकारनिमित्तं सामान्यतः पृच्छति– **किमर्थमिति** ।। भार्यां प्रति-ग्रहीतुं तत्त्वेन स्वीकर्तुं **मया** । **दत्तां नेच्छसीह किमर्थम्** इति पप्रच्छ ।। १ ।।

अर्जुन उवाच -

**अन्तःपुरेऽहमुषितः सदा पश्यन् सुतां तव ।**
**रहस्यं च प्रकाशं च विश्वस्तां पितृवन्मयि ॥ २ ॥**

उत्तराविषये सर्वसम्मतमुत्तरमीरयति– **अन्तःपुर** इति ॥ **रहस्यं** एकान्ते **प्रकाशं** बहिः । **पितृवन्मयि विश्वस्ताम्** ॥ २ ॥

**प्रियो बहुमतश्चासं नर्तको गीतकोविदः ।**
**आचार्यवच्च मां नित्यं मन्यते दुहिता तव ॥ ३ ॥**

**आचार्यवत्** गुरुवत् ॥ ३ ॥

**वयःस्थया तया राजन् सह संवत्सरोषितः ।**
**अतिशङ्का भवेत् स्थाने तव लोकस्य वा विभो ॥ ४ ॥**

**अतिशङ्का** अपरिहार्यः सन्देहः **स्थाने** । एदन्तो निपातः । युक्तैव **भवेत्** ॥ ४ ॥

**तस्मान्न ग्रहणीयेयं दुहिता मनुजाधिप ।**
**शुद्धो जितेन्द्रियो दान्तस्तस्याः शुद्धिः कृता मया ॥ ५ ॥**

**न ग्रहणीया** मया । **शुद्धो जितेन्द्रियो दान्त** इति दार्ढ्यार्थमुक्तिः । **तस्या** अपि **शुद्धिः** अनेन कृता भवेत् । आयात इति ज्ञेयम् । 'विश्वस्ता विधवे समे'[१] इत्यमरः । उत्तरकार्यानुगुण्येन अर्जुनमुखतो स ममानुगुणः शब्दः ॥ ५ ॥

**स्नुषाया दुहितुर्वाऽपि पुत्रे चात्मनि वा पुनः ।**
**अत्र शङ्कां न पश्यामि तेन शुद्धिर्भविष्यति ॥ ६ ॥**

---

१. 'विश्वस्ता विधवे तुल्ये विश्वस्तापतिनी च सा ।' - इति वाचस्पतिः ।

**स्नुषायाः दुहितुः** सुतायाः **पुत्र आत्मनि च** । **पुनः** काकुभेदः किन्नेत्यर्थः । 'पुनरप्रथमे भेदे' इति विश्वः । अत्रैवं करणे **शङ्कां** जनसन्देहं **न पश्यामि** । तेन शुद्धिरुभयसम्बन्धिनी ।। ६ ।।

**अभिशापादहं भीतो मिथ्यावादात् परन्तप ।**
**स्नुषार्थमुत्तरां राजन् प्रतिगृह्णामि ते सुताम् ।। ७ ।।**

**अभिशापात् भीतः अहम्** । 'अथ मिथ्याभिशंसनम् अभिशापः' इत्यमरः । **मिथ्यावादात्** इति ल्यब्लोपनिमित्ता पञ्चमी । मिथ्यावादस्तुभ्यमेव दास्यामीति यस्य तम् । त्वां विधायापि **ते सुतामुत्तराम्** । **स्नुषार्थं** प्रतिगृह्णामि । त्वद्वचनच्यावने निमित्तमभिशाप इति तात्पर्यम् । अहं किं पुत्रः किमित्यमिथ्यावादाद्यथार्थवच-नात् त्वत्तस्तु **सुतां गृह्णामि** इति वा ।। ७ ।।

**स्वस्रीयो वासुदेवस्य साक्षाद्देवशिशुर्यथा ।**
**दयितश्चक्रहस्तस्य एक एवास्त्रकोविदः ।। ८ ।।**

रुचिमुत्पादयितुं एतदनुबन्धः स लब्धवर्णश्चेति वर्णयति – **स्वस्रीय इति** ।। स्वसुश्च ईयादेशे च रूपम् । स्वसुरपत्यं 'स्वस्रीयो भागिनेयः स्यात्' इत्यमरः । साक्षाद्वासुदेवस्य श्रीकृष्णस्य **देवशिशुः** । कुमार इव । स्वस्रीयत्वे किं कंसस्य वासुदेव इव नेत्याह **दयित** इति । चक्रे । तत्कुन्तीपुत्रे धनञ्जये उपपन्नं युक्तम् ।। ८ ।।

**अभिमन्युर्महाबाहुः पुत्रो मम विशाम्पते ।**
**जामाता तव युक्तो वै भर्ता च दुहितुस्तव ।। ९ ।।**

**विराट उवाच -**

**उपपन्नं कुरुश्रेष्ठे कुन्तीपुत्रे धनञ्जये ।**
**य एवं धर्मनित्यश्च ज्ञातज्ञानश्च पाण्डवः ।। १० ।।**

**कुन्तीपुत्र** इति मातृकुलानुकूलता । **कुरुश्रेष्ठ** इति पितृकुलानुगुण्यतां च दधानेति ज्ञेयम् । ज्ञातं समूहो ज्ञानानां यस्मिन्निति सः । द्रुपद इत्यादिवत् ।। १० ।।

**यत्कृत्यं मन्यसे पार्थ क्रियतां तदनन्तरम् ।**
**सर्वे कामा समृद्धा मे सम्बन्धी यस्य मेऽर्जुनः ।। ११ ।।**

**यस्य मे अर्जुनो** भवान् सम्बन्धीति मे **सर्वे कामाः समृद्धाः** अतोऽनन्तरं **यत्कृत्यं** तत् **क्रियताम्** इत्यन्वयः ।। ११ ।।

**वैशम्पायन उवाच -**

**एवं ब्रुवति राजेन्द्रे कुन्तीपुत्रो युधिष्ठिरः ।**
**अन्वशासत् स संयोगं समये मत्स्यपार्थयोः ।। १२ ।।**

**समये** तत्क्षणे **मत्स्यपार्थयोः** विराटधनञ्जययोः । यद्वा मत्स्यवर्गः । मत्स्यश्च पार्थश्च तयोः । **संयोगं अन्वशासत्** अन्वशासत । गणकार्यानित्येतयैवमुक्तिः । अनुशशास अघोषयदिति यावत् ।। १२ ।।

**ततो मित्रेषु सर्वेषु वासुदेवे च भारत ।**
**प्रेषयामास कौन्तेयो विराटश्च महीपतिः ।। १३ ।।**

**प्रेषयामास** दूतान् ।। १३ ।।

**ततस्त्रयोदशे वर्षे निवृत्ते पञ्च पाण्डवाः ।**
**उपप्लाव्यं विराटस्य समपद्यन्त सर्वशः ।। १४ ।।**

**उपप्लाव्यं** महानगरसमीपवर्तिशाखानगरम् । जलादिसौष्ठवेन वा । वरेण किञ्चिद्दूरादागतेन भवितव्यमिति तत्र गत्वा पुनर्नगरमूलं प्रत्यागन्तव्यमिति वा । न मूलं विद्मः ।। १४ ।।

**अभिमन्युं च बीभत्सुरानिनाय जनार्दनम् ।**
**आनर्तेभ्योऽपि दाशार्हानानयामास पाण्डवः ॥ १५ ॥**

**दाशार्हान्** इतरान् ॥ १५ ॥

**काशिराजश्च शैब्यश्च प्रीयमाणे युधिष्ठिरे ।**
**अक्षौहिणीभ्यां सहितावागतौ पृथिवीपती ॥ १६ ॥**

'अक्षादूहिन्याम्'[1] इत्यक्षौहिणी तत्सङ्ख्ये सेने ताभ्याम् ॥ १६ ॥

**अक्षौहिण्या च सहितो यज्ञसेनो महाबलः ।**
**द्रौपद्याश्च सुता वीराः शिखण्डी चापराजितः ॥ १७ ॥**

**यज्ञसेनः** द्रुपदः । **सुताः** पञ्च । **शिखण्डी च** । तन्माहात्म्यमाह– **अपराजित इति** ॥ अपराजितितायामनयाऽऽनुपूर्व्या निमित्तमप्याह– **चापराजित** इति ॥ १७ ॥

**धृष्टद्युम्नश्च दुर्धर्षः सर्वशस्त्रभृतां वरः ।**
**समस्ताक्षोहिणीपाला यज्वानो भूरिदक्षिणाः ॥ १८ ॥**

समस्ताक्षोहिणीत्यादि समस्तं पदम् । अक्षोहिण्यां न किञ्चिन्न्यूनमिति समस्तार्थः । **भूरिदक्षिणाः** बहुदक्षिणाः । सुवर्णदक्षिणा वा । गतम् ॥ १८ ॥

**वेदावभृथसम्पन्नाः सर्वे शूरास्तनुत्यजः ।**
**तानागतानभिप्रेक्ष्य मत्स्यो धर्मभृतां वरः ॥ १९ ॥**

वेदसम्पन्नम् अवभृथः क्रत्वनन्तरं स्नानं तेन च सम्पन्ना इति **वेदावभृथसम्पन्नाः** । वेदेन । दर्भमुष्टिविशेषेण योऽवभृथः । तत्प्रोक्षणानन्तरं निमज्जनमिति

---

१. अक्षादूहिन्यामुपसङ्ख्यानम् । वार्तिकम् ।

तदवभृथसम्पन्ना वा । **तनुत्यजः** । तावत्पर्यन्तं न रणत्यज इत्यर्थः । **तान् आगतान्** ।। १९ ।।

**पूजयामास विधिवत् सभृत्यबलवाहनान् ।। २० ।।**

**प्रीतोऽभवद्दुहितरं दत्वा तामभिमन्यवे ।**
**ततः प्रत्युपयातेषु पार्थिवेषु ततस्ततः ।। २१ ।।**

तां **दुहितरम्** उत्तराम् । **ततस्ततः** तत्तद्देशात् । **प्रत्युपयातेषु** सत्सु ।। २१ ।।

**तत्रागमद्वासुदेवो वनमाली हलायुधः ।**
**कृतवर्मा च हार्दिक्यो युयुधानश्च सात्यकिः ।। २२ ।।**

**'आनिनाय जनार्दनम्'** (७३ / १५) इत्युक्तं किं किलैकलः कृष्ण आयात उतान्ये केचनेत्यत आह– **तत्रेति** ।। गदव्युदस्त्यै **वनमाली** इति । **हलायुधो** बलः ।। २२ ।।

**अनाधृष्टस्तथाऽक्रूरः साम्बो निशठ एव च ।**
**अभिमन्युमुपादाय सह मात्रा परन्तपाः ।। २३ ।।**

**अनाधृष्टः** तन्नाम । **मात्रा** सुभद्रया ।। २३ ।।

**इन्द्रसेनादयश्चैव रथैस्तैः सुसमाहितैः ।**
**आययुः सहिताः सर्वे परिसंवत्सरोषिताः ।। २४ ।।**

**इन्द्रसेनादयः** पार्थसारथ्यादयः प्राक् **प्रेषिताः** परिसंवत्सरं समग्रसंवत्सरमुषिताः । द्वारकायाम् ।। १४ ।।

**दशनागसहस्राणि हयानां च दशायुतम् ।**
**रथानामर्बुदे पूर्णं निखर्वं च पदातिनाम् ।। २५ ।।**

**दशायुतम्** लक्ष्यं **निखर्वं** तत्सङ्ख्यम् । **पदातिनां** पदातीनाम् । पदाभ्यामतन्ति तच्छीला इति **पादातिन** इति णिन्यन्तो वा ।। २५ ।।

**वृष्ण्यन्धकाश्च बहवो भोजाश्च परमौजसः ।**
**अन्वयुर्वृष्णिशार्दूलं वासुदेवं महाद्युतिम् ।। २६ ।।**

**पारिबर्हं ददौ कृष्णः पाण्डवानां महात्मनाम् ।**
**स्त्रियो रत्नानि वासांसि पृथक् पृथगनेकशः ।**

**ततो विवाहो विधिवद्ववृधे मत्स्यपार्थयोः ।। २७ ।।**

**पृथक् पृथक्** प्रातिस्विकम् ।। २७ ।।

**ततः शङ्खाश्च भेर्यश्च गोमुखा डम्बरास्तथा ।**
**पार्थैः संयुज्यमानैश्च नेदुर्मत्स्यस्य वेश्मनि ।। २८ ।।**

मुख्यानां डम्ब इति डमरुकनामान्तरम् । **संयुज्यमानैः** प्रेर्यमाणैः ताडिताः नेदुः ।। २८ ।।

**उच्चावचान् मृगान् जघ्नुर्मेध्यांश्च शतशः पशून् ।**
**सुरामैरेयपानानि प्रभूतान्यभ्यहारयन् ।। २९ ।।**

**उच्चावचान्** । **सुरा** साधारणी । **मैरेयं** तद्विशेषः पानानि पेयानि **प्रभूतानि** प्रचुराणि **अभ्यहारयन्** भोजयामासुरित्यर्थः ।। २९ ।।

**गायनाख्यानशीलाश्च नटा वैतालिकास्तथा ।**
**स्तुवन्तस्तामुपातिष्ठन् सुताश्च सह मागधैः ।। ३० ।।**

**गायनाख्यानशीलाः** आख्याने गुणवर्णने शीलं येषां ते । गायन्तीति गायनाः । 'गै शब्दे' इत्यस्मादच इत्यावेगस्य कन् । एयुट्च इति ण्युटि, 'आतो युक्....'[१]

१. आतो युक् चिण्कृतोः । (७/३/३३)

इति । युकि द्योरकावित्यनेन च रूपम् । ते च ते च ता **वैतालिकाः** । बोधकराः 'वैतालिका बोधकराः चाक्रिका घाण्टिकाः समाः' इत्यमरः । अभिनयेनार्थबोधका इति तदर्थः । **वैतालिका**श्च कथ्यन्ते कविभिः सौख्यशापिकाः । इति सुखवचनेन राजबोधकाः । प्रातः । तान् पाण्डवमत्स्यान् । **उपातिष्ठन्** असेवन्त । मन्त्रकरणा द्यन्यतमत्वाभावात् परस्मैपदता । **मागधैः सह** । **सूताश्च** गतम् ।। ३० ।।

**सुदेष्णां च पुरस्कृत्य मत्स्यानां च वरस्त्रियः ।**
**आजग्मुश्चारुसर्वाङ्ग्यः सुमृष्टमणिकुण्डलाः ।। ३१ ।।**

**सुदेष्णां** विराटपत्नीम् ।। ३१ ।।

**वर्णोपपन्नास्ता नार्यो रूपवत्यः स्वलङ्कृताः ।**
**सर्वास्ताऽभ्यभवत् कृष्णा रूपेण यशसा श्रिया ।। ३२ ।।**

**वर्णोपपन्नाः** वर्णो कान्तिः । हरिद्राकुङ्कुमो वा । सर्वा एताः **कृष्णा** द्रौपदी । **रूपेण यशसा श्रिया** च अभ्यभवत् परिभावितवती । **सर्वास्ता अभ्य-भवन्** इति पाठे । या सैरन्ध्री सती सर्वास्ता । सर्वाभिरिदानीं समवेताभिरस्ता निरस्ते वसेदिति । ता **अभ्यभवन्** इत्यर्थः ।। ३२ ।।

**परिवार्योत्तरां तांस्तु राजपुत्रीमलङ्कृताम् ।**
**सुतामिव महेन्द्रस्य पुरस्कृत्योपतस्थिरे ।। ३३ ।।**

**महेन्द्रस्य सुतां पुरस्कृत्य** सुरतरुण्यो यथा तिष्ठन्ति तथा **राजपुत्रीम्** । गतं उतरां । **परिवार्य उपतस्थिरे** । गतम् ।। ३३ ।।

**तां प्रत्यगृह्णात् कौन्तेयः सुतस्यार्थे धनञ्जयः ।**
**सौभद्रस्यानवद्याङ्गीं विराटतनयां तदा ।। ३४ ।।**

**सौभद्रस्य** सुभद्रासम्बन्धिनः । तदपत्यस्येति यावत् ।। ३४ ।।

**तत्रातिष्ठन्महाराजो रूपमिन्द्रस्य धारयन् ।**
**स्नुषां तां प्रतिजग्राह कुन्तीपुत्रो युधिष्ठिरः ॥ ३५ ॥**

इन्द्रस्य रूपमिव **रूपम्** ॥ ३५ ॥

**प्रतिगृह्य च तां पार्थः पुरस्कृत्य जनार्दनम् ।**
**विवाहं कारयामास सौभद्रस्य महात्मनः ॥ ३६ ॥**

**जनार्दनं** श्रीकृष्णम् ॥ ३६ ॥

**तस्मै सप्त सहस्राणि हयानां वातरंहसाम् ।**
**द्वे च नागशते मुख्ये प्रादाद्बहुधनं तदा ॥ ३७ ॥**

**वातरंहसाम्** वातस्येव रंहो वेगो येषां तेषाम् ॥ ३७ ॥

**हुत्वा सम्यक् समिद्धाग्निमर्चयित्वा द्विजन्मनः ।**
**राज्यं बलं च कोशं च सर्वमात्मानमेव च ॥ ३८ ॥**

**आत्मानं च** । प्रादादित्यन्वयः । अहं यौष्माकीण इत्युक्तिरात्मदानव्यञ्जिका ॥ ३८ ॥

**वृत्ते विवाहे तु तदा धर्मपुत्रो युधिष्ठिरः ।**
**ब्राह्मणेभ्यो ददौ वित्तं यदुपाहरदच्युतः ॥ ३९ ॥**

**यदच्युतः उपाहरत्** । तत् **ब्राह्मणेभ्यो ददौ** ॥ ३९ ॥

**गोसहस्राणि रत्नानि वस्त्राणि विविधानि च ।**
**भूषणानि च मुख्यानि यानानि शयनानि च ॥ ४० ॥**

**मुख्यानि** इति योग्यसर्वान्वयि ॥ ४० ॥

भाजनानि च हृद्यानि पानानि विविधानि च ।
तन्महोत्सवसङ्काशं हृष्टपुष्टजनायुतम् ।
नगरं मत्स्यराजस्य शुशुभे भरतर्षभ ।। ४१ ।।

।। इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां वैय्यासिक्यां विराटपर्वणि वैवाहिकपर्वणि उत्तराविवाहोनाम त्रिसप्ततितमोऽध्यायः ।।

।। इति वैवाहिकपर्व ।।

## ।। इति महाभारते विराटपर्व समाप्तम् ।।

**पानानि**गतम्।पात्राणीतिपाठःस्फुटार्थः।**तन्महोत्सवं**समहोत्सवोयस्मिन्निति मूलनगरम् । तत्सङ्काशं तन्निभमिदं शाखानगरम् । स महोत्सवः सङ्काशोऽन्तिके यस्येति वा। 'तत् सङ्काशः सदृशोऽन्तिके' इति विश्वः। हृष्टपुष्टजनानामयुतं बहुसहस्रं यस्मिंस्तत्।एतादृशं**मत्स्यराजस्य नगरं शुशुभे**प्रचकाशे।अन्ते नगरपदं प्रयुञ्जानः कथायां एतत्पर्वगताया निर्विषतया अमृतरूपभूतामिव श्रोतृणां वक्तृणां पठतां चानन्तरममृतप्राप्तिर्भवतीत्यसूचयदित्यशेषमतिमङ्गलम् ।। ४१ ।।

विराटपर्वविवृतिं दृष्ट्वा ज्ञाज्ञा कृतां मया ।
नन्दन्तु प्रतिनिन्दन्तु हर्षामर्षौ न नस्ततः ।। १ ।।

क्व भारती भारतस्य क्वातिजाल्मस्य जल्पनम् ।।
केचिद्वदेयुश्चेत् तुष्टोऽहं शब्दात् सोमयाजिवत् ।।

## ।। इति श्रीसत्यधर्मतीर्थकृता विराटपर्वव्याख्या समाप्ता ।।

।। श्रीकृष्णार्पणमस्तु ।।

*****

समर्पिता मया भवेत् सुमध्वनुत्तवाणिना ।
रमारमेशपादयोः प्रभञ्जनाभिधायुजा ।।

*****

# विराटपर्वतात्पर्यनिर्णयः

( श्रीमदानन्दतीर्थभगवत्पादकृतमहाभारततात्पर्यनिर्णयादुद्धृतः )

नारायणानुग्रहतो यथावन्निस्तीर्य तान् द्वादशाब्दान् वने ते ।
विसृज्य च ब्राह्मणादीन् सधौम्यानज्ञातवासाय ततो मनो दधुः ॥१॥

गत्वा विराटस्य पुरीं निधाय हेतीः शम्यां छन्नरूपा बभूवुः।
यतिः सूदः षण्डवेषोऽश्वसूतवेषो गोपो गन्धकर्त्री च जाताः ॥ २ ॥

सर्वे विराटं ययुरत्र देववत् सम्भाविताास्तेन शुभोरुलक्षणाः ।
युधिष्ठिरस्यैव शुश्रूषणं ते चक्रुर्हृदा वासुदेवस्य नान्यत् ॥ ३ ॥

परपाको गृहस्थस्य क्षत्रियस्य विशेषतः ।
न योग्य इति सूदस्य बभ्रे वेषं वृकोदरः ॥ ४ ॥

वैदिकव्यवहारेषु ज्ञानाधिक्यप्रसिद्धितः ।
जानीयुर्भीम इत्येव शूद्रवेषस्ततोऽभवत् ॥ ५ ॥

स्वीयं वेदविदां सर्वं देवेशानां च किं पुनः ।
अतस्तेऽन्याश्रयं नैव चक्रुः स्वबलसंश्रयात् ॥ ६ ॥

शापादेवार्जुनः षण्डवेषोऽभून्नकुलस्तथा ।
क्षत्रियानन्तरत्वात् तु सूतजातेस्तथाऽभवत् ॥ ७ ॥

सूतस्यानन्तरत्वात् तु वैश्यजातेस्तथाऽभवत् ।
सहदेवो वैश्यजातिर्गोपालस्तेषु चोत्तमः ॥ ८ ॥

ततो गोपालतामाप यतिः पूज्योऽखिलैर्यतः ।
यतिरासीद्धर्मजोऽतः सोऽभ्यासार्थं सदैव च ।
अक्षासक्तोऽभवत् पश्चाद्दर्शयिष्यन् स्वशिष्टताम् ॥ ९ ॥

भीमसेनसधर्मार्थं शूद्रा सैरन्ध्रिकाऽभवत् ।
द्रौपदी भर्तृसाधर्म्यं स्त्रीणां धर्मो यतः सदा ॥ १० ॥

अथाजगाम मल्लकः समस्तभूमिमण्डले ।
वरेण योऽजितो जयी शिवस्य सञ्जगर्ज च ॥ ११ ॥

तमीक्ष्य सर्वमल्लका विराटराजसंश्रयाः ।
प्रदुद्रुवुर्भयार्दितास्तदाऽवदद्युधिष्ठिरः ॥ १२ ॥

य एष सूद आशु तं निहत्य मल्लमोजसा ।
यशस्तवाभिवर्धयेत् समाह्वयाद्य तं नृप ॥ १३ ॥

इतीरिते समाहुतो जगाद मारुतिर्वचः ।
प्रसादतो हरेरहं निसूदयेऽद्य मल्लकम् ॥ १४ ॥

समस्तदेववृन्दतो महान् य एव केशवः ।
समस्तदेवनामवांस्तदीयभक्तितो बलम् ॥ १५ ॥

य एव देवनामधा इति श्रुतिर्जगाद हि ।
महांश्च देव एष तत् स मे जयं विधास्यति ॥ १६ ॥

युधिष्ठिराभिधश्च यो युधिष्ठिरे स्थितः सदा ।
त्वयि स्थितस्त्वमित्यसौ सदाऽभिधीयते हरिः ॥ १७ ॥

इति ब्रुवाणो मल्लं तमभियातो वृकोदरः ।
अनयन्मृत्युलोकाय बलाढ्यैरपि दुर्जयम् ॥ १८ ॥

एवं निवसतां तत्र पाण्डवानां महात्मनाम् ।
संवत्सरे द्विमासोने विजित्य दिश आगतः ।
कीचको मत्स्यनृपतेः श्यालो बलवतां वरः ॥ १९ ॥

स द्रौपदीमीक्ष्य मनोभवार्तः सम्प्रार्थयामास तया निरस्तः ।
मासे गते भगिनीं स्वां सुदेष्णां सम्प्रार्थयामास तदर्थमेव ॥ २० ॥

तया निषिद्धोऽपि पुनः पुनस्तां यदा ययाचेऽथ च साऽऽह कृष्णाम् ।
समानयाश्चेव सुरां मदर्थमितीरिता नेति भीताऽवदत् सा ॥ २१ ॥

बलात् तया प्रेरिता तद्गृहाय यदाऽगमत् तेन हस्ते गृहीता ।
विधूय तं प्राद्रवत् सा सभायै स्मृत्वाऽऽदित्यस्थं वासुदेवं परेशम् ।।२२।।

अनुद्रुत्यैनां पातयित्वा पदा स सन्ताडयामास तदा रविस्थितः ।
नारायणो हेतिनामैव रक्षो न्ययोजयत् तददृश्यं समागात् ।। २३ ।।

वायुस्तमाविश्य च कीचकं तं न्यपातयत् तां समीक्ष्यैव भीमः ।
चुकोप वृक्षं च समीक्षमाणं तं वारयामास युधिष्ठिरोऽग्रजः ।। २४ ।।

कृष्णा रात्रौ भीमसकाशमेत्य हन्तुं पापं कीचकं प्रैरयत् तम् ।
भीमस्य बुद्ध्या निशि सा कीचकं च जगाद गन्तुं शून्यगृहं स चागात् ।।

तत्रैनमासाद्य च भीमसेनो विजित्य तं बाहुयुद्धे निहत्य ।
शिरो गुदे पाणिपादौ च तस्य प्रवेशयामास विमृद्य वीरः ।। २६ ।।

अवध्यं तं निहतं वीक्ष्य तस्य पञ्चोत्तरं शतमेवानुजानाम् ।
सर्वं वराच्छङ्करस्य ह्यवध्यं सहैव कृष्णां तेन दग्धुं बबन्ध ।। २७ ।।

सा नीयमाना कीचकैः संरुराव श्रुत्वैव तं भीमसेनो महान्तम् ।
उद्धृत्य वृक्षं तेन जघान सर्वानादाय कृष्णां पुनरागात् पुरं च ।।२८।।

एवं यत्नात् तपसा तैरवाप्तो वरः शिवादजयत्वं रणेषु ।
अवध्यता चैव षडुत्तरास्ते शतं हता भीमसेनेन सङ्ख्ये ।। २९ ।।

गन्धर्व इत्येव निहत्य सर्वान् मुमोद भीमो द्रौपदी चाथ कृष्णाम् ।
याहीत्यूचे तां सुदेष्णा भयेन त्रयोदशाहं पालयेत्याह तां सा ।
अस्त्वित्येनामाह भयात् सुदेष्णा तथाऽवसन् पूर्णमब्दं च तेऽत्र ।।३०।।

तदा पार्थान् प्रविचिन्त्याखिलायां पृथ्व्यां छन्नान् धार्तराष्ट्रस्य दूताः ।
अविज्ञाय प्रययुर्धार्तराष्ट्रमूचुर्हतं कीचकं योषिदर्थे ।। ३१ ।।

तेनावदद्द्रौपदीकारणेन दुर्योधनो निहतं कीचकं तम् ।
भीमेनागुस्तत्र दुर्योधनाद्या भीष्मादिभिः सह कर्णेन चैव ।। ३२ ।।

अग्रे ययौ तत्र योद्धुं सुशर्मा स गा विराटस्य समाजहार ।
श्रुत्वा विराटोऽनुययौ ससेनस्तं पाण्डवाश्चानुययुर्विनाऽर्जुनम् ॥३३॥

विजित्य सङ्ख्ये जगृहे विराटं तदा सुशर्मा तमयाद्वृकोदरः ।
स तस्य सेनां विनिहत्य मात्स्यं विमोच्य जग्राह सुशर्मराजम् ॥३४॥

युधिष्ठिरो मोचयामास तं च ततो रात्रौ न्यवसन् बाह्यतस्ते ॥ ३५ ॥

ततोऽपरदिने सर्वे भीष्मद्रोणपुरःसराः ।
रहितं कीचकैर्मात्स्यं शक्यं मत्वाऽभिनिर्ययुः ॥ ३६ ॥

कीचकस्य हिडिम्बस्य बककिर्मीरयोरपि ।
जरासन्धस्य नृपतेः कंसादीनां च सर्वशः ॥ ३७ ॥

न बाधनाय भीष्माद्या अपि शेकुः कथञ्चन ।
तस्मात् ते कीचकं शान्तं श्रुत्वा मात्स्यं ययुर्युधे ॥ ३८ ॥

यतिष्ये रक्षितुं भीमाद्धार्तराष्ट्रानिति स्वकाम् ।
सत्यां कर्तुं प्रतिज्ञां तु ययौ द्रोणः सपुत्रकः ॥ ३९ ॥

यदि युद्धाय निर्यान्ति ज्ञाताः स्युः पाण्डवास्तदा ।
न चेद्विराटमनतं नमयिष्यामहे वयम् ।
इति मत्वा विराटस्य जगृहुर्गाः समन्ततः ॥ ४० ॥

तदोत्तरः सारथित्वे प्रकल्प्य पार्थं ययौ तान् निशाम्यैव भीतः ।
ततोऽर्जुनः सारथिं तं विधाय कृच्छ्रेण संस्थाप्य च तं ययौ कुरून् ॥४१॥

आदाय गाण्डीवमथ ध्वजं च हनूमदङ्कं सदरोऽग्रतो गाः ।
निवर्त्य युद्धाय ययौ कुरूंस्तान् जिग्ये सर्वान् द्वैरथेनैव सक्तान् ॥४२॥

एकीभूतान् पुनरेवानुयातान् सम्मोहनास्त्रेण विमोहयित्वा ।
जग्राह तेषामुत्तरीयान्यृते तु भीष्मस्य वेदास्त्रघातं स एव ॥ ४३ ॥

विधाय भीष्मं विरथं जगाम तदा श्रुत्वा मत्स्यपतिर्जितान् कुरून् ।
मुमोद पुत्रेण जिता इति स्म तदाऽऽह षण्डेन जितान् युधिष्ठिरः ॥४४॥

तदा क्रुद्धः प्राहरत् तं विराटः सोऽक्षेण तद्भीमधनञ्जयाभ्याम् ।
श्रुतं तदा तौ कुपितौ निशाम्य न्यवारयत् तावपि धर्मसूनुः ॥ ४५ ॥

निजस्वरूपेण समास्थितान् नो यदि स्म नासौ प्रणिपातपूर्वकम् ।
क्षमापयेद्वध्य इत्यात्मरूपं समास्थितास्तस्थुरथापरे दिने ॥ ४६ ॥

तदा विराटासनमास्थितं नृपं युधिष्ठिरं वीक्ष्य विराट आह ।
किमेतदित्यूचिवानुत्तरोऽस्मै तान् पाण्डवान् गोग्रहणे च वृत्तम् ॥४७॥

ततो विराटो भयकम्पिताङ्गः प्रणम्य पार्थान् शरणं जगाम ।
ददौ च कन्यामुत्तरां फल्गुनाय पुत्रार्थमेव प्रतिजग्राह सोऽपि ॥४८॥

एवं विराटं मोचयित्वैव गाश्च तमस्यन्धे कीचकान् पातयित्वा ।
प्राप्तो धर्मः सुमहान् वायुजेन तस्यानु पार्थेन च गोविमोक्षणात् ॥४९॥

अयातयन् केशवायाथ दूतान् सहाभिमन्युः सोऽपि रामेण सार्धम् ।
आगादनन्तानन्दचिद्वासुदेवो विवाहयामासुरथाभिमन्युम् ॥ ५० ॥

आसीन्महानुत्सवस्तत्र तेषां दाशार्हवीरैः सह पाण्डवानाम् ।
सपाञ्चालानां वासुदेवेन सार्धमज्ञातवासं समतीत्य मोदताम् ॥५१॥

दुर्योधनाद्याः सूतपुत्रेण सार्धं ससौबलेया युधि पार्थपीडिताः ।
भीष्मादिभिः सार्धमुपेत्य नागपुरं मन्त्रं मन्त्रयामासुरत्र ॥ ५२ ॥

अज्ञातवासे फल्गुनो नोऽद्य दृष्टस्तस्मात् पुनर्यान्तु पार्था वनाय ।
इति ब्रुवाणानाह भीष्मोऽभ्यतीतमज्ञातवासं द्रोण आहैवमेव ॥५३॥

तयोर्वाक्यं ते त्वनादृत्य पापा वनं पार्थाः पुनरेव प्रयान्तु ।
इति स्म दूतं प्रेषयामासुरत्र जानन्ति विप्रा इति धर्मजोऽवदत् ॥५४॥

सौरमासानुसारेण धार्तराष्ट्रा अपूर्णताम् ।
आहुश्चान्द्रेण मासेन पूर्णः कालोऽखिलोऽप्यसौ ।। ५५ ।।

दिनानामधिपः सूर्यः पक्षमासाब्दपः शशी ।
तस्मात् सौम्याब्दमेवात्र मुख्यमाहुर्मनीषिणः ।। ५६ ।।

सौम्यं कालं ततो यज्ञे गृह्णन्ति न तु सूर्यजम् ।
तदेतदविचार्यैव लोभाच्च धृतराष्ट्रजैः ।। ५७ ।।

राज्यं न दत्तं पार्थेभ्यः पार्थाः कालस्य पूर्णताम् ।
ख्यापयन्तो विप्रवरैरुपप्लाव्यमुपाययुः ।। ५८ ।।

सवासुदेवा अखिलैश्च यादवैः पाञ्चालमात्स्यैश्च युताः सभार्याः ।
उपप्लाव्ये ते कतिचिद्दिनानि वासं चक्रुः कृष्णसंशिक्षितार्थाः ।।५९।।

।। इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमहाभारततात्पर्यनिर्णये पाण्डवाज्ञात-वाससमाप्तिर्नाम त्रयोविंशोऽध्यायः ।। २३ ।।

*****

## ।। श्रीविराटपर्वनिर्णयाशयसङ्ग्रहः ।।

अन्यं वेषमुपागता पृथगतो गत्वा विराटालयं
तद्देहस्थहरेर्निषेवणपरा मल्लं तथा कीचकान् ।
हत्वा गोग्रहणोद्यतानपि कुरून् जित्वा विराटार्चिताः
पार्थाः स्वान्तिकमागतं यमाजितं भेजुस्तमीडेऽच्युतम् ।।

।। इति श्रीराघवेन्द्रतीर्थश्रीचरणकृत श्रीमन्महाभारततात्पर्यनिर्णयाशयसङ्ग्रहे विराटपर्वनिर्णयाशयसङ्ग्रहः ।।

*****

।। श्रीः ।।

श्रीवादिराजतीर्थश्रीचरणकृत -

# विराटपर्वलक्षालङ्कारः

## ( महाभारतलक्षालङ्कारादुद्धृतः )

### प्रथमोऽध्यायः

**गुप्तकाराश्च मत्ताश्च दाये स्वस्य जनस्य च ।**
**दुरात्मनां हि कस्तेषां विश्वासं गन्तुमर्हति ।।**

**गुप्तकाराश्च मत्ताश्च** इत्यत्र **गुप्तकाराः** गूढतया परद्रोहं कुर्वन्तः ।।

**प्रच्छन्नेनापि सर्वत्र हरिणा वृत्रनिग्रहे ।**
**वज्रं प्रविश्य शक्रस्य यत्कृतं तच्च ते श्रुतम् ।।**

हरिणा वृत्रनिग्रह इत्यत्र हरिणा नारायणेन ।।

### द्वितीयोऽध्यायः

**यानि यानीह कर्माणि तस्मै चकृमहे वयम् ।**
**कर्तुं यो यत् स यत् कर्म ब्रवीतु कुरुनन्दन ।।**

**यानि यानीह कर्माणि तस्मै चकृमहे वयम्** इत्यत्र **तस्मै** विराटाय चकृमहे । 'एष्यत्तु निश्चितं यत्स्यादतीतत्वेन भण्यते'[१] इति वचनात् लिट् प्रयोगः ।।

**विराटं समनुप्राप्य राजानं मात्स्यनन्दनम् ।**
**सभास्तारो भविष्यामि विराटस्येति मे मतिः ।।**

**सभास्तारो भविष्यामि** इत्यत्र 'सभासदः सभास्ताराः सभ्याः सामाजिकाश्च ते' इत्यभिधानात् **सभास्तारः** सभ्यः सभायां पूज्य इति यावत् ।।

---

१. भगवततात्पर्ये । - (२५/३/३)

**कङ्को नाम ब्रुवाणोऽहं मताक्षः साधुदेविता ।**
**वैडूर्यकाञ्चनानक्षान् स्फाटिकान् राजतानपि ।।**

**कृष्णाक्षान् लोहिताक्षांश्च धारयिष्ये सुवेष्टितान् ।**
**अरिष्टान् राजगोलिङ्गान् दर्शनीयान् सुवर्चसः ।।**

**वैडूर्यकाञ्चनान्** इत्यत्र **वैडूर्यकाञ्चनान्** वैडूर्यकाञ्चनखचितान् **अक्षान्** अक्षक्रीडासाधनान्, **कृष्णाक्षान्** कृष्णवर्णानक्षक्रीडासाधनान्, **लोहिताक्षान्** लोहितवर्णानक्षक्रीडासाधनान् **सुवेष्टितान्** चीलान्तःस्थापितान् **धारयिष्ये** विराटं धारयिष्ये तस्मै दास्यामीत्यर्थः ।।

## तृतीयोऽध्यायः

**पौरोगवो ब्रुवाणोऽहं बल्लवो नाम [१]नामतः ।**
**उपस्थास्यामि राजानं विराटमिति रोचये ।।**

**पौरोगवो ब्रुवाण** इत्यत्र 'पौरोगवस्तदध्यक्षः सूपकारास्तु वल्लवा' इत्यभिधानात् **पौरोगवः** सूपकाराणामध्यक्षः ।।

**आरालिको गोविकर्ता सूपकर्ता नियोधकः ।**
**आसं युधिष्ठिरस्याहमिति वक्ष्यामि मानवान् ।।**

**आरालिको गोविकर्ता** इत्यत्र 'आरालिका आन्धसिकाः सूदा औदनिका गुणाः' इत्यभिधानात् **आरालिकः** अन्नकर्ता, **गोविकर्ता** गवां विशेषेण क्षीरादिकर्ता, **सूपकर्ता** सूपादितत्साधनकर्ता ।।

**[२]दक्षिणे चैव सव्ये च गवामिव हविष्कृतौ ।**
**तलाङ्गुलित्राभ्युचितौ नागराजकरोपमौ ।।**

---

१. भारत । (इति गी.पाठः)

२. दक्षिणश्चैव सव्यश्च बाहू अनडुहो यथा । (इति प्र. पाठः - कुम्)

**दक्षिणे चैव सव्ये च गवामिव हविष्कृतौ** इत्यत्र दक्षिणे सव्ये च **गवां** शराणां हवींषि शराख्यहवींषीत्यर्थः । **कृतौ** कुर्वाणाविव तिष्ठतः ।।

**बाहू मे भरतश्रेष्ठ महालाञ्छनलक्षितौ ।**
**ज्याघातेन महान्तौ मे संवर्तुं नृप दुष्करौ ।।**

**संवर्तुं नृप दुष्करौ** इत्यत्र संवरणमाच्छादनं कर्तुम् ।।

**अश्वान् परिभविष्यन्ति किशोराः वडवास्तथा ।**
**न दुष्टाश्च भविष्यन्ति पुष्टे धुरि च मद्गताः ।।**

**अश्वान् परिभविष्यन्ति** इत्यत्र अश्वान् **वडवा** वाम्यः जातु क्वचिच्च परिभविष्यन्ति, तथा वडवाः शिक्षिताः करिष्यामीति भावः ।।

**तथा सज्वलितं किञ्चिद्ददृशुस्तद्विदो जनाः ।**
**सुनीतमायी शूरश्च सर्वमन्त्रविशारदः ।।**

**तथा सज्वलितम्** इत्यत्र **तद्विदो जनाः** नीतिशास्त्रविदो जनाः **तथा** तथाविधं सहदेवं किञ्चित्सज्वलितं ददृशुः पूर्वोक्तप्रकारादपि नीत्यादिशास्त्रे किञ्चिदभ्यधिकबुद्धिप्रकाश-सहितं ददृशुरिति योजना । **सुनीतमायि शूरश्च** इत्यत्र सुष्ठु नीताः नीतिमन्तः मायिनो यस्मात् स तथोक्तः ।।

**यथा न दुर्हृदः पापा भवन्ति सुखिनः पुनः ।**
**कुर्यास्तथा त्वं कल्याणि लक्षयेयुर्न ते जनाः ।।**

**यथा न दुर्हृदः पापा** इत्यत्र त्वां दृष्ट्वा दुर्हृदः पापाः पुनः सुखिनो यथा न भवन्ति तथा कुर्याः । भवती **वर्णतः** क्षत्रियवर्णतः यथा वर्तते तथा कुर्या इति पूर्वेणान्वयः ।।

## चतुर्थोऽध्यायः

**हन्तेमां राजवसतिं राजपुत्रा ब्रवीमि वः ।**
**यथा राजकुलं प्राप्य चरन् प्रोष्य न रिष्यति ।।**

**हन्तेमां राजवसतिम्** इत्यत्र **राजवसतिं** राज्ञो निकटे निवसनप्रकारम् । **राजकुलं** राज्ञां निकटम् ।।

**दुर्वसन्नेव कौरव्याजानता राजवेश्मनि ।**
**अमानितेन मानार्ह गूढेन परिवत्सरम् ।।**

**दुर्वसन्नेव कौरव्याजानता राजवेश्मनि** इत्यत्र राजवेश्मनि तेन राज्ञा अजानता सता **दुर्वसन्** दुःखेन वासं कुर्वन्नेव भवेत् ।।

**दृष्टद्वारो लभेद्द्रष्टुं राजस्वेषु न विश्वसेत् ।**
**न चानुशिष्याद्राजानमपृच्छन्तं कदाचन ।।**

**दृष्टद्वारो लभेत्** इत्यत्र **दृष्टद्वारः** द्वारे दृष्टः सन् **द्रष्टुं** राजानं **द्रष्टुं लभेत्** गच्छेत् ।।

**धृष्टो द्वारं सदा पश्यन्न च राजसु विश्वसेत् ।**
**तदेवासनमन्विच्छेत् यत्र नाभिषजेत्परः ।।**

**यत्र नाभिषजेत्पर** इत्यत्र यत्र परः **नाभिषजेत्** अभिषङ्गं सम्बन्धं न प्राप्नुयात्, ममेदमासनमिति कलहं न कुर्यादिति भावः ।।

**यो नयानयपर्यङ्कं नासनं न रथं तथा ।**
**आरोहेत् सम्मतोऽस्मीति यो राजवसतिं वसेत् ।।**

**यो नयानयपर्यङ्कम्** इत्यत्र इतस्ततः नीयते, आनीयत इति नयानयः स चासौ पर्यङ्कश्च तम् ।।

**यथैनं यत्र चासीनं शङ्केरन् दृष्टचारिणः ।**
**न तत्रोपविशेज्जातु यो राजवसतिं वसेत् ।।**

**शङ्केरन् दृष्टचारिण** इत्यत्र **दृष्टचारिणः** दृष्टे एतद्दर्शनविषये अन्तःपुरे चारिणः दासीदारादिजनाः ।। २३ ।।

**न चानुशिष्येद्राजानमपृच्छन्तं कदाचन ।**
**तूर्ष्णीं त्वेनमुपासीत काले समभिपूजयेत् ।।**

**न चानुशिष्येत्** इत्यत्र **अनुशिष्येत्** 'एवं कुरु' इति अनुशिक्षणं कुर्यात् ।।

**नैषां दारेषु कुर्वीत मैत्रीं प्राज्ञः कथञ्चन ।**
**अन्तःपुरचरा ये च द्वेष्टि यानहिताश्च ते ।।**

**द्वेष्टि यानहिताश्च त** इत्यत्र **यान्** अन्तःपुरचरेषु दासीजनेषु दारेषु च मैत्रीं कुर्वतः ।।

**यस्य भर्ताऽनुयुञ्जीत तदेवाभ्यनुवर्तयेत् ।**
**प्रमादमवहेलां च कोपं च परिवर्जयेत् ।।**

**यस्य भर्ताऽनुयुञ्जीत** इत्यत्र **भर्ता** राजा **यस्य** पुरुषस्य ।।

**समर्थनासु सर्वासु हितं च प्रियमेव च ।**
**संवर्णयेत् तदेवास्य प्रियादपि हितं वदेत् ।।**

**समर्थनासु सर्वासु** इत्यत्र **समर्थनासु** यत्किञ्चित्कार्यसमर्थनसमयेषु ।।

**न च सन्दर्शने किञ्चित् प्रवृद्धमभिसञ्जपेत् ।**
**अपि ह्येतद्दरिद्राणां व्यलीकस्थानमुत्तमम् ।।**

**न च सन्दर्शने किञ्चित्प्रवृद्धम्** इत्यत्र **किञ्चित्प्रवृद्धम्** अल्पबहुकालम् । **अपि ह्येतद्दरिद्राणाम्** इत्यत्र **एतत्** दर्शनानन्तरमप्याभिमुख्येन बहुकालावस्थानं दरिद्राणामपि **व्यलीकस्थानं** 'व्यलीकं त्वप्रियेऽनृतम्' इत्यभिधानात् अप्रियस्थानम्, किमु राज्ञामिति भावः ।।

## पञ्चमोऽध्यायः

**हर्षवस्तुषु चाप्यत्र वर्तमानेषु केषुचित् ।**
**नातिगाढं प्रहृष्येत तान्येवास्यानुपूजयेत् ।।**

**नातिगाढं प्रहृष्येत** इत्यत्र **प्रहृष्येत** प्रहर्षेण अट्टहासं कुर्वीत । **संविन्दति हि राजानम्** इत्यत्र राजानं राजानमेव विन्दति सेवते ।।

**नैषां कर्मसु संयुक्तो धनं किञ्चिदपि स्पृशेत् ।**
**प्राप्नोति हि हरन् द्रव्यं बन्धं वा वधमेव वा ।।**

**धनं किञ्चिदपि स्पृशेत्** इत्यत्र **धनं** राजधनं वियोगरूपधनं वा । धृतं कट्टलिकया कृतं द्रव्यं धनं न भवतीति नधनं अन्नपानादिरूपं **प्राप्नोति** राजकरादेव प्राप्नोति ।।

तदेव विवेचयति - **यानम्** इत्यादिना ।।

**यानं वस्त्रमलङ्कारं यच्चान्यत् सम्प्रयच्छति ।**
**तदेव धारयेन्नित्यमेवं प्रियतरो भवेत् ।।**

**उषित्वा द्वादशसमा वने परपुरञ्जयाः ।**
**लुब्धान् ब्रुवाणा मात्स्यस्य विषयं प्राविशंस्तदा ।।**

**लुब्धान् ब्रुवाणा** इत्यत्र **लुब्धान्** मृगयून् **ब्रुवाणाः** स्वान् ब्रुवाणाः ।।

**तामादायार्जुनस्तूर्णं शार्दूलः पृषतीमिव ।**
**सम्प्राप्य नगराभ्याशमवतारयदर्जुनः ।।**

**शार्दूलः पृषतीमिव** इत्यत्र 'गोकर्णपृषतैणर्श्यरोहिताश्चमरो मृगाः' इत्यमरः । **पृषती** मृगी ।।

## षष्ठोऽध्यायः

**धनुर्भिः पुरुषं कृत्वा चर्मकोशास्थिसंवृतम् ।**
**उद्बन्धमिव कृष्णं च धनूंष्यावह संवृतम् ।।**

**उद्बन्धमिव कृष्णं च** इत्यत्र **उद्बन्धम्** उत्कृष्टबन्धनसहितं शवमिव स्थितं **कृष्णं** कृष्णवर्णं **संवृतम्** आच्छन्नं यथा भवति तथा धनूंषि **आवह** अन्तः प्रापय ।।

**सह धर्मेण धर्मात्मा तदा घोरतरे वने ।**
**अरणीपर्वणः काले वरो दत्तः परन्तप ।।**

**सह धर्मेण धर्मात्मा** इत्यत्र भ्रातृभिः सह स्थितो यो धर्मात्मा धर्मराजः तं **विवित्सता** वेत्तुमिच्छता **धर्मेण** यमेन । अन्यत् स्पष्टम् ।।

**इदं गोमृगमभ्याशे गतसत्वमचेतनम् ।**
**एतदुत्कृत्य वै हार्यं धनूंषि परिवेष्टयेत् ।।**

**इदं गोमृगम्** इत्यत्र गौश्च मृगश्च गोमृगम् । **हार्यं** हर्तुं योग्यं चर्म ।।

**तानि वीरयशोज्ञाननिराबाधानि सर्वशः ।**
**पुनः पुनः सुसंवेष्ट्य कृत्वा सुकृतमावरम् ।।**

**तानि वीरयशोज्ञाननिराबाधानि** इत्यत्र वीराणां पाण्डवानां यशसा ज्ञानेन च निराबाधानि **तानि** आयुधानि ।।

**तच्चानीय धनुर्मध्ये निबबन्धुश्च पाण्डवाः ।**
**उपायकुशलाः सर्वे प्रणदन्तः समब्रुवन् ।।**

**तच्चानीय धनुर्मध्य** इत्यत्र **आनीय** धनुर्मध्ये प्रापयित्वा निक्षिप्येत्यर्थः ।।

**यानि चात्र विशालानि रूढमूलानि मन्यसे ।**
**तेषामुपरि बध्नीहि इदं विप्रकलेवरम् ।।**

**यानि चात्र विशालानि** इत्यत्र **यानि** लतामयदामानि । **तेषाम्** आयुधानाम् ।।

**अथ च्छन्नापि नामानि चकारैषां युधिष्ठिरः ।**
**जयो जयन्तो विजयो जयत्सेनो जयद्बलः ।।**

**अथ च्छन्नानि नामानि** इत्यत्र **अथ** धौम्यपरित्यागानन्तरं विराटनगरप्रवेशपर्यन्तम् ।।

## सप्तमोऽध्यायः

**निपातिता यक्षवरेण ते वने महाहवे यज्ञभृतेव दानवाः ।**
**मया च गत्वा वरदो हि तोषितो विवक्षता प्रश्नसमुच्चयं गुरुः ।।**

**महाहवे यज्ञभृतेव दानवा** इत्यत्र **यज्ञभृता** नारायणेन महाहवे दानवा इव ।।

**मृगेन्द्रराड्वारणयूथपोपमः प्रभात्ययं काञ्चनपर्वतो यथा ।**
**विराजते पावकसूर्यसन्निभं सचन्द्रनक्षत्र इवांशुमानहः ।।**

**सचन्द्रनक्षत्र इवांशुमानह** इत्यत्र अहः अह्नि सचन्द्रनक्षत्रः **अंशुमान्** सूर्य इवेत्यभूतोपमा । मन्दस्मितं चन्द्रवत्, दन्तावली नक्षत्रवत्, स्वयं सूर्यवदित्यर्थः ।।

**न दृश्यतेऽस्यानुचरो न कुञ्जरो न चोष्णरश्मिः किरणैः समुच्छ्रितः ।**
**न कुण्डलं नाङ्गदमस्य न स्रजो विचित्रताङ्गश्च रथश्चतुर्युजः ।।**

**न चोष्णरश्मिः किरणैः समुच्छ्रित** इत्यत्र अयमागच्छन् यतिः किरणैः समुच्छ्रितः उष्णरश्मिश्च न । अस्य राजोचितानुचरादिश्च न; अतः महाराजोऽपि न । तथापि **विचित्रता** तेजोरूपादिना अतिचित्रत्वं दृश्यत इति योजना ।।

**समुद्यता साऽऽस सभा सपार्थिवा सविप्रराजन्यविशा सशूद्रका ।**
**सभागतं प्रेक्ष्य तपन्तमर्चिषां विनिःसृतं राहुमुखाद्यथा रविम् ।।**

**समुद्यता साऽऽस सभा** इत्यत्र सा सभा **समुद्यता** सन्नद्धा आसेति पदच्छेदः ।। २५ ।।

**तमब्रवीत् प्राञ्जलिरेष पार्थिवो विराटराजो मधुराक्षरं वचः ।**
**प्राप्तः कुतस्त्वं भगवन् किमिच्छसि क्व वास्यसे किं करवाणि ते द्विज ।।**

**क्व वास्यसे किं करवाणि** इत्यत्र **वास्यसे** केन वास्योऽसि । यतः परेणैव स्थाप्यत्वादेवमुक्तम् ।।

**एवं ब्रुवाणं तमुवाच पार्थिवं युधिष्ठिरो धर्ममवेक्ष्य चासकृत् ।**
**सत्यं वचः को न्विह वक्तुमुत्सहेत् यथाप्रतिज्ञां च श्रुणुष्व पार्थिव ।।**

अहं संन्यासीत्युक्ते मिथ्यावादः स्यादित्यत आह – **यथाप्रतिज्ञं चेति । यथाप्रतिज्ञं** प्रतिज्ञामनतिक्रम्य । स्वभावतः यतित्वाभावेऽपि अज्ञातवासाय पञ्चानां पञ्चविधरूपस्य प्रतिज्ञातत्वात् प्रतिज्ञानुसारेण यतित्वमप्यस्तीति भावः ।। ३१ ।।

**श्रुतं च शीलं च कुलं च कर्म च शृणुष्व मे जन्म च देशमेव च ।**
**गुरूपदेशान्नियमाच्च मे व्रतं कुलक्रमार्थं पितृभिर्नियोजितम् ।।**

**गुरूपदेशान्नियमात्** इत्यत्र **गुरूपदेशात्** गुरोर्धौम्यस्योपदेशात्, नियमात् अस्मत्प्रतिज्ञारूपनियमाच्च **कुलक्रमार्थं** कुले ब्राह्मणकुले क्रमः क्रमणं पादविक्षेपः तदर्थं

**पितृभिः** अस्मत्पितृभूतयमदेवेन, गुरुत्वाद्बहुवचनम् । **नियोजितं** आज्ञप्तं व्रतमस्ति । तेन व्रतेन द्विजोऽस्मि । अत एव द्विजो न । स्वभावतः क्षत्रियत्वेऽप्यौपाधिकद्विजत्व मस्ति, अतो नासत्यमिति भावः ।। ३२ ।।

**ममैव पञ्चेन्द्रियगात्रदर्शिनो वदन्ति पञ्चैव पितॄन् यथा श्रुतिः ।**
**मनुष्यजातित्वमचिन्तयन्नहं न चास्मि तुल्यः पितृभिः स्वभावतः ।।**

**ममैव पञ्चेन्द्रियगात्रदर्शिन** इत्यत्र पञ्चेन्द्रियसहितं गात्रं ये पश्यन्ति ते ज्ञानिनः पञ्चैव पञ्चमहाभूतान्येव पितॄन् वदन्ति । 'भूतैर्महद्भिर्य इमाः पुरो विभुर्निर्माय शेते यदमूषु पुरुषः' इत्याद्या स्मृतिः श्रुतिश्च यथा, तथेति पूर्वेणान्वयः । अस्य शरीरस्य पञ्चमहाभूतेभ्यो जातत्वात् पितृरेतसा उत्पत्तावपि उपचायकपञ्चमहाभूतानामेव देहासाधारणकारणत्वान्मुख्यं पितृत्वमिति भावः । पाण्डुपुत्रत्वकथने अज्ञातवासभङ्गः, अन्यपुत्रत्वकथने मिथ्यावादः स्यादित्यत एवमुक्तम् । **मनुष्यजातित्वमचिन्तयन्** इत्यत्र पञ्चभूतकार्ये मम देहे यन्मनुष्यजातित्वम्, औपाधिकत्वात् तदचिन्तयन् अहं **पितृभिः** पञ्चमहाभूतैः अतुल्यो नास्मि । औपाधिकमानुषत्वस्योपेक्षायां पञ्चमहाभूतानां देहस्य च साम्यमेवेति भावः ।। ३४ ।।

**कङ्कोऽस्मि नाम्ना विषयं तवागतो व्रती द्विजातिः स्वकृतेन कर्मणा ।**
**द्यूतप्रसङ्गादधनोऽस्मि राजन् सत्यप्रतिज्ञा व्रतिनश्चरामः ।।**

**कङ्कोऽस्मि नाम्ना** इत्यत्र **स्वकृतेन कर्मणा** सङ्केतेन । इदमपि सत्यरक्षणार्थम् । **द्यूतप्रसङ्गात्** इत्यत्र द्यूते पणं दत्त्वा धनक्षयात् संन्यासी जात इति बाह्यो भावः । शकुनिना सह द्यूतप्रसङ्गात् राज्ये गते सति अज्ञातवासार्थं संन्यासी जात इत्यान्तरो भावः ।। ३५ ।।

**युधिष्ठिरस्यास्मि सखाऽभवं पुरा गृहप्रवेशी च शरीरमेव च ।**
**गृहे च तस्योषितवानहं सुखं राजाऽस्मि तस्य स्म पुरे भवन् पुरा ।।**

**युधिष्ठिरस्यास्मि** इत्यत्र स्वस्य स्वात्मानं प्रति निरुपाधिप्रेमास्पदत्वात् युधिष्ठिरस्य सखा अस्मीत्युक्तम् । तस्य शरीरमेव अहमस्मि स्वशरीरे यथा प्रीतिं करोति तथा

मय्यपीति बाह्यो भावः । तच्छरीरमित्यान्तरो भावः । **राजाऽस्मि तस्य स्म पुरे भवन् पुरा** इत्यत्र पुरा तस्य पुरे विद्यमानः अहं **राजाऽस्मि** राजवत्सर्वजनपूज्यत्वात् राजाऽस्मीत्येको भावः । वस्तुतस्तु तस्य पुरे अहमेव राजेत्यान्तरो भावः ।।

**सोऽहं पुरा तस्य वयस्समः सखा चरामि सर्वां वसुधां सुदुःखितः ।**
**न तु प्रशान्तिं क्वचिदाप्तवानहं व्रतोपदेशान्नियमेन भारिकः ।।**

**सोऽहं पुरा** इत्यत्र आवां समानवयस्काविति बाह्यो भावः । तदुत्पत्तिदिनमेव मदुत्पत्तिदिनम्, तन्मरणदिनमेव मन्मरणदिनम् । अतः स एवाहमित्यान्तरो भावः ।।

**वैयाघ्रपाद्योऽस्मि नरेन्द्र गोत्रतस्तदेव सख्यं मृगयामहे वयम् ।**
**कृतज्ञभावेन मयाऽनुकीर्तितं युधिष्ठिरस्यात्मसमस्य चेष्टितम् ।।**

**वैयाघ्रपाद्योऽस्मि** इत्यत्र व्याघ्रपदः गोत्रापत्यं पुमान् वैयाघ्रपाद्यः । 'वैयाघ्रपादगोत्राय' इति भीष्मस्य कथनात् सोमवंशप्रवर्तकः । व्याघ्रपादपि कश्चिदस्ति ऋषिरिति बाह्यो भावः । **तदेव सख्यं** पूर्वं राजसखत्वात् इदानीमपि **तदेव** राजसख्यमेव **मृगयामह** इत्यर्थः ।।

**इमं हि मोक्षाश्रममास्थितस्य मे युधिष्ठिरस्तुल्यगुणो भवानपि ।**
**न मेऽद्य माता न पिता न बान्धवा न मेऽस्ति रूपं न रतिर्न सन्ततिः ।।**

**न मेऽद्य माता न पिता** इत्यत्र यतित्वादहं मात्रादिकं विहायैवागतोऽस्मि । अतस्ते सर्वे मम अद्य अविद्यमानप्राया इति भावः । **रूपं** लावण्यम् ।। ४० ।।

**अक्षान्निवप्तुं कुशलोऽस्म्यहं सदा पराजितः शकुनिरुतानि चिन्तयन् ।**
**मृगद्विजानां च रुतानि चिन्तयन् निराश्रयः प्रव्रजितोऽस्मि भिक्षुकः ।।**

**पराजितः शकुनिरुतानि चिन्तयन्** इत्यत्र **शकुनेः** शकुन्तपक्षिणः **रुतानि** अशुभसूचकध्वनीन् चिन्तयन् **पराजितः** गृहस्थाश्रमात् पराजयं प्राप्तः भ्रंशितोऽस्मीत्येको भावः । सौबलस्य शकुनेः कुत्सितवाक्येन पराजितोऽस्मीति हृदयम् । **मृगद्विजानाम्**

इत्यत्र **मृगाणां द्विजानां** शकुन्तेतरपक्षिणां रुतानीत्येको भावः । अरणीहरणसमये **मृगरूपस्य यमस्य द्विजानां** धौम्यादीनां च वाक्येन प्रव्रजितोऽस्मीत्यान्तरम् ।।

**ददामि ते हन्त वरं यदीप्सितं प्रशाधि मत्स्यान् यदि मन्यते भवान् ।**
**प्रिया हि धूर्ता मम चाक्षकोविदास्त्वं चापि देवो मम राज्यमर्हसि ।।**

**प्रिया हि धूर्ता मम** इत्यत्र अक्षकोविदाः धूर्ताः प्रियाः ममापि सन्ति । तस्मादक्षक्रीडार्थं त्वां न वरये । किन्तु महालक्षणभरितस्त्वां राज्यमेव पालयेति भावः ।।

**अतोऽभिलाषः परमो न विद्यते न मे जितं किञ्चन धारये धनम् ।**
**न भोजनं किञ्चन संस्पृशेयं हविष्यभोजी निशि च क्षितीशयः ।।**

**न मे जितं किञ्चन** इत्यत्र मे जितं वैराग्येण वशीकृतं मनः ।।

**एवं स लब्ध्वा नृपतिः समागमं विराटराजेन नरर्षभस्तदा ।**
**उवास वीरः परमार्चितः सुखी स वाऽस्य कश्चिच्च स तं बुबोध तत् ।।**

**स वाऽस्य कश्चिच्च स तं बुबोध तत्** इत्यत्र तत्तस्माद्यतिवेषधारित्वात् **स वा** विराटो वा **अस्य कश्चित्** भृत्यजनो वा **तं न बुबोध**ेति योजना ।।

## अष्टमोऽध्यायः

**अथापरस्यां दिशि भीमदर्शनो वृकोदरोऽदृश्यत सिंहविक्रमः ।**
**असिप्रवेके प्रतिमुच्य शाणिते खजं च दर्वीं च करेण धारयन् ।।**

**खजं च दर्वीं च करेण धारयन्** इत्यत्र **खजं** अन्नरसनिष्क्रमणाय खमवकाशं दातुं जातमिति व्युत्पत्त्या खजपदेन शमी कथ्यते । 'यसमुच्चलु' इत्यपभ्रंशभाषा ।।

**गम्भीररूपः परमेण तेजसा रविर्यथा लोकमिमं प्रकाशयन् ।**
**स कृष्णवासा गिरिराजसारवान् स मत्स्यराजं समुपेत्य तस्थिवान् ।।**

**गिरिराजसारवान्** इत्यत्र **गिरिराजसारवान्** पर्वतराजवत् सत्ववान् ।।

**सभागतो वारणयूथपोपमः तमिस्रया रात्रिमिवावभासयन् ।**
**सहस्रनेत्रावरजान्तकोपमस्त्रिलोकपालाधिपतिर्यथा हरिः ॥**

**तमिस्रया रात्रिमिवावभासयन्** इत्यत्र **तमिस्रया** अन्धकारेण । भीमदर्शने सति भयेन सभास्थितानां निमीलितचक्षुस्त्वात् तमिस्रया रात्रिमिवेत्युक्तम् । यद्वा तमि अन्धकारं स्रावयति गमयतीति **तमिस्रा** चन्द्रज्योत्स्ना । **सहस्रनेत्रावरजान्तकोपमः सहस्रनेत्रस्य** इन्द्रस्य **अवरजः** अनन्तरदिक्पालः **अन्तकः** यमः ॥

**अथाब्रवीन्मात्स्यपतिः सभागतान् भृशातुरोष्णं परिनिश्वसन्निव ।**
**कोऽयं युवा वारणराजसन्निभः सभामभिप्रैति हि मामिकामिमाम् ॥**

**भृशातुरोष्णं परिनिश्वसन्** इत्यत्र भृशातुरं च उष्णं च यथा भवति तथा भृशातुरोष्णम् ॥

**ततो नृपं वाक्यमुवाच पाण्डवो यथाऽनुपूर्व्यात् कृपयाऽन्वितोत्तरम् ।**
**त्वां जीवितुं शत्रुदमागतोऽहं त्वमेव लोके परमो हि संश्रयः ॥**

त्वां जीवितुं शत्रुदमेत्यत्र त्वामाश्रित्य जीवितुम् ॥ १२ ॥

**जानामि सूपांश्च रसांश्च संस्कृतान् मांसान्यपूपांश्च पचामि शोभनाम् ।**
**रागप्रकारांश्च बहून् फलाश्रयान् महानसे मे न समोऽस्ति सूपकृत् ॥**

**रागप्रकारांश्च बहून् फलाश्रयान्** इत्यत्र **रागं** स्नेहं प्रकर्षेण कुर्वन्तीति रागप्रकाराः तान् ॥

**अनीककर्णाग्रधरो ध्वजी रथी भवाद्य मे वारणवाहिनीपतिः ।**
**न नीचकर्मा भवितुं त्वमर्हसि प्रशासितुं भूमिमिमां त्वमर्हसि ॥**

**अनीककर्णाग्रधर** इत्यत्र अनीकस्य **कर्णाग्रधरः** कर्णधारः सेनानायक इत्यर्थः ॥

**राज्ञा नियुक्तोऽस्मि महानसे पुरा बभूव सर्वप्रभुरन्नपानदः ।**
**अथापि मामुत्सृजसे महीपते व्रजाम्यहं यावदितो यथागतम् ॥**

**राज्ञा नियुक्त** इत्यत्र **राज्ञा** धर्मराजेन ॥

**गजांश्च सिंहांश्च समेयिवानहं सदा करिष्यामि तवानघ प्रियम् ।**
**न नीचकर्मा तव मादृशः प्रभो बलस्य मत्तः प्रबलो भवेदिति ।।**

**प्रबलो भवेत्** इत्यत्र मत्तः प्रबलोऽपि न भवेदिति नञावर्त्त्या योजना ।।

**तमेवमुक्ते वचने नराधिपः प्रत्यब्रवीन्मत्स्यपतिः प्रहृष्टवत् ।**
**एवं हि मन्ये तव कर्म तत्समं समुद्रनेमिं पृथिवीं त्वमर्हसि ।।**

**एवं हि मन्ये तव कर्म तत्** इत्यत्र तव कर्म तत् उपरि वक्ष्यमाणम् ।।

## नवमोऽध्यायः

**अथापरोऽदृश्यत वर्णवान् युवा स्त्रीवेषधारी समलङ्कृतो भृशम् ।**
**प्रवालचित्रे प्रविमुच्य कुण्डले उभे च कम्बू परिवर्तके तथा ।।**

**प्रवालचित्रे प्रविमुच्य कुण्डल** इत्यत्र कुण्डले **प्रविमुच्य** त्यक्त्वा **परिवर्तके** परितो वर्तमाने वर्तुले इत्यर्थः । **कम्बू** शङ्खकृतताटङ्कौ धृत्वा ।।

**वेणीं प्रकुर्यां रुचिरे च कुण्डले ग्रथे स्रजः प्रावरणानि संहरे ।**
**स्नानं चरेयं विमृजे च दर्पणं विशेषकेष्वस्त्यपि कौशलं मम ।।**

**विशेषकेष्वस्त्यपि** इत्यत्र 'तमालपत्रतिलकचित्रकाणि विशेषकम्' इत्यमरः । **विशेषकेषु** तिलकेषु ।।

**प्रगृह्य चापं त्वनुरूपमात्मनो रक्षस्व देशं पुरमद्य सुस्थिरः ।**
**पुत्रेण तुल्यं भव मे बृहन्नले वृद्धोऽस्मि वित्तं प्रतिपादयामि ते ।।**

**पुत्रेण तुल्यं भव** इत्यत्र **तुल्यं** यथा भवति तथेति क्रियाविशेषणम् ।।

**ततोऽर्जुनः क्लीबतरं वचोऽब्रवीत् न मे धनुर्धारितमीदृशं विभो ।**
**न चापि दृष्टं धनुरीदृशं क्वचित् न मादृशाः सन्ति धनुर्धरा भुवि ।।**

**न मादृशाः सन्ति धुनुर्धरा** इत्यत्र मादृशाः स्त्रियः ।।

नृत्यामि गायामि च वादयाम्यहं प्रानर्तने कौशलनैपुणं मम ।
तदुत्तरायाः परिदत्स्व नर्तनं भवामि देव्या नरदेव नर्तकी ।।

**उत्तरायाः परिदत्स्व नर्तनम्** इत्यत्र नर्तनं कारयितुं **परिदत्स्व** दिश ।।

प्रकामभक्ष्याभरणाम्बरा शुभा चरत्वियं सर्वजनेष्ववारिता ।
न दुष्कुलानामियमाकृतिर्भवेत् न नृत्तभेदे भवतीदृशो जनः ।।

**न नृत्तभेदे भवतीदृशो जन** इत्यत्र नृत्तभेदे ईदृशो जनो न । अहमेव महानर्तकीति भावः ।।

स शिक्षयामास च गीतवादितं
सुतां विराटस्य धनञ्जयः प्रभुः ।
सखीश्च तस्यां परिचारिकास्तथा
प्रियश्च तस्याः स बभूव पाण्डवः ।।

**वादितं** वादित्रम् ।।

## दशमोऽध्यायः

अथापरोऽदृश्यत पाण्डवः प्रभुर्विराटराजे तुरगानवेक्षिता ।
तमापतन्तं ददृशुः पृथग्जनाः प्रमुक्तमभ्रादिव चन्द्रमण्डलम् ।।

**तुरगानवेक्षिता** तुरगसादी ।।

रथानि यानानि धनानि वेतनं न चाश्वसूतो भवितुं त्वमर्हसि ।
कुतोऽसि कस्यासि कथं त्वमागतो ब्रवीहि शिल्पं तव विद्यते च यत् ।।

**रथानि यानानि** इत्यत्र ददानीति योग्यक्रियाध्याहारः ।। ७ ।।

## एकादशोऽध्यायः

यष्ट्या प्रमाणान्वितया सुदर्शनं दामानि पाशं च निबद्ध्य पृष्ठतः ।
मौर्वीं च तन्त्रीं महतीं सुसंहितां बालैश्च दामैर्बहुभिः समावृताम् ।।

**बालैश्च दामैः** इत्यत्र **बालैः** पुच्छाग्ररोममयैः **दामैः** दामभिः ।। ३ ।।

**निशम्य राजा सहदेवभाषितं निरीक्ष्य माद्रीसुतमभ्यनन्दत् ।**
**उवाच हृष्टो मुदितेन चेतसा अवल्लवत्त्वं त्वयि वीर लक्षये ।।**

**अवल्लवत्त्वम्** अगोपालताम् ।।

## द्वादशोऽध्यायः

**वेणीकेशान् समुत्क्षिप्य पीनवृत्तकुचा शुभा ।**
**जुगूह दक्षिणे पार्श्वे मृदूनसितलोचना ।।**

**जुगूह दक्षिणे पार्श्व** इत्यत्र दक्षिणे पार्श्वे वेणीकेशान् **जुगूह** कबरीभारान्तः प्रवेश्य आच्छादितवती ।।

**तस्या रूपेण वेषेण श्लक्ष्णया च गिरा तथा ।**
**न च श्रद्दधतां दासीमन्नहेतोरुपस्थिताम् ।।**

**न च श्रद्दधतां दासीम्** इत्यत्र **श्रद्दधतामि**ति लोटि आत्मनेपदे बहुवचनम् । न श्रद्दधिर इत्यर्थः ।। ५ ।।

**विराटस्य तु कैकेयी भार्या परमसम्मता ।**
**आलोकयन्ती ददृशे प्रासादाद्द्रुपदात्मजाम् ।।**

**कैकेयी** केकयविषयजाता सुदेष्णा ।।

**अथ सा छिन्नपट्टाभ्यां वल्कलाजिनसंवृताम् ।**

**अथ सा छिन्नपट्टाभ्याम्** इत्यत्र प्राक् अच्छिन्नपट्टवस्त्राभ्यामिव वल्कलाजिनसंवृतेत्यर्थः ।।

**सा प्रविश्य विराटस्य द्रौपद्यन्तःपुरं शुभा ।**
**ह्रीनिषेधान्विता बाला कम्पमाना लतेव सा ।।**

**ह्रीनिषेधान्विता बाला** इत्यत्र **ह्रिया** लज्जया इतस्ततो दर्शनस्य **निषेधेन** अन्विता ह्रीनिषेधान्विता ।।

**मृगरोहीमिवानीताम्** इत्यत्र मृगरोहीं मृगबालाम् ॥

**सुलभामिव नागीनां मृगीणामिव किन्नरीम् ।**
**गङ्गामिव विशुद्धाङ्गीं शारदीमिव शर्वरीम् ॥**

**मृगीणामिव किन्नरीम्** इत्यत्र मृगीणां मध्ये स्थितां किन्नरीमिव ॥

**गूढगुल्फा समानोरूस्त्रिगम्भीरा षडुन्नता ।**
**रक्ता पञ्चसु रक्तेषु हंसगद्गदभाषिणी ॥**

**त्रिगम्भीरा इत्यादेरयमर्थः – त्रिगम्भीरा** नाभौ श्रोत्रयोश्चेति त्रिषु गम्भीरा । **षडुन्नता** कपोलयोः कुचयोः श्रोण्यां च अङ्गुल्यग्रे चेति षट्सु स्थानेषु उन्नता । **पञ्चसु** अधरे हस्ततलयोः पादतलयोश्चेति **रक्तेषु** रागयोग्येषु स्थानेषु **रक्ता** ॥

**सुकेशी सुस्वरा श्यामा पीनश्रोणीपयोधरा ।**
**अरालपक्ष्मनयना बिम्बोष्ठी तनुमध्यमा ॥**

**अरालपक्ष्मनयना** इत्यत्र 'अरालं वृजिनं जिह्मं इत्यभिधानात् अराले जिह्मे **पक्ष्मणी नयने** च यस्याः सा ॥

**कम्बुग्रीवा गूढसिरा पूर्णचन्द्रनिभानना ।**
**दानवी किन्नरी वा त्वं गन्धर्वी वनदेवता ॥**

**गूढसिरा** इत्यत्र 'नाडी तु धमनिः सिरा' इत्यमरः । **गूढसिरा** गूढनाडीनाला ॥

**योऽस्माकं तु हरेद्द्रव्यं देशं वसनमेव वा ।**
**न क्रोद्धव्यं किलास्माभिरस्मद्गुरुरमर्षणः ॥**

**अस्मद्गुरुरमर्षण** इत्यत्र **अमर्षणः** मारको न भवतीत्यमर्षणः शान्त इत्यर्थः ॥

**भर्तृशोकपरीताङ्गी भर्तुश्च ब्रह्मचारिणी ।**
**विचरामि महीं दुर्गां यत्र सायंनिवेशना ॥**

**भर्तुश्च ब्रह्मचारिणी** इत्यत्र भर्तुर्निमित्तात् ब्रह्मचारिणी । भर्तुः सहस्थित्यभावादिति भावः ।।

**वीरपत्नी यदा देवी चरमाणेषु भर्तृषु ।**
**साऽहं विवत्सा विधिना गन्धमादनपर्वतात् ।।**

**वीरपत्नी** द्रौपदी ।।

**वृक्षांश्चोपस्थितान् पश्य य इमे मम वेश्मनि ।**
**विनमन्ते हि त्वां दृष्ट्वा पुमांसं कं न लोभयेः ।।**

**वृक्षांश्चोपस्थितान्** इत्यत्र **उप** प्रासादसमीपस्थोपवने **स्थितान्** वृक्षान् ।।

**पञ्चत्वमपि सम्प्राप्तं यदि त्वं पुरुषं स्वजेः ।**
**बाहुभ्यामनुरूपाभ्यां स जीवेदिति मे मतिः ।।**

**यदि त्वं पुरुषं स्वजेः** इत्यत्र **स्वजेः** आलिङ्गयसि ।।

**सुस्नाताऽलङ्कृता च त्वं यमीक्षेथा हि मानवम् ।**
**ग्लानिर्न तस्य दुःखं वा न तन्द्रिर्न पराजयः ।।**

**सुस्नाताऽलङ्कृता च त्वं** इत्यत्र **यं** भर्तुभूतं मानवम् ।।

**अध्यारोहेद्यथा वृक्षं वधायारुह्य तिष्ठति ।**
**राजवेश्मनि लेखाग्र्या ननु स्यास्त्वं तथा मम ।।**

**अध्यारोहेद्यथा वृक्षं वधायारुह्य तिष्ठति** इत्यत्र वधाय स्वशात्रौ वृक्षमारुह्य तिष्ठति सति तमेव वृक्षं यथा आरोहेत् राजवेश्मनि स्थिता **लेखया** लावण्यलेखया अग्र्या त्वं मम तथा स्याः ननु ।।

**सुतेषु च विसत्वम्** इत्यत्र मे सुतादिषु **विसत्वं** विशेषेण सत्वमस्ति । तत् सुतादीनां सत्त्वात्कारणात् विश्वमपि ईदृशं स्प्रष्टुमशक्तम् ।।

**न तस्य त्रिदशा देवा नासुरा न च पन्नगाः ।**
**तेभ्यो गन्धर्वराजेभ्यस्त्राणं कुर्युरसंशयम् ।।**

**या मे न दद्यादुच्छिष्टं न च पादौ प्रधावयेत् ।**
**प्रियेरंस्तेन वासेन गन्धर्वाः पतयो मम ।।**

दासीभावेन स्वस्या अपि कदाचिदुच्छिष्टं दद्यात्, स्वकरेण पादप्रक्षालनं वा कारयेदिति शङ्कया आह – **या मे न दद्यादुच्छिष्टम्** इत्यादि । प्रियैः प्रियोक्तिभिः रत्नेन वस्त्रैर्वा दत्तैरपि या मे उच्छिष्टं न दद्यादित्यादिपादत्रयस्य योजना । मम पतयो गन्धर्वाः तस्यास्त्राणं **कुर्युरिति** पूर्वक्रियाध्याहारेण योजना ।।

**एवमाचारसम्पन्ना एवं देवपरायणा ।**
**वाक् च त्वमसि भूतानां सावित्रीव द्विजन्मनाम् ।।**

**वाक् च त्वमसि भूतानाम्** इत्यत्र वक्तुं स्तोतुं योग्या **वाक्** ।।

## त्रयोदशोऽध्यायः

**भीमसेनोऽपि मांसानि भक्ष्याणि विविधानि च ।**
**अतिसृष्टानि मत्स्येन विक्रीणन्निव भ्रातृषु ।।**

**अतिसृष्टानि मत्स्येन** इत्यत्र **अतिसृष्टानि** दत्तानि **विक्रिणन्निव** विक्रयं कुर्वन्निव । तूष्णीं दाने अन्योन्यसम्बन्धं ज्ञास्यतीति भीत्या विक्रयव्याजेन प्रयच्छतीति भावः ।।

**सिंहस्कन्धकटिग्रीवाः स्ववदाता मनस्विनः ।**
**असकृल्लब्धलज्जास्ते रङ्गे पार्थिवसन्निधौ ।।**

**असकृल्लब्धलज्जा** इत्यत्र अन्योन्यकलहे पराभवेन लब्धलज्जाः ।।

**अणुत्वमपरे चैव वाञ्छन्ति प्रतिविह्वलाः ।**
**गां प्रवेष्टुमथेच्छन्ति खं गन्तुमिव चोत्थिताः ।।**

**अणुत्वमपर** इत्यत्र **अणुत्वं** बालकत्वम् ।।

**युधिष्ठिरकृतं ज्ञात्वा श्रिया तव विशाम्पते ।**
**महादेवस्य भक्त्या च तं मल्लं पातयाम्यहम् ।।**

**महादेवस्य भक्त्या च** इत्यत्र महांश्चासौ देवश्च **महादेवो** नारायणः । वैष्णवत्वगूहनार्थमिदं वचनम् ।।

**नोद्यमानस्तदा भीमो दुःखेनेवाकरोन्मतिम् ।**
**न हि शक्नोमि विवृतं प्रत्याख्यातुं नराधिपम् ।।**

**न हि शक्नोमि विवृतम्** इत्यत्र विशेषेण अभ्यासादिना वृतं **विवृतम्** ।।

**ततः स पुरुषव्याघ्रः शार्दूलशिथिलं चरन् ।**
**प्रविवेश महारङ्गं विराटमभिहर्षयन् ।।**

**शार्दूलशिथिलं चरन्** इत्यत्र शार्दूलवत् शिथिलं यथा भवति तथा **चरन्** शनैः शनैश्चरन्नित्यर्थः ।।

**बद्धकक्षोऽथ कौन्तेयस्ततः संहर्षयञ्जनम् ।**
**ततस्तु वृत्रसङ्काशं भीमो मल्लं समाह्वयत् ।।**

**बद्धकक्षोऽथ कौन्तेय** इत्यत्र 'दूष्या कक्ष्या वरत्रा स्यात्' इत्यभिधानात् **बद्धकक्ष्यः** बद्धोदरबन्धनः ।।

**भ्रामयित्वा शतगुणं गतसत्वमचेतनम् ।**
**प्रत्यपिङ्क्षन्महाबाहुः मल्लं भुवि वृकोदरः ।।**

**प्रत्यपिङ्क्षन्महाबाहुः** इत्यत्र **प्रत्यपिङ्क्षत्** पिष्टं कृतवान् । 'पिषि पिष्टौ' इति धातोः लुङि रूपम् ।।

## चतुर्दशोऽध्यायः

**त्वमेवमाचारपरीतदर्शना नान्यस्त्रियं सम्परिचर्तुमर्हसि ।**
**किं राजवेश्मन्यसितायतेक्षणे करोषि केशान् स्वयमेव भामिनी ।।**

**नान्यस्त्रियं सम्परिचर्तुमर्हसि** इत्यत्र **परिचर्तुं** परिचरितुम् ।।

**प्रभूतरत्नोपहितं सुभाजनं परैहि चाद्यैव ममोत्तमं गृहम् ।**
**प्रासादमालाग्रविशालतोरणं कुबेरपर्जन्यनिवेशनोपमम् ।।**

**परैहि चाद्य** इत्यत्र **परा** उत्तमा, द्रौपद्या विशेषणम् । **एहि** ।।

**अयं तु राजा परसैन्यवारणः श्यालप्रियत्वान्मम चाद्य भामिनि ।**
**करिष्यते काममयं यथेष्टतो ह्यनीककर्णाग्रधरोऽस्मि तस्य वै ।।**

**श्यालप्रियत्वान्मम च** इत्यत्र 'श्यालाः स्युर्भ्रातरः पत्न्या' इत्यमरः । **श्यालः** पत्नीभ्राता । 'सूतपुत्रावमन्यसे' इति वक्ष्यमाणत्वात् सुदेष्णाकीचकयोः क्षत्रस्त्रीसूतस्त्रीजातत्वेऽपि पित्रैक्यात् पत्नीभ्रातृत्वम् ।

**अप्राप्य तु त्वामहमद्य शोभने श्रियं समृद्धामिव पापमाचरन् ।**
**व्रजेयमिन्द्रस्य निवेशनं शुभे त्वया विसृष्टो ह्यपुनर्भवाङ्गतिम् ।।**

**पापमाचरन्** इत्यत्र **पापं** गले रज्जुबन्धादिना आत्महत्याम् ।।

**प्रियांश्च दारान् ससुतान् कुलं धनं यशश्च कीर्तिं ह्यथवाऽपि जीवितम् ।**
**त्यक्ष्यामि सर्वं सुकृतं तु यत्कृतं प्रिये त्वदर्थं तु हि जीवितं मम ।।**

**त्वदर्थं तु हि जीवितं मम** इत्यत्र त्वदर्थं त्यक्ष्यामि । मम जीवितं तु, त्वदर्थं हीति उभयत्राप्यावृत्त्या योजना ।।

**अवारयन्तं बलशोकमुद्धतं समुद्रवेगोपममातुरं भृशम् ।**
**भजस्व मामद्य शुभेन चेतसा यथा न शुष्ये न पताम्यचेतनः ।।**

**अवारयन्तं** वारयितुमशक्तम् ।।

## पञ्चदशोऽध्यायः

**ते त्वां निहन्युः कुपिताः साध्वलं मा व्यनीनशः ।**
**अभव्यरूपैः पुरुषैः पन्थानं गन्तुमिच्छसि ।।**

**अभव्यरूपैः पुरुषैः** इत्यत्र तैः यः पन्थाः गतः तं पन्थानम् ।। १७ ।।

**जुह्वन् जपन् वा प्रपतन् गिरेस्तटे**
**हुताशनादित्यगतिं गतोऽपि वा ।**
**भार्याभिमत्तः पुरुषो महात्मा**
**न जातु मुच्येत कथश्चनाहतः ।।**

**भार्याभिमत्तः पुरुष** इत्यत्र **भार्याभिमत्तः** परभार्याभिमत्तः **महात्मा** महात्माऽपि ।।

**मा तारकाणामधिपं यथा शिशुः-**
**र्न मां बलात् प्राप्स्यसि दुर्लभां सतीम् ।**
**दाराभिमर्शी पुरुषो महात्मनां**
**गत्वाऽपि देवान् शरणं न विन्दति ।।**

**मा तारकाणाम्** इत्यत्र माशब्दस्य प्राप्स्यसीत्यनेन सम्बन्धः ।।

**त्वं कालपाशं प्रतिमुच्य कण्ठे**
**प्रवेष्टुमिच्छस्युत दुष्प्रवेशनम् ।**
**हुताशनं प्रज्वलितं महावने**
**निदाघमध्याह्न इवातुरः स्वयम् ।।**

**उत दुष्प्रवेशनम्** इत्यत्र दुःखकरं प्रवेशनं यस्य तदन्धं तमः ।।

## षोडशोऽध्यायः

**स प्रोवाच सुदुःखार्तो भगिनीं निश्वसन्निव ।**
**अव्यक्तमृदुना नाम्ना शुष्यमाणः पुनः पुनः ।।**

**स प्रोवाच सुदुःखार्तो भगिनीं निश्वसन्निव । अव्यक्तमृदुना नाम्ना शुष्यमाणः पुनः पुनः** इत्यत्र अव्यक्तमृदुना नाम्ना सुदेष्णां सम्बोध्य प्रोवाचेति सम्बन्धः ।।

**मा गमिष्यामि वै कृच्छ्रां गतिं परमदुर्गमाम् ।**
**बलिनस्ते रुजं कुर्युः कुलस्य च धनस्य च।।**

**मा गमिष्यसि वै** इत्यत्र **मा** एतद्गोष्ठी तव माऽस्तु इति योजना ।।

**वशमेष्यति सैरन्ध्री मन्मथेनाभिपीडिता ।**
**सा त्वं दृष्ट्वा ब्रूहि चैनां मम चेज्जीवितं प्रियम् ।।**

**सा त्वं दृष्ट्वा** इत्यत्र सा त्वं **जीवितं** मम जीवितं इच्छिसि यदीच्छसि तर्हि दृष्ट्वा अवसरं **दृष्ट्वा** एनां मयि नयस्वेति योजना ।।

**त्वत्कृते विनशिष्यन्ति भ्रातरः सुहृदश्च मे ।**
**किं नु शक्यं मया कर्तुं यत्त्वमेवमभीप्सितः ।।**

**यत्त्वमेवमभीप्सित** इत्यत्र **यत्** यस्मात् त्वम् **एवमभीप्सितः** एवम् अभीप्सितं यस्य स तथोक्तोऽसि ।।

**एतत् तु मे दुःखतरं येनाहं भ्रातृसौहृदात् ।**
**विदितार्था भविष्यामि तुष्टो भव कुलक्षये ।।**

**विदितार्था भविष्यामि** इत्यत्र विदितः अर्थः मदुक्तवाक्यस्य अर्थः यया सा तथोक्ता ।।

**कृते चान्ने सुरायां च प्रेषयिष्यासि मे पुनः ।**
**तामहं प्रषयिष्यामि मध्वन्नार्थं तवान्तिकम् ।।**

**मध्वन्नार्थं तव** इत्यत्र **मधु** मद्यम् ।।

**ततः सम्प्रेषितामेनां विजने निरवग्रहाम् ।**
**सान्त्वयेथा यथान्यायं यदि साम सहिष्यति ।।**

**विजने निरवग्रहाम्** इत्यत्र **अव** अधःकृत्य **ग्रहः** ग्रहणं बलात्कारेण ग्रहः तद्रहितां **निरवग्रहाम्** ।।

**सम्पाकायां सुरायां तु कृते चान्ने सुसंस्कृते ।**
**कीचकः पुनरागम्य सुदेष्णां वाक्यमब्रवीत् ।।**

**सम्पाकायां सुरायाम्** इत्यत्र सम्यक् पाको यस्याः **सम्पाका** ।।

**स मामिह गतां दृष्ट्वा व्यवस्यति निराकृतः ।**
**कथं नु वै तत्र गतां मर्षयेन्मामबान्धवाम् ।।**

**व्यवस्यति निराकृत** इत्यत्र **निराकृतः** मया निराकृतोऽपि **व्यवस्यति** बलाद्ग्रहीतुं निश्चयं करिष्यति ।।

**भाजनं प्रददौ चास्यै सापिधानं हिरण्मयम् ।**
**या सुरा जातमन्था च तामानय सुरामिति ।।**

**सापिधानंहिरण्मयम्**इत्यत्र 'अपिधानतिरोधानपिधानाच्छादनानि च' इत्यमरः।अपिधानेन सहितं **सापिधानम्** । **या सुरा** इत्यत्र **जातमन्था** सारोद्धाराय जातमथना ।।

## सप्तदशोऽध्यायः

**तदस्यास्तनुमध्यायाः सर्वं सूर्योऽवबुद्धवान् ।**
**अन्तर्हितं ततस्तस्या रक्षो रक्षार्थमादिशत् ।।**

**अन्तर्हितं तत** इत्यत्र अन्तर्हितं रक्षः ।।

**तां मृगीमिव वित्रस्तां दृष्ट्वा कृष्णां समागताम् ।**
**उत्पपातासनात् तूर्णं नावं लब्ध्वेव पारगः ।।**

**नावं लब्ध्वेव पारग** इत्यत्र **पारगः** पारं गन्तुमिच्छन् ।।

**स मूढः कीचकस्तत्र प्राप्तां राजीवलोचनाम् ।**
**अब्रवीद् द्रौपदीं दृष्ट्वा दुरात्मा ह्यात्मसम्मतेः ।।**

**दुरात्मा ह्यात्मसम्मतेः** इत्यत्र **आत्मसम्मतेः** तादर्थ्ये षष्ठी । आत्मसम्मत्यर्थम् ।।

**नाहं शक्या त्वया स्प्रष्टुं श्वपचेनेव ब्राह्मणी ।**
**मा गमिष्यसि दुर्बुद्धे गतिं दुर्गान्तरान्तराम् ।।**

**मा गमिष्यसि दुर्बुद्धे** इत्यत्र **मा** इदं वचनं माऽस्तु । **दुर्गान्तरान्तरां** दुःखेन गन्तुं योग्यमन्धं तमः तस्य अन्तरन्तर्विद्यमानम् ।।

**यत्र गच्छन्ति बहवः परदाराभिमर्शकाः ।**
**नराः सम्भिन्नमर्यादाः कीटपुञ्जगुहाशयाः ।।**

**कीटपुञ्जगुहाशया** इत्यत्र कीटपुञ्जवत् वनगुहायां निलीनाः ।।

**न युक्तं सूतपुत्रेण कीचकेति च तेऽवदन् ।**
**किमियं वध्यते बाला कृपणा चाप्यबान्धवा ।।**

**न युक्तं सूतपुत्रेण** इत्यत्र सूतपुत्रेण कृतं न युक्तम् ।।

**तां दृष्ट्वा भीमसेनस्य क्रोधादस्तमवर्तत ।**
**धूमोच्छ्वासः समभवन्नेत्रे चोच्छ्रितपक्ष्मणी ।।**

**क्रोधादस्तमवर्तत** इत्यत्र कीचकस्य **अस्तम्** अस्तमयो यथा भवति तथा अस्तं धूमोच्छ्वासः अवर्ततेति योजना ।।

**न क्रोधकालसमयः जहि मा चापलं कुरु ।**
**अपूर्णोऽयं विपक्षो नो नेदं बलवतां बहु ।।**

**जहि मा चापलं कुरु** इत्यत्र **जहि** क्रोधं जहि । **विपक्षः** अस्मदज्ञातवासस्य विरुद्धः पक्षः पञ्चदशदिनात्मकः अपूर्णः । अतश्चापलं मा कुर्विति हृदयम् । ध्वनिस्तु **अपूर्णः** सम्पूर्णशाखारहितः अयं तरुः **विपक्षः** विगतः पक्षः पाकसहायो यस्मात् स तथोक्तः ।।

**अथाङ्गुष्ठेनेव गृह्णन् अङ्गुष्ठं तत्र धर्मराट् ।**
**प्रबोधनभयाद्राज्ञो भीमं तं प्रत्यषेधयत् ।।**

**अथाङ्गुष्ठेनेव गृह्णन्** इत्यत्र **अङ्गुष्ठेन** स्वहस्ताङ्गुष्ठेन भीमस्याङ्गुष्ठं गृह्णन्निव **प्रत्यषेधयत्** नखरेखया निषेधं कृतवान् ।।

**आकारं परिरक्षन्ती प्रतिज्ञां धर्मसंहिताम् ।**
**दह्यमानेव रौद्रेण चक्षुषा द्रुपदात्मजा ।।**

**आकारं परिरक्षन्ती** इत्यत्र **धर्मसंहितां प्रतिज्ञाम्** आसंवत्सरमेवं स्थास्याम इति भर्तॄणां स्वस्याश्च प्रतिज्ञां **आकारं** प्रतिज्ञानुगुणाकारं च परिरक्षन्ती ।।

**प्रजारक्षणशीलानां राज्ञां ह्यमिततेजसाम् ।**
**कार्याऽनुपालनं नित्यं धर्मे सत्ये प्रतिष्ठताम् ।।**

**धर्मे सत्ये प्रतिष्ठताम्** इत्यत्र **धर्मे सत्ये** च **प्र** प्रकर्षेण तिष्ठतां राज्ञामिति सम्बन्धः ।।

**धर्माधर्मौ पुनर्द्वन्द्वं विनियुक्तमथापि वै ।**
**क्रियाणामक्रियाणां च प्रवणे पुण्यपापयोः ।।**

**विनियुक्तमथापि वै । क्रियाणामक्रियाणां च प्रवणे पुण्यपापयोः** इत्यत्र क्रियाणामक्रियाणां च फलभूतयोः पुण्यपापयोः **प्रवणे** नम्रे असक्ते सज्जीवदुर्जीववृन्दे अथापि पूर्वोक्तद्वन्द्वद्वयादनन्तरमपि विनियुक्तं द्वन्द्व वै इति योजना ।।

**अस्मिन् सुनीते दुर्नीते सभ्यास्ते कर्मजं फलम् ।**
**कल्याणकारी कल्याणं पापकारी च पापकम् ।।**

**सभ्यास्ते कर्मजं फलम्** इत्यत्र कर्मजं फलं प्राप्नुवन्ति ।।

**तेन गच्छति निस्सङ्गं स्वर्गाय नरकाय वा ।**
**सुकृतं दुष्कृतं वाऽपि कृत्वा मोहेन मानवः ।**
**पश्चात्तापेन तप्येत सुबुद्धो मरणं गतः ।।**

**निस्सङ्गं** एकाकितयेत्यर्थः । **सुबुद्धो मरणं गत** इत्यत्र सुबुद्धः प्रबुद्धः **पश्चात्** पापकरणानन्तरमेव तापेन तप्येत । अप्रबुद्धस्तु मरणं गतः **पश्चात्** मरणानन्तरं तापेन तप्येत ।।

**यथोक्तं देवराजेन ब्रह्मणा परमेष्ठिना ।**
**तथा त्वमपि राजेन्द्र कार्याकार्यस्थितो भव ।।**

**कार्याकार्यस्थितो भव** इत्यत्र कार्ये अकार्ये या स्थितिर्ब्रह्मणा उक्ता तद्वान् भव ।।

## अष्टादशोऽध्यायः

**धर्मज्ञा व्यवहाराणां कीचकं कृतकिल्बिषम् ।**
**पुनः प्रोवाच राजानं स्मरन्ती धर्ममुत्तमम् ।।**

**कीचकं कृतकिल्बिषम्** इत्यत्र स्मरन्तीत्युत्तरेणान्वयः ।।

**मयाऽपि शक्यं किं कर्तुं विराटे धर्मदूषणे ।**
**मा मर्षयति यः पश्यन् वध्यमानमनागसम् ।।**

**मा मर्षयति** इत्यत्र **मा** माम् ।।

**केचित् कृष्णां प्रशंसन्ति केचिन्निन्दन्ति कीचकम् ।**
**केचिन्निन्दन्ति राजानं केचिद्देवीं च तां नराः ।।**

**केचिद्देवीं च तां नरा** इत्यत्र **तां** सुदेष्णाम् ।।

**सा विनिःश्वस्य सुश्रोणी भूमावन्तर्मुखी स्थिता ।**
**तूष्णीमासीत् तदा दृष्ट्वा विवक्षन्तं युधिष्ठिरम् ।।**

**विवक्षन्तं युधिष्ठिरम्** इत्यत्र दृष्ट्वेति योग्यपदाध्याहारः ।।

**मन्ये न कालः क्रोधस्य पश्यन्ति पतयस्तव ।**
**तेन त्वां नाभिधावन्ति गन्धर्वाः सूर्यवर्चसः ।।**

**मन्ये न काल** इत्यत्र गन्धर्वाणां प्रायशो दिवा सञ्चाराभावादिति बाह्यो भावः । इदानीमेव कीचकशिक्षायां अज्ञातवासभङ्गः स्यात् । अतो रात्रावेव भविष्यतीत्यान्तरो भावः ।।

**भर्तुर्भीरु भयादन्या न क्रुध्यन्ति कदाचन ।**
**बहुभिश्च परिक्लेशैरवज्ञाताश्च शत्रुभिः ।।**

**भर्तुर्भीरु भयादन्या** इत्यत्र **अन्याः** सपत्न्यः न क्रुद्ध्यन्ति ।।

**न क्रुद्धे प्रतियायाद्वै पतींस्ते वृत्रहा अपि ।**
**तेन त्वां नाभिधावन्ति गन्धर्वाः कामरूपिणः ।।**

**न क्रुद्धे प्रतियायात्** इत्यत्र **क्रुद्धे** कीचके ।।

**सत्यमुक्तं त्वया विद्वन् शैलूषं विद्धि मां पुनः ।**
**शैलूषकस्य तस्याहं येषां ज्येष्ठोऽक्षकोविदः ।।**

**शैलूषं विद्धि मां पुनः** इत्यत्र 'बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि' इत्यभिधानात् **शैलूषो** बिल्वः । बिल्वफलस्य सज्जनायोग्यत्वात् अस्मत्तोऽपि तव योग्यं फलमिदानीं नास्तीति सूचनाय शैलूषोपमा ।।

**निर्मनुष्यमिमं लोकं कुर्यात् क्रुद्धो निशामिमाम् ।**
**न स सङ्क्रुध्यते तावद्गन्धर्वः कामरूपधृत् ।।**

**कुर्यात् क्रुद्धो निशामिमाम्** इत्यत्र निशां यावत् पश्यति तावत् सङ्क्रुध्यत इति सम्बन्धः ।। ७३ ।।

**एकस्तु कुरुते पापं कालपाशवशं गतः ।**
**नीचेनात्मापराधेन कुलं तेन विनश्यति ।।**

**कुलं तेन विनश्यति** इत्यत्र तेन आत्मापराधेन तस्य कुलं विनश्यति ।।

## एकोनविंशोऽध्यायः

**प्रादुर्भूतक्षणा रात्रौ विहाय शयनं स्वकम् ।**
**दुःखेन महता युक्ता मानसेन मनस्विनी ।।**

**प्रादुर्भूतक्षणा** इत्यत्र रात्रौ **प्रादुर्भूतक्षणा** लब्धावसरा ।।

**वृषेन्द्रमिव माहेयी वने वृद्धा त्रिहायनी ।**
**मृगराजं यथा दृप्तं मण्डनी वननिर्झरे ।**
**सम्प्रसुप्तं तथा सिंहं मृगराजवधूरिव ।।**

**वृषेन्द्रमिव माहेयी** इत्यत्र 'माहेयी सौरभेयी गौः' इत्यभिधानात् वने वृद्धा अभिवृद्धा **त्रिहायनी** सुरभिकुमारी गौर्वृषेन्द्रमिवेति योजना । **मृगराजं यथा दृप्तम्** इत्यत्र **मृगराजं** श्रेष्ठमृगं **मण्डनी** वनं मण्डयती मृगवधूरिव ।।

**यथा शची देवराजं रुद्राणी शङ्करं यथा ।**
**ब्रह्माणमिव सावित्री यथा षष्ठी गुहं तथा ।।**

**यथा षष्ठी गुहं तथा** इत्यत्र **षष्ठी** षष्ठ्यामागता देवसेना **गुहं** षण्मुखम् ।।

**दिशाङ्गजसमाकारं गजं गजवधूरिव ।**
**भीमं प्राबोधयत् कान्ता लक्ष्मीर्दामोदरं यथा ।।**

**दिशाङ्गजसमाकारम्** इत्यत्र **दिशाङ्गजो** दिग्गजः तस्य समः आकारो यस्य तं भीमम् ।।

**तस्मिञ्जीवति पापिष्ठे सेनावाहे मम द्विषि ।**
**तत्कर्म कृतवत्यद्य कथं निद्रां निषेवसे ।।**

**तत्कर्म कृतवति** इत्यत्र **तत्** मम पादघातनाख्यं कर्म **कृतवति** तस्मिन् कीचके ।।

**सुखसुप्तश्च तं शब्दं निशम्य स वृकोदरः ।**
**संवेजितः कुरुश्रेष्ठस्तोत्रैरिव महागजः ।।**

**संवेजितः कुरुश्रेष्ठ** इत्यत्र **तोत्रैः** कशाविशेषैः **संवेजितः** कुपित इत्यर्थः ।।

**सुखं वा यदि वा दुःखं शुभं वा यदि वाऽशुभम् ।**
**यद्यप्यसुकृतं कर्म कृतमित्यवधारय ।।**

**यद्यप्यसुकृतं कर्म** इत्यत्र सुष्ठु कर्तुमशक्यं **असुकृतम्** ।।

**गोशीर्षकं पद्मकं च हरिं श्यामं च चन्दनम् ।**
**नित्यं पिङ्क्षे विराटस्य त्वयि जीवति पाण्डव ।।**

**गोशीर्षकं पद्मकं च** इत्यत्र 'तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम्' इत्यभिधानात् **गोशीर्षकं** चन्दनं **पद्मकं** पद्मवद्रागोपेतं **हरिं** हरिद्वर्णं **पिङ्क्षे** पेषणं कुर्वे ।।

**साऽहं बहूनि दुःखानि गणयामि कृते न ते ।।**

**गणयामि कृते न त** इत्यत्र ते कृते बहूनि दुःखानि न गणयामि तानि श्रुत्वा तव क्लेशो भविष्यतीति न गणयामीति भावः ।।

**[१]स्वरूपं तव कौन्तेय मा स्म गच्छे युधिष्ठिरम् ।**
**निरुद्योगं निरामर्षं निर्वीर्यमरिमर्दन ।।**

**स्वरूपं तव कौन्तेय** इत्यत्र **सु** सुष्ठु **अरूपं** अननुरूपं **गच्छ** अनुगच्छ ।।

**तथैव च शिरस्तस्य निपात्य धरणीतले ।**
**गमने पुरुषव्याघ्र मर्द पादेन पाण्डव ।।**

**गमने पुरुषव्याघ्र** इत्यत्र गम्यते सर्वैर्जनैरत्रेति **गमने धरणीतले** राजमार्ग इत्यर्थः ।।

**शापितोऽसि मम प्राणैः सुकृतेनार्जुनस्य च ।**
**युधिष्ठिरस्य पादाभ्यां यमयोर्जीवितेन च ।।**

**शापितोऽसि मम प्राणैः** इत्यत्र **शापः** शपथः तं प्राप्तोऽसि ।।

**को हि राज्यं परित्यज्य सपुत्रपशुबान्धवम् ।**
**प्रव्रजेन महारण्यमजनैः परिवारितम् ।।**

**अजनैः परिवारितम्** इत्यत्र जनैः परिवारितं न भवतीत्यजनैःपरिवारितमित्यलुक्समासः अरण्यमिति सम्बन्धः ।।

**यदि निष्कसहस्राणि यद्वाऽन्यत् सारवद्धनम् ।**
**सायं प्रातरदेविष्यदपि संवत्सरायुतम् ।।**

**सारवद्धनम्** इत्यत्र दिने दिने पणाय अभविष्यदिति योग्यक्रियाध्याहारः ।।

**रुग्मं हिरण्यं वासांसि यानं युग्यमजाविकम् ।**
**अश्वाश्वतरसङ्घाश्च न जातु क्षयमाव्रजेत् ।।**

---

१. शरणं भव कौन्तेय । (इति पा.)

**न जातु क्षयमाव्रजेत्** इत्यत्र तर्ह्यदेविष्यदिति पूर्वेणान्वयः ।।

**सहस्रं वालखिल्यानां सहस्रमुदवासिनाम् ।**
**सहस्रमग्निकुण्डानां सहस्रं वायुभोजिनाम् ।।**

**सहस्रमग्निकुण्डानाम्** इत्यत्र अग्नेः कुण्डानि परितो येषां ते **अग्निकुण्डाः** पञ्चाग्निमध्ये तपस्तपन्तः ।।

**अनवद्यं महाप्राज्ञं जीवितार्थेन संवृतम् ।**
**दृष्ट्वा कस्य न दुःखं स्याद्धर्मराजं युधिष्ठिरम् ।।**

**जीवितार्थेन संवृतम्** इत्यत्र **जीवितार्थेन** जीवनाख्यप्रयोजनेन **संवृतं** यतिवेषेण च्छन्नम् ।।

**तत उत्थाय कैकेयी सर्वास्ताः प्रत्यभाषत ।**
**प्रेक्ष्य मामनवद्याङ्गीं कश्मलाभिहतामिव ।।**

**तत उत्थाय** इत्यत्र **ततः** युद्धदर्शनार्थं उपवष्टमश्वात् **सर्वास्ताः** युद्धदर्शनार्थमागताः सर्वा नारीः ।।

**यस्मिन्नस्त्राणि दिव्यानि समस्तानि महात्मनि ।**
**आधारः सर्वविद्यानां स धारयति कुण्डले ।।**

**स धारयति कुण्डले** इत्यत्र **कुण्डले** ताटङ्कौ ।।

**विभूषितमलङ्कारैः कुण्डलैः परिपातुकैः ।**
**कम्बुपाणिमथायान्तं दृष्ट्वा सीदति मे मनः ।।**

**कम्बुपाणिमथायान्तम्** इत्यत्र **कुम्बुपाणिं** शङ्खमयकङ्कणालङ्कृतपाणिम् ।।

**मात्स्यं पार्थं च गायन्तं विराटं समुपस्थितम् ।**
**पश्यामि तूर्यमध्यस्थं दृष्ट्वा मुह्यति मे मनः ।।**

**मात्स्यं पार्थं च** इत्यत्र मास्त्यं विराटं गायन्तं पार्थम् ।।

**नूनमार्या न जानाति कृच्छ्रं प्राप्तं धनञ्जयम् ।**
**अजातशत्रुं कौरव्यं मग्नं द्युर्द्यूतदेविनम् ।।**

**कृच्छ्रं प्राप्तं धनञ्जयम्** इत्यत्र **कृच्छ्रं** शिखण्डिनीरूपादिसङ्कटम् ।।

## विंशोऽध्यायः

**स्थितं पूर्वं जलं यत्र न पुनस्तत्र तिष्ठति ।**
**इति पर्यायमिच्छन्ती प्रतीच्छाम्युदयं पुनः ।।**

**स्थितं पूर्वं जलम्** इत्यत्र **यत्र** तटाके **पूर्वं** पूर्वसंवत्सरे जलं स्थितं, **पुनः** संवत्सरान्तरे वर्षाकाले तत्रैव तिष्ठति, **इति** अनेन प्रकारेण **पर्यायं** पुनः सम्पदागमनं इच्छन्ती अहं **उदयं** भवतामभ्युदयं प्रतीच्छामीति योजना । यद्वा निम्नस्थलात् कराभ्यां परितो निक्षिप्तं जलं शनैर्निम्नस्थले यथा गच्छति इति अनेन प्रकारेण । शेषं पूर्ववत् ।।

**दैवेन किल यस्यार्थः सुनीतोऽपि विपद्यते ।**
**दैवस्यैवागमे यत्नः तेन कार्यो विजानता ।।**

**दैवस्यैवागमे यत्न** इत्यत्र **आगमे** स्वानुकूल्येनागमने ।।

**न दैविकमिदं मन्ये यत्र पार्थो धनञ्जयः ।**
**भीमधन्वा महारङ्गे चास्ते शान्त इवानलः।।**

**न दैविकमिदम्** इत्यत्र **दैविकं** केवलदेवनिमित्तं न । किन्तु धर्मराजस्य दुर्द्यूताख्यदुष्प्रयत्नकृतं च भवति ।।

**किं नु वक्ष्यति सम्राण्मां वर्णकः सुकरो न वा ।**
**नान्यपिष्टं विराटस्य चन्दनं किल रोचते ।।**

**वर्णकः सुकरो न वा** इत्यत्र **वर्णकः** कुङ्कुमादिभिः चन्दने कृतवर्णविशेषो वर्णकः ।।

## एकविंशोऽध्यायः

**धिगस्तु मे बाहुमूलं गाण्डीवं फल्गुनस्य च ।**
**यत्ते रक्तौ पराभूत्वा पाणी कृतकिणाविमौ ।।**

**यत्ते रक्तौ** इत्यत्र **यद्यस्मात्** ते रक्तौ उभौ पाणी **पराभूत्वा** परसेवकौ भूत्वा कृतकिणौ, तस्माद्बाहुमूलं धिगिति पूर्वेणान्वयः ।।

**तत्र मे कारणं भाति कौन्तेयो यत्प्रतीक्षते ।**
**तदहं तस्य विज्ञाय स्थितोऽस्मि तव शासने ।।**

**तदहं तस्य** इत्यत्र तव संज्ञया कृतं **शासनं** धर्मराजस्य शासनम्, तस्य कृते **अस्मि** तूष्णीमस्मि ।।

**धनञ्जयं च पाञ्चालि माद्रीपुत्रौ च भ्रातरौ ।**
**वृत्तैषां च मतिः कृष्णे युधिष्ठिरमगर्हयम् ।।**

**वृत्तैषां च** इत्यत्र **एषाम्** अर्जुनादीनां मतिः **वृत्ता** धर्मराजमनुसृत्य प्रवृत्ता । अहं तु धर्मराजमगर्हयम् ।।

**ह्रीमान् वाक्यमहीनार्थं ब्रुवन् राजा युधिष्ठिरः ।**
**सर्वानन्वनयद्भ्रतॄन् मुनेर्धौम्यस्य शासतः ।।**

**मुनेर्धौम्यस्य शासत** इत्यत्र धौम्यस्य मुनेः शासतः सत इति योजना ।।

**अनुनीतेषु दारेषु त्वनुनीता त्वमप्यसि ।**
**मा धर्मं जहि सुश्रोणि क्रोधं जहि महामते ।।**

**अनुनीतेषु दारेषु** इत्यत्र भर्त्रनुकूलतया नीतिमत्सु **दारेषु** अरुन्धत्यादिषु त्वमपि अनुनीता भर्त्रनुकूलनीतिमती असि ।।

**सुकन्या नाम शर्यातिर्भार्गवं च्यवनं वने ।**
**वल्मीकभूतं शाम्यन्तं अन्वपद्यत भामिनी ।।**

**वल्मीकभूतम्** इत्यत्र शाम्यन् शमवान् तम् ।।

**गुरुभर्तृकृतं ज्ञात्वा राज्ञा मूर्ध्नि स्थिता भवेः ।।**

**गुरुभर्तृकृतम्** इत्यत्र गुरुभिः भर्तृभिः कृतं कार्यं ज्ञात्वा तदनुसारेण चरित्वा चेति योग्यपदाध्याहारः ।।

**तस्या विदित्वा तं भावं स्वयं चावृतदर्शनः ।**
**कीचकोऽपि च दुष्टात्मा पुनः प्रार्थयते च माम् ।।**

**आवृतदर्शनः** आवृतं दर्शनं ज्ञानं यस्य सः मिथ्याज्ञानीत्यर्थः ।।

**शतं सहस्रमपि वा गन्धर्वणामहं रणे ।**
**समागतं हनिष्यामि त्वं भीरु कुरु मे क्षणम् ।।**

**कुरु मे क्षणम्** इत्यत्र **क्षणम्** अवसरम् ।।

## द्वाविंशोऽध्यायः

**तत्रास्ति शयनं भीरु दृढाङ्गं सुप्रतिष्ठितम् ।**
**तत्रैनं दर्शयिष्यामि पूर्वप्रेतान् पितामहान् ।।**

**दृढाङ्गं सुप्रतिष्ठितम्** इत्यत्र दृढानि पट्टमञ्चपादाद्यङ्गानि यस्य तत् दृढाङ्गम् ।।

**अह्नाय तव सुश्रेणि शतं निष्कं ददामि ते ।**
**दासीशतं च ते दद्यां दासानामपि चापरम् ।।**

**अह्नाय तव** इत्यत्र **अह्नाय** शीघ्रम् ।।

**निशायां तत्र गच्छेथा गन्धर्वास्तन्न जानते ।**
**तत्र दोषः परिहृतो भविष्यति न संशयः ।।**

**तत्र दोषः परिहृत** इत्यत्र **दोषः** परस्त्रीगमनाख्यदोषः ।।

**कालेन नियतं बद्धः कामेन च बलात्कृतः ।**
**शून्यं स नर्तनागारमागमिष्यति कीचकः ।।**

**कालेन नियतम्** इत्यत्र **कालेन** मृत्युना ॥

**गर्वितः सूतपुत्रोऽसौ गन्धर्वानवमन्यते ।**
**स त्वं प्रहरतां श्रेष्ठ नालं नाग इवारुजः ॥**

**नाग इवारुज** इत्यत्र **अरुजः** नाशय ॥

**मया हतांश्चेन्मात्स्यांस्तु धार्तराष्ट्रो विबुध्यति ।**
**दुर्योधनं ततो हत्वा सानुबन्धं सबान्धवम् ॥**

**मया हतांश्चेत्** इत्यत्र मुख्यान् **मात्स्यान्** मात्स्यामात्यादीन् ॥

**नाहं चोपासितुं शक्तः कुन्तीपुत्रं युदिष्ठिरम् ।**
**कामं सत्यमुपासीत कुन्तीपुत्रो युधिष्ठिरः ।**
**काममन्ये ह्युपासन्तु विनीता धर्मचारिणः ॥**

**नाहं चोपासितुं शक्त** इत्यत्र तव कीचकान्महाव्यसने समागते सति धर्मराजसेवां कृत्वा न तिष्ठामीति भावः । **अन्ये** अर्जुनादयः ॥

**कथं वधमुपानीयां राजाऽयं मत्कृते प्रभो ।**
**निशि गूढं तथा भीम कीचकं तं निपातय ॥**

**कथं वधमुपानीयाम्** इत्यत्र **राजा** धर्मराजः स्वकृतप्रतिज्ञाया अपरिपूर्तेः मरिष्यतीति भावः ॥

## त्रयोविंशोऽध्यायः

**तथा भद्रे करिष्यामि यथा त्वं भीरु भाषसे ।**
**अदृश्यमानस्तस्याहं तमिस्रायां सकुण्डलम् ॥**

**तमिस्रायां सकुण्डलम्** इत्यत्र 'तमिस्रा तामसी रात्रिः' इत्यभिधानात् **तमिस्रायां** रात्रौ ॥

**उपरंस्यसि नारीषु शीघ्रं त्वं स्प्रष्टुमर्हसि ।**
**ईदृशस्तु त्वया स्पर्शः स्पृष्टपूर्वो न कर्हिचित् ।।**

**उपरंस्यसि नारीषु** इत्यत्र **उपरंस्यसि** उपरमं समाप्तिं करिष्यसि ।।

**आस्ये पाणी च पादौ च शिरो ग्रीवां सकुण्डलम् ।**
**काये निवेशयामास मृदित्वाऽङ्गानि सर्वशः ।।**

**काये निवेशयामास** इत्यत्र गुदरन्ध्रद्वारा प्रवेशयामास ।।

## चतुर्विंशोऽध्यायः

**अनार्यसत्वेन महार्यसत्वा**
**गताऽसुना सा प्ररुरोद कृष्णा ।**
**विलम्बमाना विवशा हि दुष्टै-**
**स्तमेव पर्यङ्कतले शुभाङ्गी ।।**

**ह्रियमाणाऽथ सुश्रोणी सूतपुत्रैरनिन्दिता ।**
**प्राक्रोशन् नाथमिच्छन्ती कृष्णा नाथवती सती ।।**

**तमेव पर्यङ्कतले शुभाङ्गी** इत्यत्र **तमेव** कीचकहन्तारमेव **प्राक्रोश**दित्युत्तरेणान्वयः ।।

## पञ्चविंशोऽध्यायः

**ततस्ता नर्तनागाराद्विनिष्क्रम्य सभाजनाः ।**
**कन्या ददृशुरायान्तीं कृष्णां क्लिष्टामनागसाम् ।।**

**विनिष्क्रम्य सभाजना** इत्यत्र 'आनन्दनसभाजने' इत्यमरः । **सभाजनाः** आनन्दयन्त्यः ।।

**बृहन्नलाऽपि कल्याणि दुःखमाप्नोत्यनन्तकम् ।**
**तिर्यग्योनिगतां बाले न चैनामवबुध्यते ।।**

**तिर्यग्योनिगतां बाले** इत्यत्र **तिर्यग्योनिः** शिखण्डिनीवेषः ।।

**त्वं चापि तरुणी सुभ्रू रूपेणाप्रतिमा भुवि ।**
**चित्तानि च नृणां भद्रे रक्तानि स्पर्शजे सुखे ।।**

**रक्तानि स्पर्शजे सुख** इत्यत्र **रक्तानि** अनुरक्तानि ।।

## षड्विंशोऽध्यायः

**कीचकस्य वधं घोरं सानुजस्य विशाम्पते ।**
**आत्माहितं चिन्तयित्वा व्यस्मयन्त पृथग्जनाः ।।**

**आत्माहितं चिन्तयित्वा** इत्यत्र **आत्मना** परमात्मना **आहितम्** अर्पितं दैवाधीनमित्यर्थः ।।

**साम्परायापरिक्लिष्टो बलवान् दुर्जयो रणे ।**
**आसीत् प्रहर्ता शत्रूणां दारदर्शी च दुर्मतिः ।।**

**साम्परायापरिक्लिष्ट** इत्यत्र 'मृधमास्कन्दनं सङ्ख्यं समीकं साम्परायकम्' इत्यमरः । **साम्पराये** युद्धे **अपरिक्लिष्टः** क्लेशरहितः ।।

**वर्त्मन्यन्विच्छमानास्तु रथानां रथिसत्तम ।**
**कञ्चित्कालं मनुष्येन्द्र सूताननुगता वयम् ।।**

**सूताननुगता वयम्** इत्यत्र **सूतान्** पाण्डवसारथीन् ।।

**प्रियमेतदुपश्रुत्य शत्रूणां च पराभवम् ।**
**कृतकृत्यश्च कौरव्य विधिवत् स्यादनन्तरम् ।।**

**विधिवत् स्यादनन्तरम्** इत्यत्र **विधिवत्** विधिर्यथा करोति तद्वत् ।।

## सप्तविंशोऽध्यायः

**न हि तेषां गतिर्वासः प्रवृत्तिर्वोपलभ्यते ।**
**प्रत्यागता वा गूढास्ते परमूर्तगुणा इव ।।**

**प्रत्यागता वा गूढास्त** इत्यत्र **प्रति** जनान् प्रति **गताः** अवगताः ज्ञाता इत्यर्थः । **परमूर्तगुणाः** मूर्तेभ्यः पराः **परमूर्ताः** गगनादयः तेषां गुणा **इवेति** गूढत्वे नाशाभावे च उपमा ।।

## अष्टविंशोऽध्यायः

**त्वं वै तन्मनसा श्रेयो बुध्यस्यहितमात्मनः ।**
**नियतं सर्वमित्रेषु बलवत्स्वबलेषु च ।।**

**त्वं वै तन्मनसा श्रेय** इत्यत्र **तत्** अस्मदादिभिरुक्तं श्रेयः त्वं आत्मनः अहितं बुध्यसीति योजना ।।

**सारं वल्गुफलं ज्ञात्वा मध्यस्थं चापि भारत ।**
**स्वराष्ट्रपरराष्ट्रेषु ज्ञातव्यं बलमात्मनः ।।**

**सारं वल्गुफलम्** इत्यत्र **सारम्** उत्तमम्, **वल्गु** अल्पं फलं यस्य तत् अधमम् **मध्यस्थं** मध्यममिति बलस्य विशेषणम् ।।

**अप्रहृष्टं प्रहृष्टं वा सन्दधाम तथा परैः ।**
**साम्ना दानेन भेदेन दण्डेन बलिकर्मणा ।।**

**न्यायेनानन्यबलिनः बलेनानन्यदुर्हृदः ।**
**सान्त्वयित्वा च मित्राणि बलं चाभाष्यतां सुखम् ।**
**स्वकोशबलसंवृद्धः सम्यक् सिद्धिमवाप्स्यसि ।।**

**योत्स्यसे चापि बलिभिररिभिः प्रत्युपस्थितैः ।**
**अन्यैस्त्वं पाण्डवैर्वाऽपि हीनस्वबलवाहनैः ।।**

**दण्डेन बलिकर्मणा** इत्यत्र **बलिकर्मणा** बलेः पूजायाः योग्यसेवारूपकर्मणा **अनन्यबलिनः** असदृशबलिष्ठान्न्यायेनसान्त्वयित्वा, **अनन्यदुर्हृदः** असदृशदुःखितान् अतिदुर्बलानिति तावत् बलेन सान्त्वयित्वेति योजना । **मित्राणि** स्वमित्रजनान् प्रति । **हीनस्वबलवाहनैः** इत्येतस्य पाण्डवैरिति सम्बन्धः ।।

**श्रुतः कृष्णानिमित्तेन भीमसेनेन कीचकः ।**
**गन्धर्वव्यपदेशेन हतो निशि महाबलः ।।**

**श्रुतः कृष्णानिमित्तेन** इत्यत्र **श्रुतः** प्रसिद्धः ।।

**तस्मादनन्तरेणापि लाभोऽस्माकं भविष्यति ।**
**कोशवृद्धिरिहास्माकं शत्रूणां निधनं भवेत् ।।**

**तस्मादनन्तरेणापि** इत्यत्र **तस्मात्** गोग्रहणात् **अनन्तरेण** युद्धायागतपाण्डवदर्शनेन ।।

**कथं सुयोधनं गच्छेद्युधिष्ठिरभृतः पुरा ।**
**एतच्चापि वदत्येष मात्स्यः परिभवान्मयि ।।**

**कथं सुयोधनं गच्छेत्** इत्यत्र **युधिष्ठिरभृतः** युधिष्ठिरः भृतो येन स विराटः **पुरा** युद्धात् पूर्वं **गच्छेत्** शरणं गच्छेत् ।।

**आदत्ते गाः सुशर्माऽथ कृष्णपक्षस्य चाष्टमी ।।**

**कृष्णपक्षस्य चाष्टमी** इत्यत्र यदेति योग्यपदाध्याहारः ।।

## त्रिंशोऽध्यायः

**पृथक्काञ्चनसन्नाहान् रथेष्वश्वानयोजयन् ।**
**उत्कृत्य पाशान् मौर्वीणां शूराश्चापेष्वयोजयन् ।।**

**उत्कृत्य पाशान् मौर्वीणाम्** इत्यत्र उत्कृत्य ऊर्ध्वं कृत्वा ।।

## एकत्रिंशोऽध्यायः

**भीमश्च मत्तमातङ्गास्तोमराङ्कुशचोदिताः ।**
**ग्रामणीयैः समारूढाः कुशलैर्हस्तिसादिभिः ।।**

**ग्रामणीयैः समारूढा** इत्यत्र **ग्रामणीः** ग्रामाधिपतिर्विराटः तत्सम्बन्धिभिः ।।

**भीमस्तु भीमसङ्काशो रथात् प्रस्कन्द्य वीर्यवान् ।**
**उत्प्लुत्य गत्वा वेगेन तद्रथे विनिपत्य च ।।**

**भीमस्तु भीमसङ्काश** इत्यत्र **भीमसङ्काशः** 'व्योमकेशो भवो भीम' इत्यमरः । रुद्रसदृशः ।।

**स्वबाहुबलसम्पन्ना ह्रीनिषेधा यतव्रताः ।**
**विराटस्य महात्मानः परिक्लेशविनाशनाः ।।**

**ह्रीनिषेधा यतव्रता** इत्यत्र **ह्रीनिषेधाः** परसेनायाः ह्रियं लज्जां निषेधन्तीति तथोक्ताः पाण्डवाः ।।

## द्वात्रिंशोऽध्यायः

**त्वत्कृते ह्यद्य पश्यामि राज्यमात्मानमेव च ।**
**यतश्च जातः संरम्भः स च शत्रुर्वशं गतः ।।**

**यतश्च जात** इत्यत्र **यतः** सुशर्मणः सकाशात् ।।

**प्रतीपस्ते पुनस्तुष्टः प्रविशाद्य परन्तप ।**
**दारैः पुत्रैश्च संश्लिष्टः सा हि प्रीतिर्ममातुला ।।**

**प्रतीपस्ते पुनः** इत्यत्र ते **प्रतीपः** वैरी सुशर्मा दारैः पुत्रैश्च संश्लिष्टः पुनः **प्रवेक्ष्यति** स्वगृहप्रवेशं करिष्यति । एतत् इदमेव वरं वृण इत्युत्तरेण सम्बन्धः ।।

**नगरं प्राविशंस्ते वै सूर्ये सम्यगथोदिते ।**
**विराटनगरं प्राप्य शीघ्रं नान्दीमघोषयन् ।।**

**नान्दीमघोषयन्** इत्यत्र **नान्दीं** सन्तोषसम्बन्धिनीं वार्ताम् ।।

## त्रयस्त्रिंशोऽध्यायः

**गोपालानां तु घोषेषु हन्यतां वै महारथैः ।**
**आरावः सुमहानासीत् सम्प्रहारे भयङ्करे ।।**

**हन्यतां वै महारथैः** इत्यत्र **हन्यतां** हन्यमानानाम् ।।

**दृष्ट्वा भूमिञ्जयं नाम पुत्रं मात्स्यस्य मानिनम् ।**
**तस्मै च सर्वमाचष्ट राष्ट्रस्य पशुकर्षणम् ।।**

**दृष्ट्वा भूमिञ्जयं नाम** इत्यत्र भूमिञ्जय इत्यप्युत्तरकुमारस्य नाम ।।

**पशोपधानां ज्यातन्त्रीं प्राप्य दण्डसमस्वराम् ।**
**शरवर्णां धनुर्वीणां शत्रुमध्ये प्रवादय ।।**

**प्राप्य दण्डसमस्वराम्** इत्यत्र **दण्डसमस्वराम्** अन्तर्दण्डहतघण्टासमस्वराम् ।।

**श्वेताः काञ्चनसन्नाहा रथे युज्यन्तु ते हयाः ।**
**ध्वजं च सिंहसौवर्णमुच्छ्रयस्व तथा विभो ।।**

**ध्वजं च सिंहसौवर्णम्** इत्यत्र सौवर्णः सिंहो यस्य स सिंहसौवर्णः तम् ।।

## चतुस्त्रिंशोऽध्यायः

**श्रुत्वा तदर्जुनो वाक्यमुत्तरेण प्रभाषितम् ।**
**स नीतसमये काले प्रियां भार्यामभाषत ।।**

**स नीतसमये काल** इत्यत्र **नीतः** समाप्तः **समयः** अज्ञातवाससङ्केतो यस्मिन् तस्मिन् काले ।।

**अमर्षयन्ती सैरन्ध्री तद्दुःखं कमललोचना ।**
**उत्तरामाह वचनं सखीमध्ये विलासिनीम् ।।**

**अमर्षयन्ती सैरन्ध्री** इत्यत्र **अमर्षयन्ती** अथापि यतिवेषेण स्थितमसहमाना ।।

**गवां मुमुक्ष** इत्यत्र **गवां** गाः **मुमुक्षे** मोचयितुमिच्छे ।।

## पञ्चत्रिंशोऽध्यायः

**सा वज्रमुक्तामणिहेमकुण्डला मृदुक्रमा भ्रातृनियोगचोदिता ।**
**प्रदक्षिणावर्ततनुः शिखण्डिनी पद्मानना पद्मदलायताक्षी ।।**

**प्रदक्षिणावर्ततनुः शिखण्डिनी** इत्यत्र **शिखण्डं** ऊर्ध्वं निबद्धशिखा तद्वती **शिखण्डिनी** ।।

**इत्येवमुक्त्वा नृपसूनुसत्तम-**
**स्तदा स्मयित्वाऽर्जुनमभ्यनन्दयत् ।**
**अत्रोत्तरः पारशवं शताक्षिमत्**
**सुवर्णचित्रं परिगृह्य भानुमत् ।।**

**अत्रोत्तरःपारशवम्** इत्यत्र 'तीक्ष्णमयःपारशवम्' इत्यभिधानात् **पारशवं** तीक्ष्णायोमयं वर्म ।।

**बृहन्नलायै प्रददौ स्वयं तदा**
**विराटपुत्रः परवीरघातिने ।**
**तदाज्ञया मात्स्यसुतस्य वीर्यवान्**
**सा कर्तुकामेव समाददे तदा ।।**

**सा कर्तुकामेव** इत्यत्र **कर्तुकामेव** सारथ्यं कर्तुकामेव ।।

**स तत्र नर्मसंयुक्तमकरोत् पाण्डवो बहु ।**
**उत्तरायाः प्रमुखतः सर्वं जानन्नरिन्दमः ।।**

**स तत्र नर्मसंयुक्तम्** इत्यत्र 'अग्राम्यः परिहासोक्तिर्नर्म इत्यभिधीयत' इति वचनात् परिहाससंयुक्तम् ।।

**तमाददानं प्रमदा जहासिरे ह्यधोमुखं वीरवरोऽभ्यधारयत् ।**
**ततः शिरः खं निकृतः सपत्नहा ह्यधोमुखं कवचमथाभ्यकर्षत ।।**

**ततः शिरःखं निकृत** इत्यत्र **शिरः** शिरसि शिरस्थानीये ऊर्ध्वभागे **खं** शिरःप्रवेशार्हं छिद्ररूपमाकाशं यस्य तत् कवचम्, **निकृतः** कापट्यवान् ।।

**एवं प्रकारणि बहूनि कुर्वति तस्मिन् कुमार्यः प्रमदा जहासिरे ।**
**तथापि कुर्वन्तममित्रकर्शनं नैवोत्तरः पर्यभवद्धनञ्जयम् ।।**

**पर्यभवद्धनञ्जयम्** इत्यत्र **पर्यभवत्** परिभवमकरोत् ।।

**तं राजपुत्रः समनह्यत् स्वयं जाम्बूनदान्तेन शुभेन वर्मणा ।**
**कृशानुतप्तप्रतिमेन भास्वता जाज्वल्यमानेन सहस्रराजिना ।।**

**समनह्यत्** सम्यक् बद्धमकारयत् । 'नह बन्धन' इति धातुः । **सहस्रराजिना** रत्नसहस्रराजिना ।।

**अथास्य शीघ्रं प्रसमीक्ष्य योजयद्रथे हयान् काञ्चनजालसंवृतान् ।**
**सुवर्णजालान्तरयोक्त्रभूषणं सिंहं च सौवर्णमुपाश्रयद्रथे ।।**

**सुवर्णजालान्तरयोक्त्रभूषणम्** इत्यत्र सुवर्णजालस्य **अन्तरे** मध्ये मध्ये **योक्त्रं** योगः स एव भूषणं यस्य तम् ।।

**पालितार्थानि सूक्ष्माणि रत्नानि विविधानि च ।**
**विजित्य सङ्ग्रामगतान् भीष्मद्रोणमुखान् कुरून् ।।**

**पालितार्थानि सूक्ष्माणि** इत्यत्र पालितः अर्थो द्रव्यं यैस्तानि बहुद्रव्याणीत्यर्थः ।।

**अथोत्तरो वर्म महाप्रभावं सुवर्णवैडूर्यपरिष्कृतं शुभम् ।**
**आमुच्य वीरः प्रययौ रथोत्तमं धनञ्जयं सारथिनं प्रगृह्य ।।**

**अथोत्तरो वर्म** इत्यत्र वर्म **प्रगृह्य** उपादाय इत्युत्तरपदावृत्त्या योजना ।।

## षट्त्रिंशोऽध्यायः

**ददृशे पार्थिवो रेणुर्जनितस्तेन सर्पता ।**
**दृष्टिप्रणाशो भूतानां दिवस्पृक् कुरुसत्तम ।।**

**ददृशे पार्थिवो रेणुः** इत्यत्र **पार्थिवः** पृथिवीसम्बन्धी रेणुः **तेन** सैन्येन ।।

**मध्यमामिषगृध्राणां कुरूणामाततायिनाम् ।**
**नेष्यामि त्वां महाबाहो मा त्वं हि विमना भव ।।**

**मध्यमामिषगृध्राणाम्** इत्यत्र **आमिषगृध्राणां** 'गृधु आकाङ्क्षायाम्' इति धातोः शत्रूणामामिषाकाङ्क्षिणाम् ।।

**तं च शीघ्रं प्रधावन्तं सम्प्रेक्ष्य कुरवोऽब्रुवन् ।**
**कोऽयं धावत्यसङ्गेन पूर्वं मुक्त्वा रथोत्तमम् ।।**

**कोऽयं धावत्यसङ्गेन** इत्यत्र **असङ्गेन** युद्धादिप्रसङ्गाभावेन ।।

**क एष वेषसञ्छन्नो भस्मनेव हुताशनः ।**
**किञ्चित् तस्य यथा पुंसः किञ्चिदस्य यथा स्त्रियः ।।**

**किञ्चित् तस्य यथा पुंस** इत्यत्र **किञ्चित्** शीलम् ।।

**इत्येवं सैनिकाः प्राहुर्द्रोणस्तानिदमब्रवीत् ।**
**आचार्यः कुरुपाण्डूनां मतौ शुक्राङ्गिरोपमः ।।**

**मतौ शुक्राङ्गिरोपम** इत्यत्र **मतौ** बुद्धौ ।।

**किं विचारणया कार्यमेतेनानुसृतेन वा ।**
**धावन्तमनुधावंश्च निर्भयो भयविप्लुतम् ।।**

**किं विचारणया कार्यम्** इत्यत्र एतेन पूर्वं गतेनोत्तरकुमारेण, **अनु** अनन्तरं **सृतेन** गतेन सारथिना च निमित्तेन विचारणया किं कार्यम् । पलायमानयोर्विचारः किमिति भावः ।।

**नटे वै तच्छिरोग्रीवं तौ बाहू परिघोपमौ ।**
**तत्तदेवास्य विक्रान्तं नायमन्यो धनञ्जयात् ।।**

**नटे वैतच्छिरोग्रीवम्** इत्यत्र शिरश्च ग्रीवा च **शिरोग्रीवम्** एतस्य शिरोग्रीवं **नटे वा** नटे यथा तथाऽस्ति ।।

**अमरेष्विव देवेन्द्रो मनुष्येषु धनञ्जयः ।**
**एकोऽस्माननुयात्येष अन्यो लोके धनञ्जयात् ।।**

**एकोऽस्माननुयात्येष** इत्यत्र पृष्ठतो गन्तुरर्जुनस्य धैर्योद्रेकं दृष्ट्वा, तस्य शिखां गृहीत्वा युद्धायायास्यतीति भावेन अस्माननुयातीत्युक्तम् ।।

**उत्तरः सारथिं कृत्वा निर्यातो नगराद्बहिः ।**
**स नो मनो ध्वजान् दृष्ट्वा भीत एष पलायति ।।**

**स नो मनो ध्वजान्** इत्यत्र नः **मनः** धैर्ययुक्तं मनः ध्वजांश्च दृष्ट्वेति सम्बन्धः ।।

**इति स्म कुरवः सर्वे विमृशन्तः पृथक् पृथक् ।**
**न च व्यवसितुं वीरा अर्जुनं शक्नुवन्ति ते ।।**

**इति स्म** वक्ष्यमाणप्रकारेण ।।

**दृढवेधी महासत्त्वः शक्रतुल्यपराक्रमः ।**
**अद्यागच्छति चेद्योद्धुं सर्वं संशयितं बलम् ।।**

**संशयितं बलम्** इत्यत्र **संशयितं** संशयोपेतम् ।।

**यदि नोत्सहसे योद्धुं शत्रुभिः शत्रुकर्शन ।**
**सङ्गच्छामि पदान्यस्य न स भीतः पलायति ।।**

**सङ्गच्छामि पदान्यस्य** इत्यत्र यः स उत्तरः भीतः पलायति अस्य पदानि न **सङ्गच्छामि** नानुसरामि ।।

सः अर्जुनः उत्तरं सारथिं कृत्वा स च स्वयं च समायाताम् ।।

## सप्तत्रिंशोऽध्यायः

**तानवेक्ष्य महोत्पातानुत्पातानपि चाद्भुतान् ।**
**गुरुः शस्त्रभृतां श्रेष्ठो भारद्वाजोऽभ्यभाषत ।।**

**तानवेक्ष्य महोत्पातान्** इत्यत्र **महोत्पातान्** उल्कापातादीन्, **उत्पातान्** गोमायुरोद-नादीन् । **तान्** स्वसैनिकान् ।।।

**शिवाश्च विनदन्त्येता दीप्तायां दिशि दक्षिणाः ।**
**हयाश्चाश्रूणि मुञ्चन्ति ध्वजाः कम्पन्त्यकम्पिताः ।।**

**दक्षिणाः** दक्षिणदिक्स्थाः ।।

**यादृशान्यत्र दृश्यन्ते रूपाणि विविधानि च ।**
**एते भयं च तिष्ठन्ति युद्धं स्यात् समुपस्थितम् ।।**

**एते भयं च तिष्ठन्ति** इत्यत्र **एते** उत्पाताः भयं यथा भवति तथा ।।

**नदीज लङ्केशवनारिकेतुः नगाह्वयो नाम नगारिसूनुः ।**
**गत्या सुरेशः क्वचिदङ्गनेव गुरुर्बभाषे वचनं तदानीम् ।।**

**नदीजेति** श्लोके हे **नदीज** भीष्म अयं **लङ्केशवनारिकेतुः लङ्केशवनारि**र्हनूमान् स एव केतौ यस्य, **नगः** अर्जुनवृक्षः तद्वदाह्वयो यस्य, **नगानां** पर्वतानां **अरिः** इन्द्रः तस्य सूनुः **गत्या** पादविन्यासेन सुरेश इव, **क्वचित्** शिरोभागे अङ्गनेव वेणीधारणादिना ।।

**अतीतं चक्रमस्माकं विषयान्तरमागताः ।**
**अतीतः समयश्चोक्त अस्माभिर्यः सभातले ।**
**न भयं शत्रुतः कार्यं शङ्कां त्यज नरर्षभ ।।**

**अतीतंचक्रमस्माकम्**इत्यत्र**अस्माकंचक्रं**अस्मत्सम्बन्धिचक्रं चक्रवत्पुनर्वनवासाय परिवर्तनम् । **समयः** त्रयोदशवर्षात्मकः कालः । **विषयान्तरं** अज्ञातवासात् अन्यं ज्ञातवासाख्यविषयम् । **शत्रुतः** पाण्डवशत्रोर्दुर्योधनात् **भयं** ज्ञाते सति पुनर्वनवासो भविष्यतीति भीतिः ।।

**सदा भवान् फल्गुनस्य गुणानस्मासु कत्थसे ।**
**न चार्जुनः किलापूर्णे मम दुर्योधनस्य च ।।**

दुर्योधनस्य मम च अपूर्णे न किलेति योजना ।।

**तस्मिन् वदति तां वाचं धार्तराष्ट्रे परन्तपे ।**
**भीष्मो द्रोणः कृपो द्रौणिः पौरुषं तदपूजयन् ।।**

**भीष्मो द्रोण** इत्यत्र भीष्मो द्रोण इति द्वौ कृपो द्रौणिश्चेति द्वौ **पौरुषं** दुर्योधनपराक्रमम् **अवमर्शताम्** अवामर्शतां विचारितवन्तौ ।।

**अनेन धनुषा चेह सोढुं शक्ष्यन्ति मे बलम् ।**
**नालं भारं गुरुं भेत्तुं कुञ्जरं वा प्रमर्दितुम् ।।**

**अनेन धनुषा** इत्यत्र **अनेन** त्वदीयेन, **गुरुं भारं** सेनाभारम् ।।

**नौभिः काममहं कर्तुं कर्म वैजयिकं त्विह ।**
**अतिसूक्ष्माणि ह्रस्वानि सर्वाणि च मृदूनि च ।।**

**नैभिः कामम्** इत्यत्र एभिः त्वदीयैरायुधैः ।।

**तस्माद्भूमिञ्जयारुह्य शमीमेतां पलाशिनीम् ।**
**अस्माभिः पाण्डुपुत्राणां धनूंषि निहितान्युत ।।**

**पलाशिनीं** पत्रवतीम् । **अस्माभिः पाण्डुपुत्राणाम्** इत्यत्र निविष्टानीति अन्तर्णीतणिजन्तेन वक्ष्यमाणपदेन सम्बन्धः ।।

**तादृशान्येव सर्वाणि दर्शनानि दृढानि च ।**
**युधिष्ठिरस्य भीमस्य बीभत्सोर्यमयोस्तथा ।।**

दृश्यन्त इति व्युत्पत्त्या **दर्शनानि** दर्शनीयानि ।।

**गुरु चैतत्** इत्यत्र गुरु च गुर्वपि एतत् अस्त्रानयनाख्यं कार्यम् ।।

## अष्टत्रिंशोऽध्यायः

**कस्येमे क्षुरनाराचा सहस्रं लोमवाहिनः ।**
**प्रत्यक्तास्तीक्ष्णतुण्डाग्रा उपासङ्गे हिरण्मये ।।**

**कस्येम** इत्यत्र **लोमवाहिनः** पुङ्खे पत्ररूपपक्षिरोमधराः **प्रत्यक्ताः** प्रत्येकं तैलार्द्राः, **उपासङ्गे** 'तूणोपासङ्गतूणीरनिषङ्गाम्' इत्यमरः । तूणीरे ।।

**वैयाघ्रकोशः कस्यायं दिव्यशाखो महाप्रभः ।**
**कस्यायमसिरावासः पञ्चशार्दूललक्षणाः ।।**

**दिव्यशाखो महाप्रभ** इत्यत्र **दिव्यशाखः** दिव्यशाखारूपः इति दण्डस्य विशेषणम् । **कस्यायमसिरावास** इत्यत्र **आवासः** आ समन्तात् कोशे आच्छादनं यस्य सोऽयमावासः ॥

**प्रमाणवर्णयुक्तश्च कस्य खड्गो महानयम् ।**
**एतेन प्रतिविद्धः सञ्जीवेत् कश्च न कुञ्जरः ॥**

**जीवेत् कश्च न कुञ्जर** इत्यत्र **कश्च** कोऽपि ॥

## एकोनचत्वारिंशोऽध्यायः

**येन देवासुरान् पार्थः सर्वान् विषहते रणे ।**
**एतद्वर्षसहस्रं तु ब्रह्मा पूर्वमधारयत् ॥**

**ततोऽनन्तरमेवाथ प्रजापतिरधारयत् ।**

**प्रजापतिरधारयत्** इत्यत्र **प्रजापतिः** स्वायम्भुवमनुः ॥

**विपत्त्रा भीमसेनस्य गिरीणामपि दारणाः ।**
**सुप्रभाः सुमहाकायास्तीक्ष्णाग्राः सुतरां दृढाः ॥**

**विपत्त्रा भीमसेनस्य** इत्यत्र विपदस्त्रायन्तीति **विपत्त्राः** ॥

**यस्त्वयं पार्षते कोशे निक्षिप्तो रुचिरत्सरुः ।**
**नकुलस्यैव निस्त्रिंसो वैश्वानरसमप्रभः ॥**

**रुचिरत्सरुः** इत्यत्र 'त्सरुः खड्गादिमुष्टौ स्यात्' इत्यभिधानात् **त्सरुः** खड्गस्य आदौ मुष्टिग्रहणप्रदेशो यस्य ॥

**भेदतो ह्यर्जुनस्तूर्णं कथयामास तत्त्वतः ।**
**आयुधानि कलापानि निस्त्रिंशांश्चातुलप्रभान् ॥**

**आयुधानि कलापानि** इत्यत्र 'कलापो भूषणे बर्हे तूणीरे संहतेऽपि च' इत्यमरः । **कलापानि** तूणीरान् ॥

## चत्वारिंशोऽध्यायः

**वैराटे शृणु तानि त्वं यानि पूर्वं श्रुतानि ते ।**
**ईशानो विदधे देवः त्रिदिवस्येश्वरो दिवः ।।**

**त्रिदिवस्येश्वरो दिव** इत्यत्र 'द्यो दिवौ द्वे स्त्रियामभ्रम्' इत्यभिधानात् **दिवः** अन्तरिक्ष-लोकस्य ।।

**न कुर्यां कर्म बीभत्सं युध्यमानः कदाचन ।**
**तेन देवमनुष्येषु बीभत्सुरिति मां विदुः ।।**

**न कुर्यां कर्म बीभत्सम्** इत्यत्र बीभत्सामेव बीभत्सयतीति कृत्वा बीभत्सुरिति भावः ।।

**उत्तराभ्यां तु पूर्वाभ्यां फल्गुनीभ्यामहं दिवा ।**
**जातो हिमवतः पृष्ठे तेन मां फल्गुनं विदुः ।।**

**उत्तराभ्यां तु पूर्वाभ्याम्** इत्यत्र **फल्गुनीभ्यां** फल्गुनीशब्दवाच्याभ्यां, **पूर्वाभ्यां** पूर्वानक्षत्रस्य द्वितारा‌भ्यां, **उत्तराभ्यां** उत्तरानक्षत्रस्य द्वितारा‌भ्यां चेति क्रमेण अह्नि निशि च युक्ता या पौर्णमासी सा फल्गुनमासस्य आरम्भदिनम्, तत्रोत्पन्नत्वात् फल्गुन इति भावः ।।

**यो ममाङ्गे व्रणं कुर्याद्भ्रातुर्ज्येष्ठस्य पश्यतः ।**
**युधिष्ठिरस्य रुधिरं दर्शयेद्वा कदाचन ।।**

**यो ममाङ्गे व्रणं कुर्यात्** इत्यत्र **मम अङ्गे**, मम **पश्यतः** सतः **ज्येष्ठस्याङ्गे** च यः व्रणं कुर्यादिति सम्बन्धः ।।

**यास्यामि तैरहं सर्वैर्न मे तेभ्यः पराभवः ।**
**तेन देवमनुष्येषु जिष्णुर्नामास्मि विश्रुतः ।।**

**यास्यामि तैः** इत्यत्र **यास्यामि** युद्धार्थं यास्यामि ।।

**मूर्च्छया पतितं भूमौ सागरोपमसत्तमौ ।**
**दृष्ट्वा तौ वरदौ देवौ सञ्ज्ञां लब्ध्वोत्थितः पुनः ॥**

**सागरोपमसत्तमौ** इत्यत्र सागरोपमौ च तौ सत्तमौ च सागरोपमसत्तमौ ॥

## एकचत्वारिंशोऽध्यायः

**एतान् सर्वानुपासङ्गान् क्षिप्रं नध्नीहि वै रथे ।**
**एकं चाहर निस्त्रिंशं जातरूपपरिष्कृतम् ॥**

**क्षिप्रं नध्नीहि वै रथ** इत्यत्र 'नह बन्धने' इति धातोः सन्नद्धं कुरु ॥

**सङ्क्लृप्तगाढपरिखं बाहुप्राकारतोरणम् ।**
**त्रिदण्डतूणसम्बाधं नैकध्वजसमाकुलम् ॥**

**सङ्क्लृप्तगाढपरिखम्** इत्यत्र सम्यक्कल्पः कल्पना यस्याः सा सङ्क्लृप्ता गाढपरिखा यस्मिन्, **त्रिदण्डतूणसम्बाधं** त्रिमानदण्डप्रमाणाः त्रिदण्डाः तूणाः स्थूणाः तेषां सम्बाधा यस्मिन् ॥

**ज्याक्षेपनिनदारावं नेमीनिनददुन्दुभि ।**
**शरजालवितानाढ्यमाक्ष्वेडितमहास्वनम् ।**
**नगरं ते मया गुप्तं रथोपस्थं भविष्यति ॥**

**ज्याक्षेपनिनदारावं** ज्याक्षेपनिनदैः सह आरावो वादित्रध्वनिर्यस्मिन्, **नेमीनिनददुन्दुभि** नेमीनिनदैः सह दुन्दुभयो यस्मिन् शरैः **जालै**र्गवाक्षैः वितानैः उल्लोचैश्च आढ्यम् ॥

**नास्मि क्लीबो महाबाहो परवान् धर्मसंयुतः ।**
**उर्वशीशापसम्भूतं क्लैब्यं समुपसंस्थितम् ॥**

**परवान्** नाथवान् ॥

**यस्य यातो न पश्यन्ति भूमौ क्षिप्तं पदम्पदम् ।**
**दक्षिणां यो धुरं वोढा सुग्रीवेण समो हयः ॥**

**यस्य यातो न पश्यन्ति** इत्यत्र **यातः** गच्छतः **यस्य** अश्वस्य ॥

**ततो विमुच्य बाहुभ्यां शङ्खचूडानि पाण्डवः ।**
**तौ च दुन्दुभिसन्नादौ प्रतिबध्य तलावुभौ ॥**

**ततो विमुच्य बाहुभ्याम्** इत्यत्र **विमुच्य** शवाकारचर्मणो विमुच्य ॥

## द्विचत्वारिंशोऽध्यायः

**शङ्खशब्देन पार्थस्य मुखेनाश्वासयन् क्षितौ ।**
**उत्तरश्चापि सन्त्रस्थो रथोपस्थ उपाविशत् ॥**

**मुखेनाश्वासयन् क्षितौ** इत्यत्र **आश्वासयन्** दीर्घश्वासममुञ्चन् । क्षितौ विद्यमानाः प्राणिनः ॥

## त्रिचत्वारिंशोऽध्यायः

**औत्पातिकमिदं राजन् निमित्तं भवतीह नः ।**
**न हि पश्यामि विजयं सैन्येऽस्माकं परन्तप ॥**

**निमित्तं** दुर्निमित्तम् ॥

**यथा मेघस्य निनदो गम्भीरः स्थूणमायतः ।**
**श्रूयते रथनिर्घोषो नायमन्यो धनञ्जयात् ॥**

**गम्भीरः स्थूणमायत** इत्यत्र स्थूणा यथा भवति तथा **स्थूणम्** ॥

## चतुश्चत्वारिंशोऽध्यायः

**ते वा गाव नयिष्यन्ति यदि वा स्युः पराजिताः ।**
**अस्मान् वाऽप्यतिसन्धाय कुर्युर्मात्स्येन सङ्गतिम् ॥**

**ते वा गाव** इत्यत्र **गावः** गाः ॥

**अथवा तानुपादाय मात्स्यो जानपदैः सह ।**
**सर्वथा सेनया सार्धमस्मानेष युयुत्सति ॥**

**अथवा तान्** इत्यत्र **तान्** पाण्डवान् ॥

**अनाच्छिन्ने पुनर्द्रव्येऽस्माकं शक्रेण वज्रिणा ।**
**यमेन वाऽपि सङ्ग्रामे को हास्तिनपुरं व्रजेत् ॥**

**अनाच्छिन्ने पुनः** इत्यत्र **द्रव्ये** गोधनाख्यद्रव्ये **अनाच्छिन्ने** अस्माभिरनपहृते सति ॥

**आचार्यं पृष्ठतः कृत्वा तथा नीतिर्विधीयताम् ।**
**जानामि विजितं तेषामतस्त्रासयतीव नः ॥**

**तथा नीतिः** इत्यत्र **तथा** अश्वपदातीनां प्राणसंशयमरणादिकं यथा न भवति तथा । **जानामि विजितम्** इत्यत्र **तेषां** भीष्मादीनां **विजितं** विजयम् ॥

**बहून्याश्चर्यरूपाणि कुर्वते जनसंसदि ।**
**इष्टास्ते चापसन्धाने पण्डितास्तत्र शोभनाः ॥**

**इष्टास्त** इत्यत्र **चापसन्धाने** धनुर्विद्याभ्यासकाले ॥

## पञ्चचत्वारिंशोऽध्यायः

**बर्हिबर्हिणराजानां बर्हिणां बर्हिणामिव ।**
**पततां पततां घोषः पततां पततामिव ॥**

**बर्हिबर्हिणराजानां बर्हिणां बर्हिणामिव । पततां पततां घोषः पततां पततामिव** इत्यत्र **बर्हिणां बर्हिणामिव** एकैकस्य पृष्ठे पृष्ठे गच्छतां मयूराणां मयूराणामिव **बर्हिबर्हिणराजानां** बर्हिणः मयूरस्य बर्हिणैः शरमूले पत्ररूपेण स्थितमयूरपत्रैः **राजानां** राजमानानां, 'राजृ दीप्तौ' इति धातोः कर्त्रर्थे पचाद्यचि कृते राजानामिति शब्दनिष्पत्तिर्भवति । **पततां पततां** एकैकस्य शरस्य पृष्ठे पृष्ठे निपततां शराणां घोषः

**पततां** मूलरूपेण निपतमानानां पततां 'पतत् पतङ्गः पतगः पत्री' इत्यभिधानात् पक्षिणां घोष इव अखिलैः श्रूयतामिति योग्यक्रियया सम्बन्धः । यद्वा **बर्हिणां** बर्हवताम् उत्पन्नबर्हाणामित्यर्थः । **बर्हिणां** मयूराणामिव **बर्हिबर्हिणराजानां पततां पततां** पुङ्खानुपुङ्खतया क्षणे क्षणे पततां **पततां** शराणां घोषः पततां पक्षिणां घोष इव **पततां** दिशि दिशि निपततां इति लोडन्तक्रिया । सर्वैः श्रूयतामिति भावः ॥

## षट्चत्वारिंशोऽध्यायः

**सदैव तव राधेय युद्धे क्रूरतरा मतिः ।**
**नार्थानां प्रकृतिं वेत्सि नानुबन्धमवेक्षसे ॥**

**नानुबन्धमवेक्षस** इत्यत्र **अनुबन्धं** युद्धायानुकूलकालसम्बन्धम् ॥

**नया हि बहवः सन्ति शास्त्राण्याश्रित्य चिन्तिताः ।**
**तेषां युद्धं सुपापिष्ठं वेदयन्ति पुराविदः ॥**

**नया हि बहव** इत्यत्र **नयाः** सामदानाद्याः सन्धिविग्रहाद्याश्च । **तेषां** नयानां मध्ये **युद्धं** प्रागेव युद्धं **सुपापिष्ठं** अतिशयेन पापम् ॥

**भारं हि रथकारस्य न व्यवस्यन्ति पण्डिताः ।**
**परिचिन्त्य तु पार्थेन सन्निपातो न नः क्षमः ॥**

**भारं हि रथकारस्य** इत्यत्र 'तक्षा तु वर्धकिस्त्वष्टा रथकारश्च काष्ठकृत्' इत्यमरः । **रथकारस्य** कर्मकारस्य **भारं** मनसि निहितकार्यभारम् ॥

**एको हि शत्रून् समरे समर्थः प्रतिबाधितुम् ।**
**एकः कुरूनभ्यरक्षदेकश्चाग्निमतर्पयत् ॥**

**एकः कुरून्** इत्यत्र **कुरून्** दिग्विजयकाले उत्तरकुरून् ॥

**एकश्च पञ्च वर्षाणि शक्रादस्त्राण्यशिक्षत ।**
**एकः संयमनीं जित्वा कुरुणामकरोद्यशः ॥**

**एकः संयमनीम्** इत्यत्र **संयमनीं** यमपुरीम् ।।

**आत्मानं यः समाबध्य कण्ठे बद्ध्वा तथा शिलाम् ।**
**समुद्रं प्रतरन् दोर्भ्यां तत्र किं कर्ण पौरुषम् ।।**

**समुद्रं प्रतरन्** इत्यत्र प्रतरन्निव यस्त्वं वर्तसे, हे कर्ण **तत्र** त्वयि किं पौरुषमस्ति । न किञ्चिदपीत्यर्थः ।।

**अस्माभिरेव निकृतो वर्षाणीह त्रयोदश ।**
**सिंहः पाशविर्निर्मुक्तो न नः शेषं करिष्यति ।।**

**अस्माभिरेव निकृत** इत्यत्र निकृत्या कपटेन जितः ।।

## सप्तचत्वारिंशोऽध्यायः

**प्राप्य द्यूतेन को राज्यं क्षत्रियः स्तोष्टुमर्हसि ।**
**यथावृत्तं सरुपेण यथान्यः प्राकृतो जनः ।।**

**तथाऽधिगम्य वित्तानि को विकत्थेद्विचक्षणः ।**
**न चानृते योगविधिं चरन् वैतण्डिको यथा ।।**

**यथावृत्तं सरूपेण** इत्यत्र अन्यः **प्राकृतः** कृपणो जनः **यथावृत्तं** स्वनीचवर्तनमनतिक्रम्य **सरूपेण** तस्य वृत्तस्य समानेन नानाविकृतरूपेण धनमधिकमिच्छति । तथा तेन नीच-जनयोग्यद्यूतेन अनृते योगविधिं उपायत इति कल्पनां **वैतण्डिकः** वितण्डावादी ।।

**कुलमेषां महत्कृत्तं सारार्थी चन्दनं यथा ।**
**क्षुद्रं कर्म समास्थाय तत्र किं विदुरोऽब्रवीत् ।।**

**कुलमेषाम्** इत्यत्र एषां पुण्यकर्मणां कुरूणाम् ।।

**नाक्षान् क्षिपति गाण्डीवं न कृतं द्वापरं न च ।**
**ज्वलतो निशितान् बाणांस्तांस्तात् क्षिपति गाण्डिवम् ।।**

**न कृतं द्वापरं न च** इत्यत्र **कृतं** भवद्द्यूतकर्मणः प्रतिकर्म न क्षिपति शकुनिं भवच्छकुनिवत् कश्चन शकुनिं च न क्षिपति ।।

## अष्टचत्वारिंशोऽध्यायः

**धार्तराष्ट्रोऽपि दुर्बुद्धिः पश्यन्नपि धनञ्जयम् ।**
**नैव पश्यति नाघ्राति मन्दः क्रोधवशं गतः ।।**

**नैव पश्यति नाघ्राति** इत्यत्र **नाघ्राति** अर्जुनकीर्तिसौरभं नाघ्राति ।।

**आचार्य एव क्षमतां शान्तिरत्र विधीयताम् ।**
**पश्यतो हि गुरोर्मत्स्यान् निवृत्तं कोपकारितम् ।।**

**पश्यतो हि गुरोः** इत्यत्र **मत्स्यान्** प्रतिभटतया उपस्थितान् मत्स्यान् पश्यतः गुरोः कोपः कारितो येन तत् **कोपकारितं** कर्णे कोपकरणमित्यर्थः, निवृत्तम् । युद्धार्थे वैरिषु सन्नद्धेषु सत्सु अन्तःकलहस्य नायं काल इति भावः ।।

**उक्तं दुर्योधनेनापि पुरस्ताद्वाक्यमीदृशम् ।**
**तदनुस्मृत्य गाङ्गेय यथावद्वक्तुमर्हसि ।।**

**पुरस्ताद्वाक्यमीदृशम्** इत्यत्र **ईदृशम्** अज्ञातवासकालः पूर्णे नाभूदितीदृशम् ।।

## एकोनपञ्चाशोऽध्यायः

**तेषां कालातिरेकेण ज्योतिषां च व्यतिक्रमात् ।**
**पञ्चमे पञ्चमे वर्षे द्वौ मासावधिमासकौ ।।**

**एषामभ्यधिका मासाः पञ्च च द्वादश क्षपाः ।**
**त्रयोदशानां वर्षाणामिति मे वर्तते मतिः ।।**

**तेषां कालातिरेकेण** इत्यत्र तेषां सूर्यादिज्योतिषां **व्यतिक्रमात्** त्रिंशद्दिनैः राशितो राश्यन्तरगमनमिति सामान्यन्यायमतिक्रम्य पुनर्दिनद्वयानन्तरं राश्यन्तरे यत्सङ्क्रमणं सोऽयं व्यतिक्रमः, तस्मात् **कालातिरेकेण** कालस्याभिवृद्ध्या **पञ्चमे पञ्चमे वर्षे**

**द्वौ मासौ** । सार्धवर्षद्वये एकोऽधिमासः, पुनः सार्धवर्षद्वये अपरोऽधिमास इति द्वौ मासावधिमासकौ । तेषां लोकरीत्या अधिकमासैः सह त्रयोदशानां वर्षाणां पञ्च अधिमासाः, दशवर्षाणां चत्वारः, पुनः सार्धवर्षद्वयस्य एको मासः, एवं सार्धद्वादशवर्षाणां पञ्च अधिकमासाः । पुनरुर्वरितषण्मासानां **द्वादश क्षपाः** । क्षपापदेन त्रिंशद्घटिकात्मकमर्धदिनमुच्यते । सम्पूर्णाः षड् दिवसा इति यावत् तस्मात् आपातदर्शिनः त्रयोदशवर्षाणां षड्दिनाधिकपञ्चमासैर्न्यून-तामाशङ्कन्ते । विवेकिनस्तु त्रयोदशवर्षान्तर्गतषड्दिनाधिकपञ्चमासान् बहिष्कृत्य त्रिंश- त्त्रिंशद्दिनात्मकद्वादशद्वादशमासानां एकैकः संवत्सर इति षड्दिनाधिकपञ्चमासन्यून-त्रयोदशवर्षाण्यपि सम्पूर्णत्रयोदशवर्षाणि वर्णयन्ति । देवपितृकार्यार्थसाधिकमाससंव-त्सरानुसरणेऽपि स्वोक्तनियमरक्षणाय पौर्णमासीतः पौर्णमासीपर्यन्तमेको मास इति चान्द्रमासानुसरणेनैव कृतकृत्यत्वादिति भावः ॥

**सर्वे पञ्च महात्मानः सर्वे धर्मार्थकोविदाः ।**
**येषां युधिष्ठिरो राजा कस्माद्धर्मे परायथुः ॥**

**कस्माद्धर्मे परायथुः** इत्यत्र **परायथुः** पराजयं प्राप्नुयुः । जयिधातोर्भूधातोश्च पराभवार्थ-कपरेत्युपसर्गयोगवत् व्यासानुशासनात् यातेरपि तस्योपसर्गस्य योगो द्रष्टव्यः ॥

**यश्चानृत इति ख्यायेत् स च गच्छेत् पराभवम् ।**
**वृणुयुर्मरणं पार्था नानृतत्वं कथञ्चन ॥**

**यश्चानृत इति ख्यायेत्** इत्यत्र तावुभौ लोके स्त इति योग्यपदाध्याहारेणान्वयः ॥

**न हि पश्यामि सङ्ग्रामे कदाचिदपि कौरव ।**
**एकान्तसिद्धिं राजेन्द्र सम्प्राप्तश्च धनञ्जयः ॥**

**एकान्तसिद्धिं** नियमेन कार्यसिद्धिम् ॥

**तस्माद्यद्दानचरितं कर्म वा धर्मसंहितम् ।**
**क्रियतामाशु राजेन्द्र सम्प्राप्तश्च धनञ्जयः ॥**

**तस्माद्यद्दानचरितम्** इत्यत्र **दानचरितं** पाण्डवानामर्धराज्यप्रदानस्य **चरितं** आचरणं वा । **धर्मसंहितं** क्षेत्रधर्मेण **कर्म** युद्धकर्म वा ।।

**तद्वाक्यं न कृतं तेन द्रोणेनोक्तं महात्मना ।**
**तथाहि कृतवान् राजा कौरवाणामनन्तरम् ।।**

**तद्वाक्यं न कृतं तेन** इत्यत्र **तद्वाक्यं** राज्यं देहीति पूर्वोक्तं वाक्यम् । **कौरवाणामनन्तरम्** इत्यत्र कौरवाणां राजा यत् युद्धकर्म कुरुष्वेत्यनन्तरं तथा कृतवान् हीति योजना ।।

**दिव्यगन्धं समादाय वायुस्तत्राभिगच्छति ।**
**प्रकाशं त्रिदिवं सर्वादर्शनीयमदृश्यत ।।**

**प्रकाशं त्रिदिवं सर्वादर्शनीयम्** इत्यत्र **त्रिदिवं** स्वर्गस्य ।।

**तत्र देवाः समारुह्य तं दिव्यं सर्वतः प्रथम् ।**
**अम्बरे विमलेऽतिष्ठन् प्रासादं गामगामिनम् ।।**

**प्रासादं गामगामिनम्** इत्यत्र यत्र देवानां **गामः** गमनं तत्र गच्छतीति **गामगामी** तम् ।।

## पञ्चाशोऽध्यायः

**ततोऽभ्यवादयत् पार्थो भीष्मं शान्तनवं कृपम् ।**
**द्वाभ्यां द्वाभ्यां तथाऽऽचार्यं द्रोणं प्रथमतः क्रमात् ।।**

**द्वाभ्यां द्वाभ्यां तथाऽऽचार्यम्** इत्यत्र द्वाभ्यां द्वाभ्यां शराभ्याम् ।।

**इमौ बाणावनुप्राप्तौ पादयोः प्रत्युपस्थितौ ।**
**बन्धुराग्रनिपातौ मे चित्रपुङ्खावजिह्मगौ ।।**

**बन्धुराग्रनिपातौ** इत्यत्र **बन्धुरौ** स्नेहबन्धनशीलौ **अग्रनिपातौ** ययोस्तौ ।।

## एकपञ्चाशोऽध्यायः

**परिक्षिप्य गवां यूथमत्र योत्स्ये सुयोधनम् ।**
**गच्छन्ति सत्वरा गावः सगोपाः परिमोचय ।।**

**परिक्षिप्य गवां यूथम्** इत्यत्र **परिक्षिप्य** परितः परहस्तादपहृत्य ।।

**तेषां नैवाभियाने च नाभियानेऽभवन्मतिः ।**
**शीघ्रतामेव पार्थस्य पूजयन्तस्तु विस्मिताः ।।**

**तेषांनैवाभियानेच** इत्यत्र **अभियाने** पार्थेप्रत्यभिगमने, **नाभियाने** अभियानादन्यस्मिन् परावृत्य गमने ।।

**चन्द्रावदातं सामुद्रं कुरुसैन्यभयङ्करम् ।**
**ततः शङ्खमुपाध्मासीद्द्विषतां रोमहर्षणम् ।।**

**सामुद्रं** समुद्रोत्पन्नम् ।।

**ऊर्ध्वं पुच्छं विधून्वाना रेभमाणाः समन्ततः ।**
**गावः सवत्साः संत्रस्ता निवृत्ता दक्षिणां दिशम् ।।**

**रेभमाणाः समन्तत** इत्यत्र 'रिभु शब्द' इति धातोः **रेभमाणाः** क्रन्दन्त्यः ।।

## द्विपञ्चाशोऽध्यायः

**ध्वजाग्रे दृश्यते यत्र बालसूर्यसमप्रभा ।**
**दुर्जयः सर्वसैन्यानां देवैरपि सवासवैः ।।**

**बालसूर्यसमप्रभा** इत्यत्र **बालस्य** सौवर्णसिंहपुच्छस्य **सूर्यसमप्रभा** सूर्यसमकान्तिः ।।

## त्रिपञ्चाशोऽध्यायः

**पश्यत्वाचार्यपुत्रो मां अजुर्नेनापरं सह ।**
**युध्यमानं सुसंयुक्तं जयो वै मय्यवस्थितः ।।**

**अर्जुनेनापरं सह** इत्यत्र अर्जुनेन सह **अपरम्** अन्यं सन्तम् ॥

**न रथानां न चाश्वानां न ध्वजानां न वर्मिणाम् ।**
**अभिविद्धैः शितैर्बाणैरासीद्ध्यङ्गुलिरन्तरम् ॥**

**अभिविद्धैः शितैर्बाणैः** इत्यत्र अतिशयेन **विद्धं** वेधो येभ्यस्तैः, भावे क्तप्रत्यये कृते विद्धमिति वेधो लभ्यते । बाणैः रथानां अश्वादिभ्यः अनन्तरं **विद्धं** वेधो नासीत्, किन्तु युगपदेव । एवमुत्तरत्रापि योजना ॥

**दुर्गे विषमजाते वा स्थले निम्ने तथा क्षितौ ।**
**न च रुध्येद्गतिस्तस्य रथस्य मनसो यथा ॥**

**न च रुध्येद्गतिः** इत्यत्र रोधं प्रतिबन्धं न प्राप्नुयात् ॥

**ये ह्यर्जुनबलत्रस्ताः परिपेतुर्दिशो दश ।**
**रथाङ्गदेशमुत्सृज्य पार्थाच्छिन्नयुगा हयाः ॥**

**रथाङ्गदेशमुत्सृज्य** इत्यत्र **रथाङ्गदेशं** रथचक्रप्रदेशम् ॥

**चक्षुर्नसि विषाणेषु दन्तवेष्टेषु च द्विपान् ।**
**मर्मस्वन्येषु चाहत्य तथा निघ्नन् गजोत्तमाः ॥**

**चक्षुर्नसि विषाणेषु** इत्यत्र **चक्षुर्नसि** चक्षुर्नसोः । प्राण्यङ्गत्वात् द्वन्द्वैकवद्भावः ॥

**खगयानाभिसंवीतैः संविष्टैः खगमैरिव ।**
**अर्जुनस्य खमावव्रे लोहितप्रवणैः खगैः ॥**

**खगयानाभिसंवीतैः** इत्यत्र खगानां **यानानि** गमनसाधनानि पत्राणि यात्यनेनेति व्युत्पत्त्या यानपदस्य निष्पन्नत्वात्, तैः **संवीतैः** सम्बद्धैरिति शराणां विशेषणम् । **संविष्टैः** वनं प्रविष्टैः **खगमैः** पक्षिभिरिव **लोहितेषु** रक्तेषु **प्रवणैः** नम्रैः **खगैः** गच्छन्तीति खगाः शराः तैः ॥

**सकृतेऽवकृतं शेकुः रथमभ्यसितुं परे ।**
**अनभ्यस्तः पुनस्तैर्हि रथः सोऽभिपपात तान् ।।**

**सकृतेऽवकृतं शेकुः** इत्यत्र **सकृते** कृतेन युद्धकर्मणा सहिते पार्थे सति **अवकृतं** स्वाधोभागे कृतं **रथम्** अर्जुनरथं **अभ्यसितुम्** अभितो निरसितुं परे न शेकुरिति योजना । तैः **अनभ्यस्तः** अभितोऽप्यनिराकृतः स रथः **अभिपपात** शत्रुसेनं प्रत्येव पपात ।।

**तच्छारा द्विः शरीरेषु यथा च न ससञ्जिरे ।**
**द्विधाऽनीकेषु बीभत्सोर्न ससज्ज रथस्तथा ।।**

**तच्छरा द्विः शरीरेषु** इत्यत्र **तच्छराः** पार्थशराः **शरीरेषु** वैरिशरीरेषु यथा **द्विः** द्विवारं न ससज्जिरे, तथा बीभत्सोः रथोऽपि **अनीकेषु** वैरिसेनासु द्विधा न ससज्ज । एकवारं परावृत्य पुनर्वैरिसेनायां न सक्तो भवति । किन्तु पार्थशरवत् अनिवृत्त एव अग्रे गच्छतीति भावः ।।

**दिशोऽनुभ्रमतः सर्वा सव्यदक्षिणमस्यतः ।**
**सततं दृश्यते युद्धे सायकासनमण्डलम् ।।**

**सायकासनमण्डलम्** इत्यत्र सायकासनं शरासनं तस्य मण्डलं मण्डलाकारः सततं दृश्यते ।।

**ओषधीनां शिरांसीव कालपङ्क्तिसमन्वयात् ।**
**अवनेमुः कुरूणां हि शिरांस्यर्जुनजाद्भयात् ।।**

**कालपङ्क्तिसमन्वयात्** इत्यत्र कालपङ्क्तेः समन्वयात् बहुकालसम्बन्धाख्यपरिपाकात् ।।

**चकार चार्जुनीकत्वं द्विमुखान्रुषितानपि ।।**

**चकार चार्जुनीकत्वम्** इत्यत्र अर्जुनीकत्वम् अत्रार्जुनस्तत्रार्जुन इत्यर्जुनमयत्व-मित्यर्थः ।।

## चतुष्पञ्चाशोऽध्यायः

तेषां धनुर्ज्याकृतनैकतन्त्रीं प्रासोपवीणां शरसङ्गकोणाम् ।
कराग्रयन्त्रां स्थिरचापदण्डां वीणामुपावादयदाशु पार्थः ।।

**शरसङ्गकोणाम्** इत्यत्र 'कोणो वीणादिवादनम्' इत्यभिधानात् **कोणः** वीणावादनशलाका ।।

ततः स विद्धो भरतर्षभेण बाणेन कायावरणातिगेन ।
गतासुराजौ निपपात राजन् नगो नगाग्रादिव वातरुग्णः ।।

**गतासुराजौ निपपात** इत्यत्र **गतासुः** मूर्च्छां प्राप्तः विकर्णः ।।

तयोरमेघान् सहतोः शरौघान् अस्त्रज्ञयोरास महान् विमर्दः ।
राहुप्रमुक्ताविव चन्द्रसूर्यौ क्षणान्तरेणानुददर्श लोकः ।।

**सहतोः शरौघान्** इत्यत्र शरौघान् **सहतोः** सहमानयोः तयोः ।।

अशेरतावृत्य महीं समग्रां पार्थेषुमार्गेषु हता द्विपेन्द्राः ।
हिरण्यकक्ष्याः शरजालचित्रा यथा नगाः पावकजालनद्धाः ।।

**पार्थेषुमार्गेषु** इत्यत्र पार्थस्य इषूणां मार्गेष्वित्यर्थः ।।

तं शत्रुसेनाङ्गनिबर्हणानि कर्माणि कुर्वाणममानुषाणि ।
वैकर्तनः पूर्वममृष्यमाणः समार्पयल्लक्ष्यमिवाशु पार्थम् ।।

**पूर्वममृष्यमाण** इत्यत्र **पूर्वं** पराभवम् ।।

## पञ्चपञ्चाशोऽध्यायः

जितं वैकर्तनं दृष्ट्वा पार्थो वैराटिमब्रवीत् ।
स्थिरो भव त्वं सङ्ग्रामे जयोऽस्माकं नृपात्मज ।।

यावच्छङ्खमुपाध्मास्ये द्विषतां रोमहर्षणम् ।
अविक्लवमसम्भ्रान्तमव्यक्तहृदयेक्षणम् ।।

**अविक्लवम्** इत्यादि क्रियाविशेषणम् । यथा भवति तथा स्थिरो भवेति पूर्वेण सम्बन्धः ।।

**आचार्यं प्रापयेदानीं ममोत्तर महारथम् ।**
**वीर्यं च तस्य सङ्ग्राममद्भुतं मम पश्य च ।।**

**अद्भुतं मम पश्य च** इत्यत्राद्भुतं वीर्यं च पश्येत्यन्वयः ।।

**एको दीर्घ इवापाङ्गात् प्रदृश्यन्ते महाशराः ।**
**आकाशे समदृश्यन्त हंसानामिव पङ्क्तयः ।।**

**एको दीर्घ इवापाङ्गात्** इत्यत्र पुङ्खानुपुङ्खतया निरन्तरशरागमनात् दीर्घ एकः शर इव **अपाङ्गात्** द्रोणकटाक्षमनुसृत्य महाशराः **प्रदृश्यन्ते** इति योजना ।।

**अभीक्ष्णं सन्दधानस्य बाणानुत्सृजतस्तथा ।**
**नान्तरं ददृशे किञ्चित् पार्थस्य पततोऽपि च ।।**

**पार्थस्य पततोऽपि च** इत्यत्र **पततः** दिशि दिशि निपततः ।।

## सप्तपञ्चाशोऽध्यायः

**श्रुत्वा गाण्डीवनिर्घोषं विष्फूर्जितमिवाशनेः ।**
**त्रस्तानि सर्वसैन्यानि व्यचलीयन्त भागशः ।।**

**व्यचलीयन्त भागश** इत्यत्र व्यलीयन्त चेति पदयोजना ।।

**प्रावर्तयन्नदीं घोरां पिशाचगणसेविताम् ।**
**अपारामनवारां च रक्तोदां सर्वतो वृताम् ।।**

**अपारामनवारां च** इत्यत्र 'पारावारे परार्वाची तीरे पत्रं (त)यदन्तरम्' इत्यमरः । पारः परतीरं ततोऽन्यत्तीरमवारः तदुभयरहितमित्यर्थः ।।

**अस्याददानस्य शरान् सन्दधानस्य मुञ्चतः ।**
**विकर्षतश्च गाण्डीवं न किञ्चिद्ददृशेऽन्तरम् ।।**

**अस्याददानस्य शरान्** इत्यत्र 'असु निरसन' इति धातोः अस्य एकं शरं प्रयुज्य पुनः शरानाददानस्येति योजना ।।

## एकोनषष्टितमोऽध्यायः

**अयं जिष्णुरुदाहृत्य शितधारेण कार्मुकम् ।**
**न्यकृन्तद्गृध्रपत्रेण शातकुम्भपरिष्कृतम् ।।**

**अयं जिष्णुरुदाहृत्य** इत्यत्र उदाहृत्य तूणीरादूर्ध्वमाहृत्य ।।

## षष्टितमोऽध्यायः

**बहुभिर्निशितैर्बाणैर्विविधैर्लोमवापिभिः ।**
**दुर्द्रवाः प्रत्यवस्थाय प्रत्यविध्यन् धनञ्जयम् ।।**

**दुर्द्रवाः प्रत्यवस्थाय** इत्यत्र **दुर्द्रवाः** द्रवः द्रवणं पलायनं तद्रहिताः ।।

**सर्वे शान्तिपरा योधाः स्वचित्तं नाभिजज्ञिरे ।**
**हस्तिनोऽश्वाश्च वित्रस्ता व्यवधीयन्त सर्वशः ।।**

**व्यवधीयन्त सर्वश** इत्यत्र **व्यवधीयन्त** व्यवधानं प्राप्नुवन् ।।

**पुरा ह्येष न मे शब्दः साधीभवति पृष्ठतः ।।**

**पुरा ह्येष न मे शब्द** इत्यत्र **पुरा** युद्धात्पूर्वं **पृष्ठतः** भटानां पृष्ठतः एष **शब्दः** इदं करोमीत्यादिशब्दः मे न **साधीभवति** साधीयान्न भवति ।।

**नैषोऽभयं न निर्यातो महात्मा पाकशासनिः ।**
**नैवं भीता निवर्तन्ते न पुनर्गाढवेदनाः ।।**

**नैषोऽभयं न निर्यात** इत्यत्र **एषोऽर्जुनः** अभयं यथा भवति तथा **निर्यातः** पुरान्निर्यातो नेति न ।।

**दिष्ट्या दुर्योधनो मुक्तो दिष्ट्या गावः पलायिताः ।**
**मुक्तं मुक्त्वैव सङ्ग्रामे किं रणेन करिष्यसि ।।**

**मुक्तं मुक्त्वैव सङ्ग्राम** इत्यत्र **मुक्तं** दुर्योधनं मुक्त्वैव गावः पलायिता इति सम्बन्धः ।।

## एकषष्टितमोऽध्यायः

**शतह्रदां जृम्भमाणां मेघस्थां प्रावृषीव च ।**
**सुवर्णपृष्ठं गाण्डीवं पश्यन्तु कुरवो मम ।।**

**शतह्रदां जृम्भमाणाम्** इत्यत्र 'शतह्रदा ह्रादिनी तटिद्विद्युत्' इत्यभिधानात् **शतह्रदा** विद्युत् ।।

**एवमाश्वासितस्तेन वैराटिः सव्यसाचिना ।**
**अगाहत रथानीकं भीष्मं भीष्मस्य वाजिभिः ।।**

**भीष्मं भीष्मस्य वाजिभिः** इत्यत्र **भीष्मं** भयङ्करं भीष्मस्य रथानीकं **वाजिभिरगाहत** इति सम्बन्धः ।।

**रथसिंहमनाक्षिप्य जिगीषन्तं परान् रणे ।**
**अभ्यधावत् तदैवोग्रो ज्यां विकर्षन् धनञ्जयः ।।**

**रथसिंहमनाक्षिप्य** इत्यत्र **रथसिंह** रथश्रेष्ठं अनाक्षिप्य **अनाक्षिप्य** अस्थापयित्वेत्यर्थः ।।

**ततः पार्थमुपाद्रुत्य दुस्सहः सविविंशतिः ।**
**अवाकिरच्छरैस्तीक्ष्णैः परीप्सन् भारतं रणे ।।**

**परीप्सन् भारतं रण** इत्यत्र **भारतं** सैन्यं **परीप्सन्** परिपातुमिच्छन् ।।

**ततः प्रहस्य बीभत्सुः तदैन्द्रं पञ्चवार्षिकम् ।**
**अस्त्रमादित्यसङ्काशं गाण्डीवे समयोजयत् ।।**

**तदैन्द्रं पञ्चवार्षिकम्** इत्यत्र चत्वारो दिशः ऊर्ध्वं चेति पञ्चासु दिक्षु **वार्षिकं** शरवर्षसम्बन्धि शरवर्षणशीलमिति यावत् । **पञ्चे** प्रपञ्चे शरवर्षणशीलं वा ।।

## द्विषष्टितमोऽध्यायः

**दक्षिणामेव तु दिशं हयानुत्तर वाहय ।**
**पुरार्थी च भवत्येषामयं शब्दोऽत्र तिष्ठताम् ॥**

**दक्षिणामेव तु दिशम्** इत्यत्र **दक्षिणां** सेनाया दक्षभागे विद्यमानां दिशम् । अत्र तिष्ठतामेषां कुरूणां परार्थी स्वपुरं प्रति गमनार्थी **अयं शब्दः** पुरं गच्छाम इति शब्दः भवति । तस्मात् तान् निरोद्धुं सेनाया दक्षिणभागे रथं वाहयेति योजना ॥

**इदं त्विदानीमनयत् कुरूणां शिवं धनुः शत्रुनिबर्हणं च ।**
**अत्याशुगं वेगवदाशुकर्तृ अवारणीयं महते रणाय ॥**

**इदं त्विदानीमनयत् कुरूणाम्** इत्यत्र इदं धनुः कुरूणां **शिवं** शोभनं अनयत् अहरत् ॥

**मन्ये मया तात कृतं च कार्यं यदर्जुनोऽस्माभिरिहाद्य दृष्टः ।**
**भूयो वनं गच्छतु सव्यसाची पश्यामि पूर्णं समयं न तेषाम् ॥**

**मन्ये मया** इत्यत्र मया युद्धं कुतः कार्यमिति मन्ये ॥

**युधिष्ठिरस्यास्मि निदेशकारी पार्थस्तृतीयो युधि च स्थिरोऽस्मि ।**
**तदर्थमाहृत्य मुखं प्रयच्छ नरेन्द्रवृत्तं स्मर धार्तराष्ट्र ॥**

**तदर्थमाहृत्य** इत्यत्र **तदर्थं** धर्मराजस्य द्रव्यम् ॥

**मोघं तवैतद्भुवि नामधेयं दुर्योधनेतीह कृतं पुरस्तात् ।**
**दुर्योधनस्त्वं प्रथितोऽसि नाम्ना दुर्योधनः सन्निकृतिप्रधानः ॥**

**दुर्योधनः सन्निकृतिप्रधान** इत्यत्र निकृतिप्रधानः सन् त्वं **दुर्योधनः** नाममात्रेण दुर्योधनः ॥

## चतुषष्टितमोऽध्यायः

**आहूयमानस्तु स तेन सङ्ख्ये महात्मना वै धृतराष्ट्रसूनुः ।**
**निवर्तितश्चापि गिराङ्कुशेन गजो यथा मत्त इवाङ्कुशेन ।।**

**गजो यथा मत्त इव** इत्यत्र तद्यथेति प्रश्नः ।।

## पञ्चषष्टितमोऽध्यायः

**आक्रान्तभोगस्तेजस्वी धनुर्वक्र इवोरगः ।**
**रथं रथेन सङ्गम्य योधयामास पाण्डवम् ।।**

**धनुर्वक्र इवोरग** इत्यत्र धनुराकारेण वक्रः **धनुर्वक्रः** ।।

**ततो विसञ्ज्ञानि परेषु पार्थः**
**संस्मृत्य सन्देशमथोत्तरायाः ।**
**निर्याहि वाहानिति मात्स्यपुत्र-**
**मुवाच यावत् कुरवो विसञ्ज्ञाः ।।**

**निर्याहि वाहान्** इत्यत्र वहन्ति रथिन इति **वाहाः** परसेनारथाः तान् प्रति ।।

## षट्षष्टितमोऽध्यायः

**भजन्तु सर्वा गणिकाः सुतं मे**
**नार्यश्च कन्याः सहकन्यकाश्च ।**
**स्वलङ्कृतास्ताः सुभगाः सुवेषाः**
**पुत्रस्य पन्थानमनुव्रजन्तु ।।**

**कन्याः सहकन्यकाश्च** इत्यत्र दासीभूतकन्याभिः सहिताः **कन्याः** राजकन्याः ।।

**घण्टापणवकाः शीघ्रं मत्तमारुह्य कुञ्जरम् ।**
**शृङ्गाटकेषु सर्वेषु समाख्यान्तु जयं मम ।।**

**शृङ्गाटकेषु सर्वेषु** इत्यत्र 'शृङ्गाटकचतुष्पथे' इत्यमरः शृङ्गाटकेषु चतुष्पथेषु ।।

**वन्दिप्रवादाः पणवादिकश्च**
**तथैव वाद्यानि च वंशशब्दाः ।**
**सकंसतालं मधुरं च गीत-**
**मादाय नार्यो नगरान्निरीयुः ।।**

**सकंसतालम्** इत्यत्र **सकंसतालं** कांस्यातालेन सहितम् ।।

## सप्तषष्टितमोऽध्यायः

**ततः स करिभोगाभं बाहुमुत्क्षिप्य दक्षिणम् ।**
**विराटः प्राहनत् क्रुद्धः कर्णमाश्रित्य दक्षिणम् ।।**

**ततः स करिभोगाभम्** इत्यत्र भुज्यते अनेनेति **भोगः** हस्तिहस्तः । करभोगमिति पाठे **करो** हस्तिकरः **भोगः** सर्पशरीरम् ।।

## अष्टषष्टितमोऽध्यायः

**सर्वेषां परितुष्टाश्च प्रशस्य च मुहुर्मुहुः ।**
**असङ्गतिना तेन विमानेनाशुगामिना ।।**

**सर्वेषां परितुष्टाश्च** इत्यत्र **सर्वेषां** अर्जुनकृतसकलयुद्धकर्मणाम् ।।

**नगरे तुमुलः शब्दो रेणुश्चाक्रमते नभः ।**
**किं नु खल्वपयातास्ते कुरवो नगरं गताः ।।**

**ते चैव निर्जिताऽस्माभिर्महेष्वासाः सचेतसः**
**आमुञ्च कवचं वीर चोदयस्व च वाजिनः ।।**

**किं नु खल्वपयाता** इत्यत्र पुरं गतास्ते कुरवः **अपयाताः** परावृत्य आगताः किं नु । **सचेतसः** ते कुरुसेनामहेष्वासाः **आभिः** अस्मदीयसेनाभिः न जिता एव **स्म** न जिता एव किम् । अव्ययानामनेकार्थत्वात् स्मशब्दः किमुशब्दार्थे ।।

**उत्तरामत्र पश्यामि सखीभिः परिवारिताम् ।**
**अनीकिन्यः प्रदृश्यन्ते हस्तिनोऽश्वाश्च वर्जिताः ।।**

**अश्वाश्च वर्जिता** इत्यत्र **वर्जिताः** युद्धसन्नाहवर्जिताः ।।

## एकोनसप्ततितमोऽध्यायः

**सभाज्यमानः पौरैश्च स्त्रीभिर्जानपदैरपि ।**
**आसाद्यान्तः पुरद्वारं पित्रे सम्प्रत्यहारयत् ।।**

**पित्रे सम्प्रत्यहारयत्** इत्यत्र **सम्प्रत्यहारयत्** द्वास्थं प्रेषयामास ।।

**पदं पदसहस्रेण यश्चरन् नापराध्नुयात् ।**
**तेन कर्णेन ते तात कथमासीत् समागमः ।।**

**पदं पदसहस्रेण** इत्यत्र प्रतिभटानां पदसहस्रेण सह एकं पदं चरन् तैरितस्ततः पदसहस्रे कृते सति स्वयमेकेनैव पदेन तिष्ठन् **नापराध्नुयात्** 'धूञ् कम्पन' इति धातोः कम्पनं प्राप्नुयात्, महाधैर्यवानिति भावः । यद्वा अन्येषां पदसहस्रेण यः प्राप्यो देशः, तं एकपदेन चरन् न पराध्नुयात्, महावेगवानिति भावः ।।

**व्यायामेन परीप्सस्व जीवितं कौरवात्मज ।**
**न मोक्ष्यसे पलायंस्त्वं लोके युद्धमना भव ।।**

**व्यायामेन परीप्सस्व** इत्यत्र **व्यायामेन** परावृत्य गमनेन ।।

**सचिवैः संवृतो राजा भीष्मद्रोणकृपादिभिः ।**
**ततो मे तोमहर्षोऽभूत् दूरात् स्तम्भश्च मेऽभवत् ।।**

**दूरात् स्तम्भश्च मेऽभवत्** इत्यत्र **स्तम्भः** मनोवाक्कायादीनां स्तम्भनम् ।।

**दुर्योधनं च बलवान् बाणैर्विव्याध सप्तभिः ।**
**तं स विद्ध्वा हयांश्चास्य शुक्लवस्त्रमथाददे ।।**

**शुक्लवस्त्रमथाददे** इत्यत्र **अथ** भीष्मजयानन्तरं **शुक्लवस्त्रं** शुक्ले वस्त्रे यस्य तं द्रोणं कृपं च **आददे** । 'दो अवखण्डन' इति धातोः शरेण खण्डयामास । यद्वा युद्धायाददे ।। ५८ ।।

## सप्ततितमोऽध्यायः

**तस्मात् प्रहाराद्रुधिरस्य बिन्दून् पश्यन् न चेमे पृथिवीं स्पृशेयुः ।**
**इति प्रतिच्छाद्य मुखं ततोऽहं मन्युं नियच्छनुपतिष्ठ आसम् ।।**

**उपतिष्ठ आसम्** इत्यत्र **उप** समीपे तिष्ठतीत्युपतिष्ठः ।।

**विराटमद्यैव निहत्य शीघ्रं सपुत्रपौत्रं सकुलं ससैन्यम् ।**
**योक्ष्यामहे धर्मसुतं च राज्ये अद्यैव शीघ्रं त्वरतैष मात्स्यः ।।**

**त्वरतैष मात्स्य** इत्यत्र **त्वरता** वेगवता एष धर्मराजः **मात्स्यः** मत्स्यविषयाधिपतिः क्रियतामिति योग्यपदाध्याहारेण सम्बन्धः ।।

**राजा कुरुणां च युधिष्ठिरोऽयं मात्स्येषु राजा भवतु प्रतीतः ।**
**तस्याद्य देहं शतधा भिनद्मि कुम्भं घनेनेव यथाम्बुपूर्णम् ।।**

**कुम्भं घनेनेव** इत्यत्र **घनेन** दृढेन दण्डेन ।।

## त्रिसप्ततितमोऽध्यायः

**तस्मादामन्त्रये त्वाऽद्य पुत्रार्थं मे विशाम्पते ।**
**शुद्धं जितेन्द्रियम्मन्यं तस्याः शुद्धिः कृता मया ।।**

**स्नुषायां दुहितुर्वापि पुत्रे चात्मनि वा पुनः ।**
**अतिशङ्कां न पश्यामि तेन शुद्धिर्भविष्यति ।।**

**शुद्धं जितेन्द्रियम्मन्यम्** इत्यत्र शुद्धं जितेन्द्रियम्मन्यं त्वां मे पुत्रार्थमिमामामन्त्रये । तत्र एतादृशकार्ये कृते सति शुद्धिः ममापि शुद्धिः कृता । **पुत्रे** स्वसृमात्रादिविषये, **आत्मनि** स्वस्मिन् स्नुषायाः दुहितुर्वा विषये अतिशङ्कां न पश्यामीति योजना ।।

## पञ्चसप्ततितमोऽध्यायः

गायनाख्यानशीलाश्च नटा वैतालिकास्तथा ।
स्तुवन्तस्तानुपातिष्ठन् सूताश्च सह मागधैः ।।

**नटा वैतालिकास्तथा** इत्यत्र **वैतालिकास्ता**लधारिणः ।। ३२ ।।

## ।। इति श्रीवादिराजतीर्थश्रीचरणकृतमहाभारतलक्षालङ्कारे विराटपर्वलक्षालङ्कारः ।।

।। श्रीकृष्णार्पणमस्तु ।।

*****

समर्पितं मया भवेत् सुमध्वनुत्तवाणिना ।
रमारमेशपादयोः प्रभञ्जनाभिधायुजा ।।

*****

# महाभारत - विराटपर्व - श्लोकार्धानुक्रमणिका

## अ

इ

## ख



## ग

## घ



## च

## छ



## ज

ज्ञ

## त

### द

## ध

## म

## ल

## ष



## स

## ह

*****

